Vol. XXIII, 1940-41
१८६२ शकाब्दस्य २३श-वर्षस्य

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—
महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)

# संस्कृत-साहित्य-परिषत्-पत्रिकाया-

## त्र्रयोदश-वर्षीया सूची

[ वर्णक्रमानुसारिणी ]

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| May, 1940 | १८६२-शकीये वैशाखे<br>२३श-वर्षस्य १म-संख्या | Vol. XXIII No. 1. |



## नववर्षे निवेदनम्

निवेशतेऽस्माभिर्नववर्षं निमित्तीकृत्य निबन्धकेभ्यः पाठकेभ्योऽन्येभ्यश्च परिषन्मन्यस्येभ्यो यथाविहितं प्रणामपरिष्वङ्गानामयप्रश्नाशीर्वचनादिकम् ।

नववर्षं च कः पदार्थ इति चिन्तयतो नो मनःसु कृतं महता विस्मयेन पदम् । स एव सौरो वैशाखमासः स एव भीष्मो ग्रीष्मर्तुः स एव सायन्तनः श्वसनताण्डवः संवत्सरमुखमलंकुरुते । तदेवेदं वैशाखात् परं ज्यैष्ठस्तत-आषाढ इति मासान्मासान्तरावर्तनं, सैवेयं सूरः सोमस्ततश्च भौम इति वारभ्रमिः, सा चेयं मेषो वृषो मिथुनश्चेति राशिराशेः परावृत्तिर्यथा प्रपितामह-तत्प्रपितामहैर्दृष्टानि न ततो मात्रयापि व्यतियन्ति । न किमपि नावीन्यमत्र नयनयोर्निपतति । तत् किमिति नववर्षं नववर्षमिति हर्षमेदुरा गिरः श्रूयन्ते ? इदमत्र सामान्यतो वक्तुं शक्यते—

यथाऽपरिमेयं ब्रह्म ध्यानगोचरं कर्तुमसमर्थैरार्यैर्मूर्तिः कल्पिता, तथैवा-परिच्छिन्नः कालो नाकलनीय इति चन्द्रसूर्यग्रहनक्षत्रगत्युपचरितः स कर्माङ्गतया लौकिक-व्यवहारनिर्वाहकतया च दिनमासवर्षादिभिर्विभक्तः । कृतविभागश्च सादिः सान्तः सोऽनुक्षणं परिणममानोऽवस्थान्तरयोगान्नवीनः

प्राचीन इत्यादिव्यपदेशभाग् भवतीति कालतत्त्वमालोचयन्तो मन्यन्ते। ततश्च कार्यार्थी नमस्यामि तमेवम्भूतं तत्प्रारम्भे—

"प्रभवविरतिमध्यज्ञानवन्ध्या नितान्तं
विदितपरमतत्त्वा यत्र ते योगिनोऽपि।
तमहमिह निमित्तं विश्वजन्मात्ययाना-
मनुमितमभिवन्दे भ-ग्रहैः कालमीशम् ॥"

विरमतु वर्षचिन्ता, वार्षिकचिन्तेदानीमापतिती कथं प्रतिविधीयेतेति पश्यामः। प्रियाः प्रबन्धकाः, एकषष्ट्युत्तराष्टादशशकाब्देन समतीतवतीयं परिषत्पत्रिका द्वाविंशतिं वर्षाणाम्। इयत्या च कालकलया पत्रिकेयं सर्वत्र सुप्रचारा सुप्रतिष्ठिता च संवृत्तेति नूनं नाविदितं भवताम्। अस्याः कृते अभ्यर्थयामहे भवतः सादरं यथावकाशं प्रकाशयोग्यानां निबन्धानामनुप्रेरणेनास्माननुग्रहीतुम्। सन्ति शतशो निबन्धास्तैस्तैर्लेखकैरनुप्रेषिताः परिषदगारेषूत्करतां दधानाः, न तान् रोचयामः, प्रलोक्यन्ते परःशताः पण्डितपञ्चाननाः येषां यशोभातिर्दिगन्तानुद्भासयन्त्यपि प्रबन्धेषु नैव पराक्रमते, न तेभ्योऽपि स्पृहयामः। ये प्रबन्धाः पत्रिकाद्वारेण द्वारान्तरेण वा प्रकाशमासादयन्तः पाठकांश्चमत्कुर्वते तानेव वयं रोचयामः; ये च पण्डितप्रकाण्डा लेखमुखेनात्मानं प्रकटयन्तः श्रोतॄन् प्रतर्पयन्ति तेभ्यश्च स्पृहयामः। अभ्यर्थयामहे चैतादृशान् निबन्धान्निबन्धकांश्च पण्डितधुरीणानस्मत्साहायकविधौ। सूचयामो वयं, ये नाम यथोक्तगुणान् निबन्धानब्दमध्यावराननुप्रेरयेयुस्तेभ्य एका पत्रिका प्रतिमासमृते मूल्यं प्रदीयेत परिषदधिकृतैः। तत् त्वरन्तां सुरसरस्वतीपरिचरणपरायणाः पत्रिकाप्रणयिन इति शम्।

---

प्रकृतिविलास-काव्ये

## समीर-समर्हणम्

( व्यतीतवर्षस्य द्वादशसंख्यातोऽनुवृत्तम् )

[ निबन्धकः—सा० भू० कृष्णमूर्ति शास्त्री ]

शमयसि दशामाशां पातुं प्रभञ्जन जृम्भितां
सरिदधिपतेस्तीरे यूनां भवत्प्रियकाङ्क्षिणाम् ।
असुलभतरैः स्त्रीणामङ्गैर्मुहुः स्फुटताङ्कितैः
श्रितजनमनःप्रीत्याधानं वदान्यकुलव्रतम् ॥३१॥

कुवलयदृशः श्यामा हर्म्यस्थलैकनिवासिनीः
सुरतविरतौ श्रान्ता वातायनैर्विवृतैर्भजन् ।
कुसुमसदृशान्यङ्गानि द्राक्सुखं परिमृज्य च
श्रममपनुदंस्तासां निद्रां ददास्यनुकम्पया ॥३२॥

नृपदुहितरः प्रत्याचख्युः पुरा भवदर्थनां
कविचन तदा क्रुध्यंस्ताभ्यस्तनूर्हि बभञ्जिथ ।
किमिदमुचितं राजर्षिस्त्वां पितापि स चक्षमे
विनयविधुरा माद्येयुः खल्वखण्डितवृत्तयः ॥३३॥

ध्वजपटसमाः क्षौमीः स्त्रीणां समीरण मन्यसे
त्यज धियमिमां क्षुद्रां साध्व्यो भवन्ति सहस्रशः ।
तव पुनरिदं संमन्वीरत्र तास्तु विचेष्टितं
श्रियमपहरेत् पातिव्रत्यं प्रधर्षितमञ्जसा ॥३४॥

किमपि कुरुषे नैवाऽऽनम्रान्शरान्मृदु संस्पृशन्
विटपिनिवहान् नैवम्भूतान् निपातयसि क्षणात् ।
स्वयमविनयं धत्से क्षोणे दिदण्डयिषुः परान्
न खलु सहते स्वीयं दोषं परत्र सुधीरपि ॥३५॥

भुवनमहितौ शौर्याम्भोधी सुतौ त्वमजीजनो
 निशिचरकुलान्युन्मूल्यैकस्तयोर्भुवि पप्रथे ।
कुरुसुतशतस्यासीदन्यो यमः स वृकोदरो
 बत समुदभूत्तादृग्वीरो न कोऽपि सुरेष्वपि ॥३६॥
परिणतफलभ्रान्त्योत्प्लुत्याग्रहीदुदितं रविं
 जननसमये त्वत्पुत्रो द्राक् पराक्रमशेवधिः ।
पवन पविनाऽऽजघ्ने शक्रः सुपर्वभिरर्चितः
 शिशुरपि गुरुर्धाम्ना यस्माद्दामि बलद्विषा ॥३७॥
प्रियसुतमभिद्रुह्यत्सु द्राक् सुसंहतवृत्तिको
 न्यविशत भवान् क्रुद्धोऽत्यन्तं महीधरकन्दरे ।
अदधत सुराः प्रेतावस्थां निरुच्छ्वसितास्ततः
 समनुनयतो ब्रह्मादीनां समान् समजीवयः ॥३८॥
दशमुखगृहेष्वन्विच्छञ्श्रीरघूत्तमभामिनीं
 वरमृगदृशः सुप्ता हन्त त्वयैव विवस्त्रिताः ।
व्यकुरुत मनागप्युद्वीक्ष्य स्वयं, नहि ते सुतः
 कपिरपि महामान्योऽद्धिक्षद् यतस्तव पद्धतिम् ॥३९॥
भुजगपतिना मूर्ध्नैकेन श्रमादपिधाय च
 प्रधृतमपि ते शक्त्या कूटं गिरेः समचालयः ।
दिवि भुवि भवत्कल्पो नान्यः प्रकम्पन ! किन्त्वहं
 विनयमधुरं वीर्यन्नास्ति त्वयीति सुहृद् ब्रुवे ॥४०॥
श्रमभरमपाकुर्वञ्छायाद्रुमैर्मृदुकम्पितैः
 परिणतफलैः स्वाद्यैर्निघ्नन् क्षुधं भुवि पातितैः ।
सरस-सलिलैस्तृष्णां मुष्णन् सरित्सरसीस्तुतैः
 श्चरसि पवनाऽऽतिथ्यं हृद्यं वनान्तमुपेयुषाम् ॥४१॥
असमकुसुमामोदैर्घ्राणं सदा परितर्पयन्-
 शिशिरपृषतानम्भोजिन्याः शनैः परितः किरन् ।

क्रममपि समं भिन्दन् दूरे स्पृशन् सुखमादरात्,
अनिल ! कलयन्नाह्लादं नः समर्हणमर्हसि॥४२॥
कुसुमितलताश्लेषाद्रम्यानुपन्नतरानपि
क्वचन समये जातावेशो भनक्षि वनस्पतीन् ।
अतिबल कथं शृङ्गारी सन्निदं न विबुध्यसे
विमृश वृजिनं दाम्पत्यस्य च्छिदा जनयेन्न किम् ॥४३॥
द्विरदसदृशा गण्डाश्मानो भवन्ति दरस्पृशो
निजबलपरिज्ञाने यत्नं त्वमेष्वपि मा कृथाः ।
यदि वितनुया ग्रामा न स्युर्महीध्रपदाश्रिताः
सपदि विपदः सूते दर्पोद्धतस्य विचेष्टितम् ॥४४॥
कति विनिरमाः संवर्तांस्त्वं प्रकंपन वेद को
न जहति पुनः संस्कारास्त्वां चिरानुभवाहिताः ।
त्वमसि रसिको यद्भावानां विपर्यसने भृशं
पुलिनमभवत्स्रोतो दृष्टस्तयोश्च विपर्ययः ॥४५॥
वनमुदभवन्नव्यं भव्यं दृशोः क्वचन द्रुमैः
क्वचन सिकताकान्तारो द्राक्पिधाय महाटवीम् ।
तदिदमखिलं त्वत्कृत्यं हि व्यनक्ति विशेषतः
सकलजगतामीशस्यान्तर्नियामकतां मुहुः ॥४६॥
विभुरपि भवान् प्राणाद्यात्मा शरीरिषु चेष्टसे
प्रतिनिधिपदं प्रेमस्थानं वहन् परमात्मनः ।
त्वयि सति परो जीवस्तिष्ठत्यपैति विपर्यये
करणनिवहैः कार्यैर्वान्यैः फलं नहि केवलैः ॥४७॥

# ग्रन्थनिकषः

[ परीक्षकः—श्रीक्षितीशचन्द्रशास्त्री ]

**Sanskrit Poetesses** ( Part A ) with a Supplement on Prakrit Poetesses—edited with critical notes etc. by Jatindra Bimal Chaudhury, Ph. D. (London), English Introduction by Rama Chaudhury, M. A., D. Phil. (Oxon), Foreword by Dr. L. D. Barnett, C. B., M. A., D. Litt., F. B. A. सम्पादकेन 3, Federation Street, Calcutta इत्यतः प्रकाशितम्। मूल्यं रूप्यकपञ्चकम्।

अत्र खलु सुमनोहरे ग्रन्थे सुभाषितादिपुस्तकेषु प्रकीर्णानां स्त्रीकविविरचितानां संस्कृतश्लोकानां संग्रहणमकारि ससहधर्मिणीकेन श्रीमता यतीन्द्रविमलचतुर्धुरीणेन। परिशिष्टे च नारीकविप्रणीतानां प्राकृतागाथानामपि सन्निवेशो व्यधायि विमलमतिना यतीन्द्रविमलेन। अत्र च कविवृत्तादिवर्णनपरः समीचीनतमः शतपृष्ठात्मक उपोद्घातः पठितमात्र एवानुरञ्जयति मनांसि सहृदयानाम्, समवबोधयति च प्रतिभां च पाण्डित्यं च सहृदयतां च मर्मज्ञतां च श्रीमत्या रमायाः। अन्ते च सन्निविष्टेषु श्लोकानामाङ्गलानुवादेषु यद्यप्यन्तरान्तरा प्रमादादयः प्रत्यक्षीक्रियन्ते तथापि दुरूहतमानां श्लिष्टश्लोकानां भाषान्तरारोपणकौशलमनितरसाधारणं वैदुष्यविशेषमेव प्रादुष्करोति लेखिकायाः।

इदानीं समालोचकधर्ममनुरुन्धानैरस्माभिः केचन प्रमादा अपि प्रदर्श्यन्ते। आशास्यते संस्करणान्तरे सुनिपुणं परीक्ष्यामूलान्तं ग्रन्थमिमं निराकरिष्यन्ते सर्वास्त्रुटयः।

तत्राष्टत्रिंशत्तमः श्लोकः षोडशपृष्ठे दृश्यते—

> भ्रमन् वनान्ते नवमञ्जरीषु न षट्पदो गन्धफलीमजिघ्रत्।
> सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा॥

द्व्यशीतितमे पृष्ठेऽस्यानुवादो यथा—

The bee, while roaming through clusters of fresh-blown blossoms, did not smell the plant Priyamgu. Was it not enjoyable, did it not delight? It is the will of Providence that alone is omnipotent.

अत्र यद्यपि रम्याशब्दस्य रन्तापदस्य चानुवादो लेखिकायाः सहृदयजनश्लाघनीयां सुरुचिमेव सूचयति तथापि गन्धफलीशब्दस्य प्रियङ्गु-पर्यायत्वकल्पनं नितराम् उद्वेजकमेव विदितवेदितव्यानाम् । गन्धफलीशब्देनात्र चम्पककुसुमानि बोद्धव्यानि । भ्रमराः किल सर्वेष्वपि कुसुमेषु निःशङ्कसञ्चारा अपि नोत्सहन्ते चम्पकप्रसूनेषु पदं निधातुम् इति जागर्त्येव कविसमयः । अत एव—

रूपसौरभसमृद्धिसमेतं
　　चम्पकं प्रति ययुर्न मिलिन्दाः ।
कामिनस्तु जगृहुस्तदशेषा
　　ग्राहका हि गुणिनां कति न स्युः ॥
सन्त्येकेऽपि महीरुहाः प्रतिदिनं संसक्तमत्तालय-
स्तत्तादृग्गुणिनो लवङ्गलवलीमाकन्दकुन्दादयः ।
आशास्यं जनुरस्य चम्पकतरोर्यत् कोरकान्तर्दलं
स्वैरङ्गैरुपमीय राजरमणी सासूयमालोकते ॥

इत्यादयः श्लोका उपपद्यन्ते । नैषधचरितप्रणेत्रा पुनः शास्त्रनियन्त्रितं सत्त्वं सुदूरमुत्सार्योच्छृङ्खलमेव सत्त्वं समवलम्ब्य "अलिस्रजा कुट्मल-मुच्चशेखरं निपीय चाम्पेयमधीरया दृशा" इत्यादिकमुपनिबद्धम् । अत्रापि सहृदयशिरोमणिना मल्लिनाथेनेत्थं परिष्कारो विहितः—

नन्वयुक्तमिदम् । "न षट्पदो गन्धफलीमजिघ्रत्" इत्यादावलीनां चम्पकस्पर्शाभावप्रसिद्धेरिति चेन्न । स्पृशन्त्येव, किन्तु स्पृष्ट्वा म्रियन्ते तावतैव स्पर्शाभावप्रसिद्धिरिति क्वचित् कीर्तितः परिहारः । अथवा चाम्पेयं नागकेशरम् । इति ।

श्लोकोऽयं सुप्रचार एव वङ्गीयविद्वज्जनवदनसरोरुहेषु । तत्र च तार्तीयीकश्चरणः—"सा किं न रम्या स न वा गुणज्ञः" इत्याकारक एवन्न एवञ्चान्तर्भूतण्यर्थकरमेरर्थासम्पृक्तत्वात् सर्वरुचिसंसेवनीयोऽयं सुमनोरमः श्लोकः, भाषान्तरारोपणञ्चास्य सुकरमेव ।

अष्टाचत्वारिंशत्तमे पृष्ठे ११५ श्लोको यथा—

विज्ञप्तिरेषा मम जीवबन्धो तत्रैव नेया दिवसाः कियन्तः ।
संप्रत्ययोग्यस्थितिरेष देशः करा हिमांशोरपि तापयन्ति ॥

अस्य चानुवादः १०८ पृष्ठे यथा—

O friend of my heart ! how long must you stay there ?

यद्यपि चिह्नाप्यादिवर्जितस्य कियच्छब्दस्योत्सर्गतः प्रश्नबोधकत्वं तथाप्यत्र तात्पर्यानुरोधात् कतिचन इत्यर्थः कल्पनीयः । पतिप्राणया सहधर्मिण्या पत्युः शारीरक्लेशपरिजिहीर्षया कतिचिद्दिनानि विदेशवास एव काम्यते इत्यापाततः प्रतीयमानोऽर्थः । पर्यवसाने पुनः—तव विरहे निरन्तरमेव निरययन्त्रणामनुभवामि, अतः सत्वरमागम्य सञ्जीवय माम् इत्यर्थः प्रतीयते ।

कालिदासीयत्वेन प्रसिद्धे श्रृङ्गारतिलके श्लोकत्रितयमुपलभ्यते । तत्र प्रोषितभर्तृकाया प्रियतमं प्रति पत्रम्—

प्राणेश विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः ।
सम्प्रत्ययोग्यस्थितिरेष देशः करा हिमांशोरपि तापयन्ति ॥

प्रेष्ठस्योत्तरम्—

कल्याणि चन्दनरसैः परिषिच्य गात्रं द्वित्राण्यहानि कथमप्यतिवाहयेथाः ।
अङ्के निधाय भवतीं परिरभ्य दोर्भ्यां नेष्यामि सूर्यकिरणानपि शीतलत्वम् ॥

प्रेयस्याः प्रत्युत्तरम्—

अन्तर्गता मदनवह्निशिखावली या सा बाध्यते किमिह चन्दनपङ्कलेपैः ।
यत् कुम्भकारपचनोपरिपङ्कलेपस्तापाय केवलमसौ न च तापशान्त्यै ॥

समालोच्ये पुस्तके टिप्पणीरूपेणान्तिमश्लोकद्वयस्यापि सन्निवेशः समुचित इति नः प्रतिभाति ।

अवश्यमेव सग्राह्यं पुस्तकमिदं रसिकैः ।

सुचिरं जीवताद् यतीन्द्रविमलश्च तत्सहधर्मिणी च, परिचरताच्चैव-मेवानुदिनं भगवतीं सुरसरस्वतीम् इति शिवम् ।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

June, 1940 | १८६२-शकीये ज्यैष्ठे २३श-वर्षस्य २य-संख्या | Vol. XXIII No. 2.


## अवधीयतां किञ्चित् प्राप्तकालम्

मान्याः पाठकमहाभागाः, भवद्भिः सकृदवलोकितामस्मत्पत्रिका-शैलीमवलम्ब्य किञ्चन वक्तव्यमावश्यकमनुभवामि। कार्यपरिचालकानां मतानुसारेणेतः प्रभृति पत्रिकायाश्चतुष्पुट्यां त्रिपुट्येव ग्रन्थार्थमुपयुज्येत। कारणान्तरेण पुनः कियतो मासानिमां पञ्चपुटामनुभविष्यन्ति श्रीमन्तः। अनेन च नियमेन प्रक्रम्यमाणेषु ग्रन्थेषु श्रीयुक्त-कालीपद-तर्काचार्य-प्रणीतं 'सत्यानुभावं' भवद्भिः पूर्वत एवावलोकितम्। नवीनानि पुनः 'फिट्सूत्रं' 'चित्रचम्पूः' 'आनन्दलतिका' च। तत्राद्यं श्रीमता क्षितीशचन्द्र-चट्टोपाध्याय-शास्त्रिणा नैकया टीकया स्वकृत-टिप्पणादिभिश्चोपस्कृत्य संस्क्रियमाणम्। द्वितीया चित्रचम्पूश्च परिषद्ग्रन्थागारिकेण श्रीमता जानकीनाथ-साहित्य शास्त्रिणा प्राचीन-हस्तलिखितपुस्तक-त्रयसंवादेन संस्क्रियमाणा वर्धमान-राजाधिराज-कीर्तिचन्द्रसभाकविना बाणेश्वरतर्कालङ्कारेण स्वोपजीव्यनृपति-मुपजीव्य प्रणीता प्राचीनैव।

आनन्दलतिका तु बहोः कालात् पूर्वं विद्यासागरकलेजाध्यापकेन स्वर्गत-राधारमण-विद्याभूषणमहोदयेन, परिषदोऽन्यतर-सहसम्पादकेन

श्रीमता दीनबन्धु-साहित्यशास्त्रिणा चांशविशेषेषु समं संस्क्रियमाणापि पाठकानां दर्शनसरणिं नाभ्यपद्यत। इदानीं पुनः प्रथमस्य परेततयाऽन्य-तरेण श्रीमता दीनबन्धु-साहित्यशास्त्रिणैवेयं परिषत्पत्रिकायां ग्रन्थाकारेण मुद्रयित्वा प्रकाशयिष्यते।

---

## औत्पातिकः पक्षः

अयि, भो विदितवेदितव्या विद्वांसः, कीदृशीं कालस्य परिणतिं प्रेक्षध्वे। प्रवर्तते किञ्चन युद्धं लोकक्षयभीषणमभारतीयमपि महाभारतीयादन्यूनं यूरोपखण्डे। अस्य चायतिः कथं भाविनीति चिरजागर्ययापि चिन्तया नैवोद्भावयितुं शक्यते केनापि। सर्वथा स्वस्ति कुर्वतां सुपर्वाणः सृष्टिपालकाः सपरिवारस्य सराष्ट्रस्य सम्राड्महोदयस्येति साञ्जलिबन्धं प्रार्थयामहे।

अत्र प्रस्तावोचितं किञ्चित् प्रस्तूयते। वर्तमाने शकाब्दे यो नाम शुक्लः पक्षः सौरज्यैष्ठस्य चतुर्विंश-दिवसे प्रतिपदि प्रवृत्तस्तस्य समाप्तिः सौर-शुचेः पञ्चमदिवसे पौर्णमास्यां जाता। एवञ्च तदादि-तदन्त-संकलनया त्रयोदशभिर्दिवसैरयं पक्षः परिनिष्ठित इति परिज्ञायते। तथाविधश्च पक्षः प्रायो विरलदर्शन इत्युत्पातत्वेन व्याख्यायते ज्योतिर्निबन्धकारैः। सामान्यतश्चायं तिथीनां क्षये चतुर्दशभिर्दिवसैः, वृद्धौ च षोडशभिर्दिवसै-र्भवतीति सर्वाध्यक्षम्। असम्भवत्कल्पः पुनस्त्रयोदशदिनात्मकत्वमस्य। पूर्वं महाभारतयुद्धारम्भकाले सम्भूतं तथाविधं पक्षमुद्दिश्य युद्धान्निवर्तयितुं धृतराष्ट्रं प्रति भीष्मः कथितवान्। यथा—

"चतुर्दशीं पञ्चदशीं भूतपूर्वाञ्च षोडशीम्।
इमान्तु नाभिजानेऽहममावास्यां त्रयोदशीम्॥"

इति। अहम् इमाम् अमावास्यां चतुर्दशीं पञ्चदशीं (चतुर्दशादीनामह्नां पूरणीं) भूतपूर्वां (पूर्वं जाताम्) अभिजाने, तु त्रयोदशीं (त्रयोदशानामह्नां

पूरणीं ) नाभिजाने इति तदन्वयः। यद्यपि यथाश्रुत-पाठे कृष्णपक्षस्यैव त्रयोदशदिनात्मकत्वे दोष इत्यायाति, तथापि न्यायसाम्याच्छुक्लपक्षेऽप्ययं दोषो द्रष्टव्यः। क्वचित् पुस्तके पुनरस्यैवं पाठो दृश्यते—

"चतुर्दशीं पञ्चदशीं कदाचिदपि षोडशीम्।
इमान्तु नाभिजानामि भूतपूर्वां त्रयोदशीम्॥"

इति। अस्मिंश्च पाठे दोषस्यास्योभयपक्षसाधारण्यं वाचिकमेव भवति।

मौषलपर्वण्यपि यदुवंशध्वंसकाले—

"त्रयोदश्याममावास्यां दृष्ट्वा तान् प्राब्रवीदिदम्॥
चतुर्दशी पञ्चदशी कृतेयं राहुणा पुनः।
प्राप्ते वै भारते युद्धे प्राप्ता चाद्य क्षयाय नः॥" इति।

आश्चर्यं पुनरेतद् यदेवं दोषश्रुतावपि महादोषमयेऽप्यस्मिन् पक्षे पञ्चाङ्गकृतः सर्व एवैकमत्येन विवाहादि-शुभकर्मदिनानि निरधारयन्।

अयञ्च विषयः प्रथममस्माभिरमुद्रितपूर्वायां कस्याञ्चित् कालमाधव-टीकायामुपलब्धः। तत्र च "व्यवहारक्षेमीश्वरे ज्योतिर्निबन्धे च" इत्युपक्रम्य

"पक्षस्य मध्ये द्वितिथी पतेतां तदा भवेद् रौरव-कालयोगः।
पक्षे विनष्टे सकलं विनष्टमित्याहुराचार्यवराः समस्ताः।"

इत्यादि वचनमुद्धृतम्। आकरे पुनर्ज्योतिर्निबन्धे "पक्षे विनष्टे नृपतिर्विनश्येत्" इत्यादि लिखितमास्ते। अत्र चैते संशयाः समुत्तिष्ठन्ति—किमयं दोषः कृष्णपक्षविषय उतोभयपक्षविषयः। तत्रापि पक्षस्याद्यन्तयोर्व्यवस्था कीदृशी स्यात्। किं यदैव प्रतिपत्प्रवृत्तिस्तत एव पक्षो ग्राह्यस्तदन्यथा वा। एवमन्तेऽपि। इच्छामीमं विषयं स्मार्तशिरोमणिभिः परिच्छिद्यमाणमित्यास्तां विस्तरः।

प्रकृतिविलास-काव्ये

## समीर-समर्हणम्

( पूर्वानुवृत्तिः )

[ निबन्धकः—सा० भू० कृष्णमूर्ति शास्त्री ]

लवणमिलनाद्रूण्यो मुष्णन रुजां विविधां नृणां
निरुपमकृपः पारावारप्रदेशमुपेयुषाम् ।
शिखरिशिखरे सौख्यं पुष्णन महौषधिमिश्रणाद्
हितकृदगदङ्कारो भासि प्रकृत्युपकल्पितः ॥४८॥

नगरग-नरा मृष्टान्नैरप्यपुष्टकलेबरा
विपिनभवना वृद्धाः स्वैरं चरन्ति युवोपमाः ।
प्रकृतिशुचिरस्यायुश्चातो ददासि वने सतां
पुरनरदुराचारैर्दुष्टो यमाय हि कल्पसे ॥४९॥

श्वसन ! सुखिनस्तिर्यञ्चोऽपि ह्यरण्यनिवासिनः
किमधिकगिरा त्वामासेव्य द्रुमा अपि निर्मलम् ।
स्वसुखविमुखा मर्त्यास्त्वेते कुतर्कशतप्रिया
न जहति पुरं प्राणापायेऽप्यधर्मपरायणाः ॥५०॥

सुखवसतये शान्तप्रान्तान वनान्तमुखाञ्शुभान्
निरवधिकृपापूर्णोऽस्मभ्यं वितीर्य जगत्प्रभुः ।
न्ययमयदमुं त्वां न स्नातुं विवेकलवोज्झिताः
पतितुमवटं ह्यन्विच्छामः स्वयं प्रकृतिद्विषः ॥५१॥

विपुलपुलिनारण्यप्रान्ते बहिर्भरतक्षिते-
र्दधति विरलान खर्जूरद्रून दुरापजलाशये ।
समधिकभरैरारुह्योष्ट्रान सदा व्रजतो जनान
सपदि पिदधास्युत्कीर्णैस्त्वं प्रभञ्जन पांसुभिः ॥५२॥

अवनिजठराभोगोदीर्णप्रणालिकयोद्गतः
क्षितिधरशिरस्सप्तार्चिस्त्वत्प्रचण्डपराक्रमैः ।
विहितपृथिवीकंपः प्रेद्धः स्वमप्यतिताम्रयन्
नगरनिकरान् हन्त्युद्वान्तैर्द्रवद्रवनिर्झरैः ॥५३॥
भवदपिहिता जीर्णा वृक्षाः क्षितौ शरदां शतं
परिणततरेङ्गालात्मानो व्रजन्ति च हीरताम् ।
स्वमिलनवशादुर्व्यास्तैलं ददत्यपरेऽमितं
कतिचन महायन्त्रौघानां भवन्त्युपकारिणः ॥५४॥
व्रजमृगदृशां वृन्दैः कूले तमालवनाकुले
दिनकरतनूजाया ज्योत्स्नासिते परिखेलतः ।
चिरविहृतिजां श्रान्तिं दूरेऽकृथा वनमालिनः
कुवलयदलश्यामाङ्गानामभीक्ष्णविमर्दनैः ॥५५॥
विपुलमतुलश्रीलास्यं यत्परीतगिरिव्रजं
विमलसलिलोन्मीलत्पद्मोल्लसत्कलहंसकम् ।
अनुहरगिरिप्रान्तं चक्षुःफलं विदधत्सर-
स्तदपि भवतः क्रीडास्थानं प्रसिद्ध्यति मानसम् ॥५६॥
हिमगिरिदरीद्वारोदाराखामरनिम्नगा-
सततपतितश्वेतस्रोतस्तरङ्गपवित्रितम् ।
मरकतमणीवर्णैर्घासैस्तलं समलङ्कृतं
पवन ! सुखमध्यासीनस्त्वां पुराऽनुभवामि किम् ॥५७॥
विमलबलभिन्नीलाश्माद्रिव्रजप्रतिमोर्मय-
स्तपनदुहितुर्निम्नावर्तप्रभेदभयङ्कराः ।
कलिमलहरैस्तुङ्गैर्भङ्गैस्त्वया व्यतिकारिता-
स्त्रिदिवसरितः कर्पूरोर्वीधरप्रतिशात्रवैः ॥५८॥
बिभृहि सततं सम्राट्स्थानं त्वमेव सुपर्वणाम्
अहमपि मुदा संमन्ये तत्सुहृद्गतमत्सरः ।

प्रकृतिचपलो मोपेक्षिष्ठाः परन्तु समीर ! मां
खलु गणयत्याढ्यो वर्गः स्मयेन तपस्विनः ॥५९॥
त्वमसि।सततं सर्वत्र त्वं बिभर्षि समं जगत
त्वमसि च महान देवोऽध्यक्षस्त्वमस्यखिलप्रदः ।
श्रुतिशिरसि संवर्गः ख्यातस्त्वमेव गतिर्मम
प्रशमय महारोगाच्छीघ्रं प्रसीद सदागते ॥६०॥
तव गतिमहं रुन्धन स्वैरं चिरात्समभाषिषि
श्वसन ! विरसा वाचो मित्र ! क्षमस्व दयान्वितः ।
वितर पटुतां स्तोतुं मह्यं वियत्सरितं शुभां
भुवि विजयतामाचन्द्रार्कं समीरसमर्हणम् ॥६१॥

---

## युगधर्मसंस्थापकः श्रीरामकृष्णः

( व्यतीतवर्षस्य द्वादशसंख्यातोऽनुवृत्तः )

[ निबन्धकः—स्वामी जगन्नाथानन्दः ]

त्वया उपदिष्टानि अमृतवाक्यानि उदाराम् अच्छेद्यकीर्तिं ज्ञानभक्तिप्रेम-समन्वयवार्तां प्रचारयिष्यन्ति, यानि ध्यायन्तस्तरिष्यन्ति भवाब्धिमचिरा-न्मानवाः । अथ कियत्कालानन्तरं द्व्यशीत्यधिकाष्टादशशततमखृष्टाब्दात् परतः सर्वे भक्ताः समागताः । तेषूपदेशः प्रोक्तस्तेन । तान् उपदेशान् संक्षेपेण उक्त्वा मदुक्तेः समाप्तिं करिष्यामि ।

नहि केनापि ईश्वरस्य अनन्तस्य अनन्तगुणा व्याख्यातुं शक्याः । यथा परमाणूनां परिगणनम् सागरसलिलानाञ्च कुशाग्रेण सेकसाधनेन परिशोषणञ्च कदापि कथमपि नैव शक्यम् ।

ततश्च गृहस्थानां प्रत्युक्तं तेन । कुरु-कर्माणि सर्वाणि सर्वेषु कालेषु ईश्वरे परमात्मनि मनः स्थापयित्वा । जानीहि संसारम् असारं क्षणभङ्गुरञ्च । जायापत्यगृहक्षेत्रद्रविणादिषु ममत्वाभिमानं परित्यज्याविशेषेण प्राणिनो नारायणबुद्ध्या सेवस्व । तस्यैव चापर उपदेशो यथा,

त्यागं विना ईश्वरलाभो न सम्भवति। ये तु त्यागिनस्तेषाम् उपदेशं सर्वे गृह्णन्ति, न त्वत्यागिनाम्। यथा गीता गीता इत्यसकृदुच्चारितं सत् तागी त्यागी वा भवति। तद्वद् हे जीवाः! सर्वान् विषयान् परित्यज्य भजत ईश्वरम्। इति गीतायाः सारः। यथा च "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः"। येषां सत्ये दृढा निष्ठा अस्ति ते ईश्वरं प्राप्नुवन्ति। यद्यपि एतानि दुःसाध्यानि तथापि साधुसङ्गेन सर्वाणि सुलभानि भवन्ति। यथा चोक्तं "क्षणमिह सज्जनसङ्गतिरेका, भवति भवार्णवतरणे नौका।"

"जाड्यं धियो हरति सिञ्चति वाचि सत्यं
चित्तोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम्॥"

यदा यस्य सत्सङ्गो न भवेत् तदा स एकान्ते कश्चिदवसरे ईश्वरं भजेत्। एवं पुनः पुनः कृते चित्तस्था अविद्या नश्यति, ईश्वरे परानुरक्तिः स्वयमुदेति। यदा बहुजन्मसमर्जितभाग्योदयेन वासुदेवं नारायणं प्राप्तुं चातक इव व्याकुलतां गच्छेत्, तदा जानीहि ईश्वरलाभोऽतिसन्निकट एवेति। यथाऽरुणोदये सूर्योदयो भविष्यति तूर्णमिति निश्चीयते, तथा व्याकुलतोदयेन ज्ञानार्कोदयो भविष्यत्यचिरादिति निश्चयः। उक्तञ्च, भवन्तु साकारवादिनो निराकारवादिनो वा, ये विभिन्नाः सम्प्रदायाः सन्ति ते त्यजन्तु साधनवर्त्मनि परस्परं कलहं विद्वेषञ्च, गृह्णन्तु ईश्वरे अनुरागं व्याकुलताञ्च। एवं कृते किंस्वरूपं ब्रह्म क ईश्वर इत्यादि-प्रश्नानां नावकाश इति। ऐशी व्याकुलता क्रमेण तत्त्वं प्रकाशयति। त्यागिन ईश्वरे अहैतुकीं भक्तिं कुर्वन्त आत्मारामाः सन्तो विचरन्ति भुवि। ख्यातिं गतस्य प्रथितयशसः श्रीरामकृष्णपरमहंसदेवस्य अतीन्द्रियाचिन्त्यालौकिकसात्त्विकदैवप्रभावेण परिव्याप्तं जगत्। तस्य गुणगणा न केनाप्यज्ञाताः परं सर्वविदिता इत्यलमत्र विशेषेण वाचां प्रपञ्चनेन।

## ग्रन्थनिकषः

**आर्षं पाणिनीयं व्याकरणम्**—उणादि-पाणिनीयशिक्षा-गणपाठ-लिङ्गानुशासन-फिट्सूत्र-परिभाषापाठैस्तत्तद्विषयक-सूचिभिश्च समलङ्कृतम्।

"पाटनाकलेज" महाविद्यालय-व्याकरणाध्यापकेन पण्डित-श्रीहरिशङ्कर-पाण्डेयेन सङ्कलितम्। व्याकरणाचार्य-पण्डित-श्रीचन्द्रकान्त-पाण्डेयेन 'यूनाइटेड प्रेस' मुद्रणालयात् प्रकाशितम्। मूल्यं २॥। पादोनरूप्यकत्रयम्।

पण्डित-हरिशङ्कर-पाण्डेयेन पाणिनेः सूत्राणि यथापेक्षितं तदुदाहरणानि चोपजीव्य सङ्कलितोऽयं ग्रन्थः पाणिनिव्याकरणानुरागिणामुपकाराय कल्पिष्यत इत्यत्र नास्ति सन्देहः। बालानामपि पाणिनीये प्रविविक्षूणामयं प्राथमिकतया कण्ठस्थीकरणायोपयोक्ष्यते। एतेन तेषां परत्र काले पाणिनीयाध्ययनस्य सुमहत् सौकर्यं भविष्यतीति नः प्रतिभाति। गवेषकाणां पुनरवश्यसंग्राह्योऽयमिति को वा विशयः। चिर-पुराणानां नवीकरणी चेदृशी सन्निवेशचातुरी इदंप्रथमतयैवास्माकं नयनसरणिं प्राप्तेत्यभिजानीमः। अत्र च सङ्कलयित्रा पादटीकयोदाहरणानामवश्यमपेक्षितानि सूत्रान्तराणि विशेष-वक्तव्यानि चोल्लिख्य प्रयोगसाधनेऽप्यंशतो निराकाङ्क्षता विहितेति प्रशस्तिमस्योद्घोषयामः। सूचयश्च सूत्रादीनां परमोपयोगिन्यः सूचयन्ति सङ्कलयितुः कौशलविशेषम्। परं धातुसूचेर्धातुपाठ इवोदाहरणमपि यदि लक्ष्यतामभजिष्यत् तदा नूनं पाठकानां महान् सुयोगोऽभविष्यत्। त्वरन्तां संस्कृतप्रणयिनोऽस्य प्रचुरसूचेरपि प्राप्तिस्थान-सूचनाविहीनस्य ग्रन्थस्य संग्रहणायेति।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| July, 1940 | १८६२-शकीये आषाढे २३श-वर्षस्य ३य-संख्या | Vol. XXIII No. 3. |


प्रकृतिविलासकाव्ये

## त्रिपथगा-सौभाग्यम्


[ निबन्धकः—सा० भू० कृष्णमूर्ति-शास्त्री ]


हिमाद्रिवरनन्दिनीमखिललोचनानन्दिनी-
मुपेन्द्रपदवन्दिनीमसमदृक्शिरस्स्यन्दिनीम् ।
अघौघपरिमर्दिनीं सुभगभङ्गसन्नर्दिनीं
त्रयीविपिनकेकिनीं प्रणिपतामि मन्दाकिनीम् ॥१॥

सुधीकुलशिखामणिः क्षितिसुपर्वमुक्तामणि-
र्भगीरथपथानुगां प्रकृतिसिद्धमानोज्ञकाम् ।
निरीक्ष्य भृशविस्मयस्तिमितदृक्स्तुतिप्रक्रमैः
सभक्त्यतिशयं स्वयं स कुतुकादुपातिष्ठत ॥२॥

अवाङ्मनसगोचरान्गुणगणांस्त्रिमार्गोद्गमे
फणाभृदधिपोऽपि न प्रभवति प्रवक्तुं यदि ।
स्तुयां कथमनक्षरः शिवशिरःपरिस्पन्दिनि !
क्षमस्व कृपयाऽम्बिके सरभसप्रवृत्तिं मम ॥३॥

पवित्रतरवारयः स्फुरदनर्घवज्रव्रज-
च्छविच्छुरितदिङ्मुखप्रसृमरोर्मिसंमूर्छिताः ।
जगत्त्रितयसत्ववृत्त्युपचितस्वरूपाः स्मृता
हरन्तु दुरितानि नस्त्रिपथगाम्भरा मेदुराः ॥४॥
निकुञ्जपरिरञ्जितद्रुमकदंबनीरन्ध्रित-
स्फुरद्धिमदृषत्क्षरत्प्रथमवारिपूरोद्गमा ।
तुषारगिरिगह्वरोदरविनिष्क्रमद्बन्धुरा
पतन्त्यवतु मौक्तिकग्रथितहारराजीव नः ॥५॥
अधिक्षिति पतिष्णुनिर्झरपृषन्ति पार्श्वद्रुम-
प्रसूनभरसौरभप्रसभचौर्यबद्धोद्यमः ।
निसर्गशिशिराण्यघप्रशमनैकवीरव्रता-
न्यमन्द-रयमुतकिरन्मरुदपाकरोति श्रमम् ॥६॥
विनीतिमधुरा स्वयं विपिनदेवताप्यन्वहं
तटोपवननिर्जरद्रुममणीचक्रैरर्चति ।
उदग्ररयनिर्झरोर्म्युरु-विरावभूरिप्रस-
द्धरिद्विजघटार्भटां नटनलंपटां स्वर्धुनीम् ॥७॥
अहस्करकरद्रुतामितहिमौघसंवर्धित-
प्रवाहपरिवर्तितद्रुमकुलायपत्त्रिव्रजा ।
करालतरवक्त्रदर्यनृजुतीक्ष्णदंष्ट्रोल्लस-
त्पलालमकराकुलह्रदशताऽवताज्जाह्नवी ॥८॥
ससंभ्रमसमुत्पतन्निपतदातिरूम्युद्धुत*-
प्रफुल्लकमलोत्पलद्वहलमल्लिकाक्षोज्ज्वला ।
विवृत्तमृदुलोदरक्षणिकचित्रवर्णप्रभा-
तरङ्गितझषाकुला सुरतरङ्गिणी राजते ॥९॥

---

* आतिर्जलचरपक्षिविशेषः ।

विराजति समुद्रजद्द्रिरिसहोदरोर्मिव्रज-
प्रलूनतरमूलभूरुहसहस्रवेलाकुला ।
सहस्रमदसिन्धुरद्वयसमीकरावर्तभाक्-
पटीरतरुकोटरोरगवरा सुरह्लादिनी ॥१०॥
विभान्त्यमितवीचिपङ्क्त्युदितफेनरेखाङ्कित-
प्रकंप्रदलमर्मरारवतमालमूलस्थलाः ।
तटोपवनपाटलप्रसवपातशोणप्रभा
वनान्तरविनिर्गतास्त्रिपथगाझरा झर्झराः ॥११॥
मरालमहिलापरिक्रमणबन्धुराब्जोल्लस-
न्मदान्धमधुपाङ्गनाकलितगीतिरीत्यञ्चिता ।
तरङ्गपरिनर्तनप्रसितमारुतप्रेङ्खित-
व्रजत्पृथुलनौशतध्वजपटाऽटति स्वर्नदी ॥१२॥
मनोज्ञतरसैकतस्थलसमुल्लसद्वेतसा
समीरधुतकेतकोद्दलितधूलिसान्द्रामृता ।
हिमोपमसुमोद्गमासमशरावलीमञ्जुला
विलोचनफलं दिशन्त्यमरशैवलिन्येधते ॥१३॥
चकासति झरा वधूकरनिघृष्टहारिद्रक-
द्रवव्यतिकरोन्मिषद्रुचिररुक्मवर्णार्णसः ।
वयोऽनुगुणविभ्रमस्फुरणगौडसुभ्रूस्तन-
प्रमृष्टहरिचन्दनप्रगुणितश्रियस्त्र्यात्मनः ॥१४॥
निगूढकुचमण्डलप्रवरगौडसीमन्तिनो-
गभीरशुभनाभिसंगमसमुद्भवोरुभ्रमः ।
विलोलघनकुन्तलश्लथितपुष्पमाल्योद्गल-
त्सुगन्धिमधुपङ्किलः स्फुरति गाङ्गभङ्गोद्गमः ॥१५॥
दृषन्निकरदन्तुरस्थलचलन्महोर्म्यारव-
प्रवृद्धतरतीरभूधरदरीप्रतिश्रुन्त्यलम् ।

विधातुमधिकाद्भुतं विबुधदीर्घिकास्रोतसां
निमज्जदिभयूथपहृदबृहन्ति वृन्दानि नः ॥१६॥

झषोत्प्लवनकांक्षिहृङ्निभृतगात्रतीरश्रित-
क्षुदार्तबिसकण्टिकाशतसुखासिकोल्लासिनी ।
अमन्दजवचङ्क्रमप्रबलनक्रचक्रभ्यस-
त्तिरोहितजलाण्डजा जयति जह्नुकन्याऽनघा ॥१७॥

प्रमत्तमधुपच्छविच्छिदुरपक्वजंबूफल-
प्रपातपरिपाटलद्युतिरमर्त्यकल्लोलिनी ।
क्वचिच्च वरवर्णिनीश्रवणभागदृगिन्दीवर-
प्रमृष्टरुचिराञ्जनाञ्चिततनूर्नरीनृत्यते ॥१८॥

प्रचण्डरवसंप्लवप्रसभमज्जितारण्यक-
च्छदोदवसिताऽनवद्यद्विजकुलायनिर्मूलिनी ।
निगीर्णमदवारणाजगरमण्डलाकर्षिणी
भयङ्करतरा सरित्सुमनसां प्रचकचूर्यते ॥१९॥

मरालकुलकौतुकोत्पतनसंशयाधायक-
प्रभञ्जनसमुद्धतोर्म्युदितफेनपुञ्जाञ्चिता ।
मदोत्कटतटाटवीकरटिराड्भिरत्युद्भटा
त्रिविष्टपतटिन्यटत्यविरतं रटन्ती स्फुटम् ॥२०॥

लसन्मृदुलशैवलोपलतलस्खलन्नूर्मिल-
प्रनृत्यदुदकस्रुतिप्रहिततूलरोचिःकणान् ।
प्रकीर्य हरति श्रमं रतिसमुद्भवं सुभ्रुवां
मनोज्ञसुरनिम्नगातटनिकुञ्जभाजां मरुत् ॥२१॥

तटच्छदकुटीवसन्मुनिहुताग्निधूमोद्गम-
प्रभिन्नरुचिपल्लवद्रुमसमुत्पतद्वायसा ।
अजस्रयजनोत्सुकद्विजपरिष्कृतग्रामका
समाकलितभावुका वहति देवतावापिका ॥२२॥

अनल्पजवपोप्लुवप्रमदधार्तराष्ट्रव्रजाः
समुच्छ्रितवनस्पतिप्रकरमूलभूलोलुवाः ।
पवित्रतरदेवतायतनमण्डलीयोयुवाः
जरिह्रुतुतरामघं सुरसरिज्झराः पोपुवाः ॥२३॥

मदान्धविपिनद्विपोन्मृदितसप्तपर्णक्षर-
न्निकामघनदुग्धजप्रवरगन्धवेलोज्ज्वला ।
विचित्रतररुक्छदप्रकरस्रक्गोपोद्गम-
प्रदीप्रतटशाद्वला लसति लेखशैवालिनी ॥२४॥

सदाप्रतिफलत्तटद्रुमसमुच्छ्रितोर्म्युद्भव-
प्रभूतजलदभ्रमाकलितलास्यबर्हिव्रजा ।
निरस्तमिहिरातपद्रुनिकुरुंबनीडाण्डज-
प्रहर्षरवनिर्भरा कुतुकमादधात्यद्रिजा ॥२५॥

प्रफुल्लकमलावलीजठरशायिहंसार्भका
वनस्पतिपरिच्युतामितसुमप्रपातार्चिता ।
तृणाग्रमिहिकालवप्रतिफलत्तटाद्रिद्रुमा
प्रभातसुभगां श्रियं परिबिभर्ति भागीरथी ॥२६॥

विसङ्कटतटाटवीकुटजगुल्मवाटीकुटी-
स्फटाप्रकटितार्भटोन्नटनलंपटा ह्युद्भटा ।
रटद्विटपिकोटरश्रितकुटुंबकोयष्टिका
त्रिविष्टपतटिन्यसौ स्वयमटाट्यतेऽपि क्षितौ ॥२७॥

हरिन्मणिसहोदरद्युतितृणाङ्कुरास्वादन-
प्रपुष्टहरिणार्भकोत्प्लवनमञ्जुकुञ्जोदरा ।
सुवर्णरुचिचंपकस्तबकरेणुविक्षेपण-
प्रवीणतटमारुता त्रिपथगा प्रसोसूयते ॥२८॥

रसाल-नवपल्लव-ग्रसन-जातसङ्गीतक-
प्रियङ्करवनप्रियाध्युषिततीरचेतोहरा ।

वदान्यतमतीरभूरुहविनम्रशाखोल्लस-
त्फलानि सुरनिर्झरिण्यपचिनोति वीचीकरैः ॥२९॥
मदानवदधद्वधूपृथुनितंबविस्रंसित-
प्रकम्रकनकांबरप्रकरकर्षणान्तर्जला ।
द्रुतस्नपितलीरगालसपुरन्ध्रिवीचिच्छटा
समेधयति विष्णुपद्युषसि भूरिहास्यं रसम् ॥३०॥
विनिद्रतरकैरवोदरमरन्दसान्द्रीभव-
त्तरङ्गपृषदुत्किरश्वसनसैकतालंकृता ।
चकोरवरवर्णिनीहृदयनन्दनेन्दुप्रभा-
मनोज्ञतटकानना स्रवति देवकूलङ्कषा ॥३१॥

( क्रमशः )

---

# फिट्सूत्राणि

[ निबन्धकः—श्रीक्षितीशचन्द्र-शास्त्री ]

विदितमेवैतत् प्रियपाठकानामशेषाणां यच्छान्तनवाचार्यप्रणीतानि फिट्-सूत्राणि टीकाचतुष्टयसमलङ्कृतानि खण्डशः प्रकाश्यन्ते प्रतिमासं संस्कृत-साहित्य-परिषदि। फिट्सूत्राणां सविशेषाध्ययनाध्यापनाभावात् सुतरा-मेव दुर्बोधानि तानि सञ्जातानि, सम्प्रदायविच्छेदाच्च मूलस्य टीकानां च पाठा बहुत्र परिभ्रष्टाः। विशेषतश्च फिट्सूत्रवृत्तेः पाठे विवदन्ते पुस्तकानि। अस्माभिस्तु महता प्रयासेन भूयसा चार्थव्ययेन भारतवर्षस्य तेभ्यस्तेभ्यः प्रदेशेभ्यो हस्तलिखितपुस्तकानां प्रतिलिपीरानीय स्वरमञ्जर्यादीनां संवादेन मूलसंहितादिसंवादेन च यथामति संशोध्य मुद्राप्यन्ते सव्याख्यानि फिट्सूत्राणि। तथापि विषयान्तरव्यासक्तचित्ततया वास्माकं सीसकाक्षर-ग्रथकानां स्वरचिह्नयोजनेऽभ्यासवैधुर्याद्वा कारणान्तरापाताद्वाऽन्तरान्तरा

प्रमादाः सम्भवन्त्येव। मुद्रणसमाप्त्यवसरे सर्वेषामेवैवंविधानां प्रमादानां शुद्धिपत्रं सम्मुद्रयिष्यते।

इदानीं केवलं मखमधिकृत्य किञ्चिदुच्यते। नवम-पृष्ठे मखशब्दे आद्युदात्तत्वचिह्नं निवेशितम्। तत्तु वेदविदां नितरामुद्वेजकं सञ्जातम्, परं किमत्र क्रियतामस्वतन्त्रैरस्माभिः। मूलानुसारेणैव चिह्नं योजनीयम्, प्रक्रियाकौमुदीप्रसादकारेण च मकारादेः खान्तस्याद्युदात्तत्वप्रदर्शनायैव मख इति पदमुपन्यस्तम्। अतो मखशब्दस्य परमार्थतोऽन्तोदात्तत्वेऽपि प्रसादकृतां मतेन तस्याद्युदात्तत्वं सिध्यति। तत्तु प्रामादिकमित्यन्यदेतत्। अस्माभिस्तु स्वमतं दशम-पृष्ठे समुल्लिखितम् इति सर्वमवदातम्।

---

## ग्रन्थनिकषः

**अनूढकन्याशौचव्यवस्थानिर्णयः**—श्रीकैलासचन्द्र-स्मृतितीर्थसङ्कलितः। श्रीमहेशचन्द्रस्मृतितीर्थेन प्रकाशितः। प्राप्तिस्थानम्—पोः नर्तन, जिला श्रीहट्ट ; अथवा पोः पाँचगाओ, इटा दर्शनचतुष्पाठी, श्रीहट्ट। मूल्यम् आणकमात्रम्।

वङ्गविषय-विषयं रघुनन्दनमतसिद्धम् अप्रत्तानां कन्यानां पित्रोर्मरण एकाहाशौचम् अर्थतः प्रतिवदता ग्रन्थकारेण तादृशस्थले सपिण्डताप्रयुक्तं स्वजात्युक्तं दशाहाद्यशौचं युक्तिप्रमाणादिभिर्व्यवस्थापितम्। स एष ग्रन्थस्य प्रतिपाद्यो विषयः। वङ्गाक्षरमयोऽयं ग्रन्थो ग्रन्थकर्तुरुत्साहविशेषं सुधीजनसमुचितामनुसन्धित्साञ्च प्रमाणयति। लभेतैवायं यथोचितमादरं धीरसमाजेष्वित्याशास्महे।

**स्तुतिमालिका**—तेनैव श्रीकैलासचन्द्रस्मृतितीर्थेन विरचिता प्रकाशिता च। प्राप्तिस्थानं पूर्वोक्तम्। मूल्यमाणकमात्रम्।

ग्रन्थेऽस्मिन् सरस्वतीस्तवाष्टकम्, भवभीतिहराष्टकम्, जगदीश्वरस्तवा-

ष्टकम्, दशमहाविद्यास्तोत्रम्, भवानीशङ्कराष्टकम्, दुर्गाशार्दूलविक्रीडिताष्टकम् इति षडेव स्तुतयो वर्तन्ते ।

अद्यत्वे पण्डिताः प्रायेण संस्कृतालोचनपराङ्मुखाः परिदृश्यन्ते । आस्तामन्येषां कथा, अध्यापनैकवृत्तयो विद्वांसोऽपि समागतेभ्यश्छात्रेभ्यश्चिराचरितेन वर्त्मना पाठमात्रमुपदिशन्तः कृतकृत्यमात्मानं मन्यन्ते । अवसरे पुनरन्यत्र दत्तावधाना अपि विद्यायाः प्रसारप्रतिपत्त्योर्न मात्रयापि प्रयतन्ते, न वा छात्रांस्तत्र प्ररोचयन्ति । एवं गते ग्रन्थकृद्‌यमध्यापनावसरेषु यथोपपन्नं समयं ग्रन्थनिर्माणादिप्रायैरालोचनैरवन्ध्ययन् कथमिव प्राज्ञानां प्रशस्तिभाङ्न भवेत् । स्तोत्रेष्वेषु किञ्चन संकृत-साहित्य-परिषत् पत्रिकायामितः पूर्वं प्रकाशितं स्मरामः ।

तदियं ग्रन्थद्वयी ग्रन्थकर्तुराद्या कृतिरिति नाममात्रमूल्येति ग्रामसमुद्भवेति च लभतां सर्वथा समुत्साहमाददानेभ्य इति शम् ।

**श्रीकलकत्ता विश्वनाथपञ्चाङ्गम्** ( द्वि-रस-वह्निन्दुमितशकीयम् )—ज्योतिर्विद्भूषण-पण्डित-जयनारायण-शिवदेवमिश्रेण सम्पादितम् । प्राप्तिस्थानं ( यद्यपि प्रकृते पञ्चाङ्गे नोपलभ्यते ) १५६ A मुक्तारामवाबुष्ट्रीट, कलिकाता । मूल्यम् ।० आणकचतुष्टयम् । ऐषमोयं पञ्चाङ्गमिदं नागराक्षरेण हिन्दुस्थानादिपरिचितप्रणाल्या च समुपनिबद्धं प्रायेण हिन्दीभाषाभाषिणामेवोपकाराय कल्पिष्यते । आस्थितोऽत्र महान् यत्नः सम्पादकेन सर्वाङ्गसौष्ठवविधौ । अत्र चायं विशेषो वर्तते—प्रत्येकं तिथिनक्षत्र-योग-करणानां सूर्योदयतो दण्डादिकं घण्टादिकञ्च प्रदत्तम् । दैनिकलग्नसारिण्यपि प्रदत्ता । वङ्गदेशीयपञ्चाङ्गवत् सर्वेषां वस्तूनां समर्घमहार्घता च सहैव मासफलेन प्रदत्ता । तथा मेषादिराशिफलं विवाहाद्यावश्यकसूचयश्च प्रदत्तानि वर्तन्ते । किञ्च, "औत्पातिकः पक्षः" इति शिरोनाम्ना यदस्माभिरितः पूर्वसञ्चिकायामुल्लिखितं, तस्याप्यत्र सूचना वर्तते इत्यन्यपञ्चाङ्गविलक्षणं दूरदर्शित्वमस्य सबहुमानमङ्गीकुर्मः । वयमस्य प्रचारबाहुल्यं कामयामहे ।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| August, 1940 | १८६२-शकीये श्रावणे २३श-वर्षस्य ४र्थ-संख्या | Vol. XXIII, No. 4. |


## प्रजापतेः पाठशाला

[ निबन्धकः—श्रीसुरेन्द्रमोहन-पञ्चतीर्थः ]

प्रथमं दृश्यम्—ब्रह्मलोकः ।

एकस्मिन् प्रान्ते देवाः, मध्यभागे मानवाः, अन्यस्मिन् प्रान्ते च दानवाः—विभिन्नेष्वासनेषु समुपविष्टाः पुस्तकं विना पाठरताः । प्रजापतिश्च स्वकीये आसने समासीनः ।

प्रजापतिः—पाठ्यतां वत्साः पठ्यताम् ।

( सर्वे देवाः सुस्वरं पठन्ति )

१मो देवः—"सत्यं शिवं सुन्दरम् । सच्चिदानन्दं ब्रह्म, सत्यं ज्ञानमानन्दं ब्रह्म । एकमेवाद्वितीयम्, नेह नानास्ति किञ्चन" ।

२यो देवः—"अयमात्मा ब्रह्म, प्रज्ञानमानन्दं ब्रह्म, तत्त्वमसि, अहं ब्रह्मास्मि" ।

३यो देवः—"ज्ञानान्मुक्तिः, अज्ञानाद् बन्धः । न हि ज्ञानेन सदृशं पवित्रमिह विद्यते । तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय" ।

प्रजापतिः—सर्वे यूयं स्वकीयं पाठं पठत। अहमधुना उपासनालयं गच्छामि। (प्रतिष्ठते)

मानवाः पठन्ति ( सुस्वरं )—

१मो मानवः—"पितृदेवो भव, मातृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव"।

२यो मानवः—"सत्यात् न प्रमदितव्यम्, धर्मात् न प्रमदितव्यम्, स्वाध्यायाद् न प्रमदितव्यम्"।

३यो मानवः—"धर्म एव हतो हन्ति, धर्मो रक्षति रक्षितः। धर्मेण हीनाः पशुभिः समानाः"।

दानवाः पठन्ति ( सुस्वरं )—

१मो दानवः—"अन्नमयं हि सौम्य मनः; अन्नं ब्रह्म इत्युपासीत; अन्नं बहु कुर्वीत, तद् व्रतम्"।

२यो दानवः—"शरीरं व्याधिमन्दिरम्, शरीरमाद्यं खलु धर्मसाधनम्"।

(द्वितीयो दानवः पाठशालाया अपरं प्रान्तं गत्वा व्यायामाभ्यासं नाटयति, तृतीयो दानवस्तत्पार्श्वतस्तिष्ठन् पुन पुनर्वदति "शरीरमाद्यं खलु धर्मसाधनम्।" ततश्च द्वावेव स्वस्थानमागच्छतः)

१मो मानवः—( दानवान् पृच्छति ) भो भो भ्रातरः, शरीरेऽस्मिन् रोगागमनस्य कारणं ज्ञायते किम् ?

१मो दानवः—न ज्ञायते, उच्यताम्।

१मो मानवः—

अत्यम्बुपानाद् विषमाशनाच्च सन्धारणान्मूत्रपुरीषयोश्च।
दिवा शयाज्जागरणाच्च रात्रौ षड्भिः प्रकारैः प्रविशन्ति रोगाः॥

२यो दानवः—किमस्य तात्पर्यम् ?

२यो दानवः—( विवृणोति ) अतिशयजलपानात्, विषमभोजनाच्च शरीरे व्याधिरागच्छति; मूत्रस्य तथा मलस्य वेगधारणाद् व्याधिः शरीरमाक्रामति, तथा दिवा निद्रातो रात्रौ जागरणाच्चापि पीडाक्रमणम्।

१मो दानवः—( देवान् प्रति ) भवद्भिरुच्यते प्राणायामबलेन शरीर-शक्तिरिति ( प्राणायामं नाटयन नासिकायाम् अङ्गुलीरर्पयति ), अस्माभिस्तु उच्यते शारीरशक्त्या मानसी शक्तिः। भवतां प्राणायामः, अस्माकन्तु व्यायामः। आगच्छत, व्यायामशालां प्राप्य शारीरशक्तेः परीक्षां कुर्महे।

( प्रतिष्ठन्ते, प्राक् देवास्ततश्च मानवास्ततो दानवाः )

द्वितीयं दृश्यम्—प्रजापतिभवनम्।

( प्रजापतिः ध्याननिमग्नः, केचिद् देवाः प्रविशन्तो दूरतस्तिष्ठन्ति, गुरोर्ध्यानावसानं प्रतीक्षमाणा अन्योन्यं तूष्णीं संलपन्ति च )

प्रजापतिः—यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमा विवेश।
य ओषधिषु वनस्पतिषु तस्मै देवाय नमो नमः॥

सर्वे देवाः प्रणमन्ति—

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः॥

१मो देवः—देव, परिसमाप्तमस्माकं वेदाध्ययनम्, समतीतानि खलु द्वादश वर्षाणि गुरुगृहमधितिष्ठतां नः। साम्प्रतमादिश्यतामस्माकं गृहगमनम्।

प्रजापतिः—सुष्ठु भणितं त्वया, ब्रह्मचर्यप्रतिपालनानन्तरं समावर्तनम्, गृहे प्रत्यावर्तनम् अनुमोदितं मया।

२यो देवः—तर्हि निवेद्यते भवान, सावशेषश्चेत् कोऽपि उपदेशः, उपदिश्यताम्।

प्रजापतिः—साधु निवेदितं, शेष उपदेशो मया प्रदीयते—"दः"

देवाः—( अन्योन्यमाननमालोकयन्ति )

१मो देवः—( अन्यं देवं प्रति ) गुरुणा उपदेशः प्रदत्त एकाक्षरमात्रं —"दः"। किमनेन बुध्यतेऽस्माभिः ?

२यो देवः—( एकान्ते ), "दः" !

३यो देवः—( सविस्मयं ) "दः" !!

प्रजापतिः—किञ्चिदपि परिज्ञातं युष्माकम् ?

१मो देवः—परिज्ञातम्। वयं खलु स्वभावेन दमनशक्ति-विरहिता अदान्ताः, अतो भवता इन्द्रियदमनमुपदिष्टम्।

प्रजापतिः—( सोल्लासं ) साधु वत्साः साधु, एतदेव मयोपदिष्टम्। अन्तरिन्द्रियनिग्रहः शमः, बहिरिन्द्रियनिग्रहो दमः।

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥

दान्तो भव, इन्द्रियाणां दमनं कुरु।

( सर्वे देवाः प्रजापतिं नमस्कृत्य, ब्रह्मलोकं परित्यज्य सुरलोकं प्रस्थिताः )

प्रजापतिः—( स्वकीयकमण्डलुं गात्रमार्जनीम् आसनादीनि च यथास्थानं स्थापयित्वा पुनर्ध्यानमग्नस्तिष्ठति। )

( प्रविशन्ति मानवाः शिष्याः )

मानवाः—( दूरे तिष्ठन्ति, अन्योन्यं संलपन्ति च )

१मो मानवः— ननु गुरुरस्माकं ध्यानमग्न इव लक्ष्यते।

२यो मानवः—प्रतीक्षस्व तावत्।

प्रजापतिः—(चक्षुरुन्मीलयन्) तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत, पश्येम शरदः शतं, शृणुयाम शरदः शतम्, जीवेम शरदः शतं, प्रब्रवाम शरदः शतम् अदीनाः स्याम शरदः शतम्।

मानवाः ( प्रणमन्ति )

अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥

प्रजापतिः—( आशीर्वादं नाटयति )

१मो मानवः—देव ! प्रतिपालितमस्माभिर्ब्रह्मचर्यव्रतम्, साम्प्रतमादिश्यतां नो गृहगमनम्।

प्रजापतिः—ब्रह्मचर्याश्रमानन्तरं गार्हस्थ्यम्. तच्च चतुर्विंशतो वर्षादारभ्यते, युष्माकमपि चतुर्विंशवर्षं परिपूर्णम्, अतः सर्वे यूयं समादिष्टाः समावर्तनाय।

२यो मानवः—तर्हि निवेद्यते भवान्; सावशेषश्चेत् कोऽप्युपदेशः, उपदिश्यताम् ।

प्रजापतिः—सुष्ठु निवेदितं युष्माभिः, शेष उपदेशः परिगृह्यतां "दः"

मानवाः—( अन्योन्यमाननमवलोकयन्ति )

१मो मानवः—( अन्यान् मानवान् प्रति ) ननु गुरुणाऽस्मभ्यं किमिद-मुपदिश्यते—"दः" ?

२यो मानवः – एकाक्षरमात्रं – दः !

३यो मानवः—हुं ज्ञायते तावत्, वयं दीनाः दरिद्राः दुःखिनश्चात एषामाद्याक्षरमुपदिष्टं—"दः"

१मो मानवः— नहि नहि विशेषार्थः कश्चिद् भवेत् ।

प्रजापतिः—अर्थः कश्चिदवगम्यते युष्माभिः ?

१मो मानवः—अवगम्यते तावत्, वयं दानधर्मविहीना अदातार इति भवता दानमुपदिश्यते ।

प्रजापतिः—परितुष्टः स्मो युष्माकमीदृशेन सदर्थेन । युष्माकं दानमाहात्म्यपाठकाले मयोक्तं—"नास्ति दानसमो धर्मः ।" "दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥" न केवलमर्थदानं दानं, किन्तूपकारचिकीर्षया वाक्यदानं मन्त्रणादानं, शक्ति-दानं चित्तदानं प्रेमदानमभयदानम् इत्याद्यपि परमो धर्मः ।

मानवाः—( प्रणम्य प्रस्थिताः । )

( ततः प्रविशन्ति दानवाः प्रणमन्ति च )

दानवाः—अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

१मो दानवः—प्रभो ! वयमपि चतुर्विंशतिं वर्षाण्यतिक्रान्ताः, अस्माक-मपि समावर्तनकालः समुपस्थितः । गृहाय गन्तुं योग्याश्चेत् सहैव वैशेषिके-णोपदेशेनास्मानपि विसर्जयितुमर्हत्युपाध्यायः ।

प्रजापतिः—हुम्, अनुमता यूयमपि गृहगमनाय । उपदेशश्च प्रदीयते—"दः"।

२य-३यौ दानवौ—( प्रजापतिसकाशाद्दूरं गत्वा उच्चैर्हसतः ) हाः हाः हाः हाः हाः, ( पुनः पुनर्हसन्तौ वदतः ) गुरुणा उपदिष्टो दः ।

१मो दानवः—( मुखोपरि अङ्गुलीः संस्थाप्य नीरवं हसति, निवारयति तौ, वदति च ) नन्वाचार्यसकाशे उच्चैर्हसितमनुचितम् । बुध्यते किमुपदेशाक्षरं—दः ?

२यो दानवः—( हसन ) दः !

३यो दानवः—( मृदु हसति ) दः ।

१मो दानवः—दम्भोऽस्माकं गुणः, अपरेभ्यो दण्डदानमस्माकं कर्तव्यम्, दर्पश्च चरित्र-भूषणम्, अतो गुरुणाऽस्मभ्यमुपदेशो दत्तः—दः

२यो दानवः—वयं दैत्याः दानवाः देववैरिणः, अतः खल्वयम् उपदेशो दः ।

३यो दानवः—नहि नहि, दीनान् दुर्गतांश्च दुर्गतिसागरे पातनमस्माकं कर्म, दुन्दुभिनादेन देवानां दोषकीर्तनमस्माकं धर्मः, दीर्घसूत्रतावलम्बनञ्च शर्म, अत एवोपाध्यायेन उपदेशो दत्तो "दः" ।

प्रजापतिः—नहि नहि, नावगतो युष्माभिर्दकारस्यार्थः । यूयं किल सततं दयाविहीना निर्दयाः, अतो "द" इत्यक्षरेण दयोपदिश्यते ।

दीने दया विधातव्या जीवेषु दुर्बलेषु च ।
निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ॥

दानवाः—ज्ञायते तावत्, दकारेण दया ज्ञातव्या । दीनान् प्रति दया कर्तव्या ।

प्रजापतिः—बाढम् । द-कारेण देवेभ्यो दमः उपदिष्टः, मानवेभ्यो दानम्, दानवेभ्यो युष्मभ्यं दया । श्रूयते किं वर्षासु गम्भीरो मेघनिनादः दः-दः-दः ? गगनमार्गे उद्दात्तो ध्वनिः द-द-दाः ? दान्तो भव इन्द्रिय-दमनं कुरु, देहि दानं द्विजातिभ्यः दयस्व दुर्गतानाम् । ( स्वरेण )

दमो दानं दया चेति त्रिविधो धर्म इष्यते ।
भव दान्तो देहि, दानं दयां कुरु भज क्षमाम् ॥

यवनिका ।

प्रकृतिविलासकाव्ये

# त्रिपथगा-सौभाग्यम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—सा० भू० कृष्णमूर्ति-शास्त्री ]

अदभ्रवरविभ्रमाङ्कुरितमारवाराङ्गना-
वशाढ्यतरुणस्फुरत्पुलिनचन्द्रशुभ्रप्रभा ।
किरातवनिताशताकलितकामकेलीलस-
त्तटीविपिनकुञ्जभूः स्रवति शन्तनुप्रेयसी ॥३२॥

स्वभावपरिपीवरस्तननितंबभाराङ्गना-
परिक्रमणधोरणीजितमरालयोषाकुला ।
अमन्दविरहव्यथाकुलितकोकशोकेन्धन-
क्षपाकरकरप्रभाकवलिताऽयते द्योनदी ॥३३॥

क्वणत्कनकसप्रभस्फुटितकेतकालिस्खलत्-
परागपरिधूसरप्रततसैकतप्रान्तभूः ।
मरुद्विधुतवीरुदुच्चलितचञ्चरीकांगना-
स्वनाकुलितकानना जयति देवनद्यात्मना ॥३४॥

समादधदृषीश्वराध्युषिततीर्थपट्टाटवी-
प्रशान्तमदकुञ्जरप्रमुखदुष्टसत्त्वार्भटा ।
गलद्बकुलकल्पितास्तरणमूलवेलाद्रुमोत्-
पतत्प्लवगसंकुला लसति शैवलिन्यामरी ॥३५॥

परस्परकुतूहलानमितसल्लकीपल्लव-
प्रवर्धितनिजार्भकद्विरददंपतिद्योतिनीः ।
कुलायशयशावकव्रजविदारितास्याहित-
स्वधान्यशकुनावनीर्वहति पुष्णती भीष्मसूः ॥३६॥

निमज्जदुरुयौवतस्तनमहीध्रसंचूर्णित-

प्रसक्तवरकुङ्कुमोच्छ्रिततरङ्गशीर्णाः कणाः ।

अमन्दरयसंप्रहृत्युदितरक्तमात्राभ्रमं

चिरं विदधतेतरां श्रितवतामंमर्त्यापगाम् ॥३७॥

मनोज्ञकलविङ्कसंस्फुरदुदारकेदारभू-

सहस्रनवरुक्मरुकलममञ्जरीरञ्जिताम् ।

विपाकरुधिरारुणच्छिदुरबिंबरज्यच्चञ्चुकां

निषिञ्चति वियत्तटिन्युभयपार्श्वभूमिं सदा ॥३८॥

निशाटनवटार्भटीमुखरिताटवीपादप-

प्रलीनबलिभुग्भयङ्करविभावरीनिर्भरा ।

मृगेन्द्रदलितेभराट्पृथुलकुंभपीठीगल-

न्निरर्घवरमौक्तिका जयति जह्नुकन्यावनी ॥३९॥

निशीथमृगयाकुलीकृतवनस्थलद्वीपितृड्-

द्रुतप्रशमनक्षमस्फटिकनिर्मलापाशया ।

नटद्द्विरदफीट्कृतिप्रतिनदन्महीभृद्गुहा-

प्रबोधितमृगादना निशि भयङ्करा स्वर्धुनी ॥४०॥

अजस्रजवकूलमुद्रुजझरोर्मिसांराविण-

प्रकामशमितक्षपाक्षुधितवन्यसत्त्वध्वनिः ।

दृषत्स्थपुटितान्तराप्रहतपूर्वपाणिन्धम-

स्फुटेतरतटीपथा ललति लेखलोकापगा ॥४१॥

उषर्बुधभृताहितित्रिनयनोरुवीर्योद्भवत्-

कुमारगुरुमातृतोपगमभूरिसंभाविता ।

द्विषन्तपपराक्रमार्यमहात्मदेवव्रत-

प्रसूर्विजयतेतरामपि सुपर्वणां देवता ॥४२॥

( क्रमशः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| September, 1940 | १८६२-शकीये भाद्रे २३श-वर्षस्य ५म-संख्या | Vol. XXIII, No. 5 |

## प्रार्थना

[ निबन्धकः—श्रीविधुभूषण-न्यायतर्कतीर्थः ]

हृदये विपुलैव वासना यदि दत्ता परमेश्वरि क्षितौ ।
न कथं कृपणे समर्पिता मयि शक्तिस्तदशेष-पूरणे ॥१॥
कुसुमे विहितः कथं पुनर्गुरुभारः खग-पाद-पातजः ।
यदि नाम तवेदमीप्सितं मृदुकायं कुसुमं कथं कृतम् ? ॥२॥
किमिदं ननु कौतुकं पुनस्तव नित्यं विलसत्कुतूहले !
चरणे बहुशस्तवार्थ्यते विरमास्मान्मम मर्मघातनात् ॥३॥
व्यथया व्यथया मनः क्षतं हृदयं दुःखभरैर्निपीडितम् ।
विवशं श्रममालया वपुश्चरणौ मे न पुरः प्रधावतः ॥४॥
भ्रमितो मृगतृष्णिकां त्वया भुवि विस्तार्य जनोऽयमग्रतः ।
बहुधा कृतवञ्चनस्ततश्चतुरे साम्प्रतमेष मुच्यताम् ॥५॥
अयि कल्पनया नृपः कृतो हसितो दीनतमस्त्वयं पुनः ।
गिरिमूर्ध्नि निधाय सादरं सहसा भूमितले निपातितः ॥६॥
पतनेन विचूर्णितास्थिके विगलत्पञ्जरबन्धदुर्बले ।
उपहासविकस्वरा मयि त्वमकार्षीः कतिधा कृपाच्छलम् ॥७॥

निपुणासि विमोहबन्धनैः प्रतिबद्धुं भुवि मूढमानवान् ।
त्वमहो न च संयता स्वयं तव मायाभ्रमितं जगत् सदा ॥८॥
परिहासपरे ! सुदारुणां तव लीलां मम मर्मघातिनीम् ।
प्रतिसंहर वीक्ष्य कातरं नियतं मां किमहो न खिद्यसे ? ॥९॥
अथ कौतुकमेव रोचते यदि ते निष्ठुरमानसे ! तदा ।
कुरु जीवननाट्यमन्तगं कृपयेत्येव चते तवान्तिके ॥१०॥

# आमिष-निरामिष-भोजनम्

[ निबन्धकः—श्रीशशिभूषण-स्मृतितीर्थः ज्योतिर्विनोदः ]

विदांकुर्वन्तु प्रियपाठकाः यदामिषनिरामिष-भोजने विवदन्ते विवादिनः। केचन मनीषिणो ब्रुवन्ति यन्मांसाशनमन्तरेण न केषाञ्चित् स्वास्थ्यसंरक्षणं दीर्घकालजीवित्वञ्च सम्भवति। तैरुच्चकण्ठमुद्घुष्यते—पृथिव्यां सर्वा बलशालिन्यो जातयो मांसमश्नन्ति। याश्च जातयो मांसं नाश्नन्ति, तासां जातीनां शौर्यवीर्यसाहसाभावोऽवलोक्यते। ता एव जातयो दुर्बलाः परचरणावनता भवन्ति। मांसाशनेन यज्जातीनां बाहुबलवृद्धिर्जायते तत्र परपदानतामार्यजातिं दृष्टान्तत्वेनोदाहृत्य, मांसभोजने प्रमाणं प्रदर्शयितुं विशेषेण ते चेष्टन्ते।

ये च पुनर्निरामिषाशनपक्षपातिनो मनीषिणस्तेषां मते मांसभोजनं मानवानां सर्वविधानिष्टकारणम्। ते मनीषिणो वदन्ति मांसभोजनं सर्वेषां व्याधीनां निदानम्। मांसाशनेन काम-क्रोध-लोभादयः कुप्रवृत्तयो वर्द्धमानाः समाजे दुराचारपरायणान् मानवान् सृजन्ति। इति मतद्वयमा बहमानकालतः प्रचूरतिस्म।

वयन्तु—पुनरेतयोरेकमपि मतमभ्रान्तमिति नैव मन्यामहे। "नहि

मांसभोजनमन्तरेण पूर्णस्वास्थ्यं दीर्घजीवनलाभश्च न भवतीति युक्तिसङ्गतं वाक्यम्, निरवच्छिन्ननिरामिषाशिनामपि पूर्णस्वास्थ्य-दीर्घजीवित्वदर्शनात्। किन्तु मांसे यद् बलकरमुपादानं विद्यते यथापरिमाणं तदुपादानग्रहणं विना स्वास्थ्यहानिः शारीरदौर्बल्यञ्च जायत इति तु सत्यतया स्वीकुर्मः। तादृशमुपादानञ्च दुग्धामिक्षाद्विदलरोटिकादिषु निरामिष-खाद्य-वस्तुष्वपि विद्यते। अतो मांसाशनं विहाय प्रागुक्तनिरामिषभोजनेन सर्वेषां स्वास्थ्यमव्याहतं भवितुमर्हति। अस्माकं देवीकल्पा आर्यविधवा निरामिषाशना अपि बहुसधवापेक्षया परिश्रमसाध्यसर्वविधसांसारिककृत्यमकातरं सम्पादयन्त्यः सुस्थशरीरा दीर्घजीवनाश्च जायन्ते। एतस्मिन् भारतवर्षे बह्वयो जातयः सन्ति; याः पुरुषानुक्रमं कदापि मांसं नाश्नन्ति। महाराष्ट्रीय-ब्राह्मणा माडवारीया जैना मद्रप्रान्तीयब्राह्मणाश्च सततमामिषाशनविरताः। वयं वङ्गवासिन आमिषाशिनोऽपि, साहस-बल-क्लेशसहिष्णुतादिषु न कथमपि तेषां समानाः। भारतीयसैन्यानाम् अनेके निरामिषाशिनः सन्ति। राजानुग्रहलब्धप्रत्यहमांसभोजनानुरक्त-पाश्चात्त्यसैन्यापेक्षया, सैनिकजनोचितपरिश्रमकृत्ये, युद्धक्षेत्रे साहसवीरत्वप्रदर्शने च भारतीयसैनिका नांशतोऽपि हीनाः। लर्ड-रबर्टस्-प्रभृतयः प्रधाना इंग्रेज-सेनापतयोऽप्येकवाक्येनैतत्सत्यमिति स्वीकृतवन्तः।

नहि कस्याश्चिज्जातेः स्वाधीनताप्राप्तौ केवलमाहारः कारणं सम्भवति। तथा सति वङ्गवासिवदन्नमत्स्यभोजिनः क्षुद्रकलेवरा जापानवासिनो मांसभोजिविशालदेह'रुष'जातिं स्थलयुद्धे जलयुद्धे वा न कथमपि पराजेतुं समर्था भवेयुः। किञ्च भारतवासिनो महम्मदीयधर्माणो यवना न पराधीनताश्रृङ्खल-बद्धा भवेयुः।

अत एव वीरत्व-साहस-क्लेशसहिष्णुतादीर्घजीवित्वेषु न केवलं मांसाशनं बीजं, निरामिषाशिनामपि वीरत्वादेः प्रत्यक्षेणोपलभ्यमानत्वात्।

इदानीं युरोपीयसैन्यविभागे व्यायामक्रीडायां परीक्षया विशेषतः प्रतिपन्नं यद् दीर्घकालव्यापक-परिश्रमसाध्य-कर्मणि मांसजातीयभक्ष्यमपेक्ष्य शर्करा-

जातीयखाद्यद्रव्यं गुणैः श्रेष्ठतममिति। कदाचिज्जर्मणप्रदेशे बहुदूरं पदचारेण गमनार्थं कतिपयलोकेभ्यः शर्कराघटितखाद्यं, कतिपयेभ्यो मांसं कतिपयेभ्यश्च मद्यं भक्षणाय प्रदत्तम्। ततश्च ये शर्कराघटितद्रव्यभोजिनस्ते सर्वे एव तं दीर्घपथमतिक्रमितुं समर्था आसन्। ये च मांसमशितवन्तस्तेषां द्वित्रा एव तादृशपथगमने समर्था बभूवुः। अन्ये च यथाकालं गन्तव्यस्थानमुपस्थातुं न समर्थाः। ये च पुनः कृतमद्यपानास्ते सर्वेऽर्द्धपथमनतिक्रम्यैव विश्रामसुखमनुभूतवन्तः। दृश्यते च व्यायामक्रीडापारदर्शिनः शर्कराजातीयखाद्यमेवाधिकं भक्षयन्ति।

सिंहव्याघ्रादि-मांसाशिपशुदृष्टान्तमुपन्यस्य, अनेके मनीषिणो वदन्ति, मांसभोजनेनैव शरीरे प्रभूतबलसञ्चारो जायते। अस्माभिरभिवीक्ष्यते यत् सिंहव्याघ्रादयो मांसाशिनो जन्तवः प्रभूतबलशालिनः क्षिप्रगामिनो महतो गोमहिषादीन् प्राणिनः पृष्ठेन वोढुं समर्था अपि, दीर्घकालव्यापकगुरुतरपरिश्रमसाध्ये कर्मणि न उद्भिद्भोजिभिर्मातङ्गतुरङ्गोष्ट्रादिभिः समाना भवन्ति। एतादृशाः कष्टसहिष्णुजन्तवो न दृश्यन्ते।

व्याघ्रवदुल्लम्फनेन दूरतरं देशं गन्तुमसमर्थोऽपि तुरङ्गम आरोहिणं पृष्ठे निधाय दशक्रोशाननायासेन समवेगं प्रधावति। मातङ्गोऽप्यतिदुर्वहभारवहने समर्थः। न खलु न विदन्ति प्रियपाठकाः, मरुप्रदेशे भारवाहिणामुष्ट्राणां क्लेशसहिष्णुताम्। मांसाशिनौ द्वीपि-पञ्चाननौ नैतादृशदीर्घकालव्यापकपरिश्रमसाध्ये कर्मणि कदापि क्षमौ भवितुमर्हतः।

ये च पुनर्मन्यन्ते प्रचुरमांसभोजितयैव सिंहव्याघ्रौ बहुदूरलम्फने समर्थौ, तन्न सङ्गतम्, यत् उद्भिद्भोजिनौ हरिणवानरावपि लम्फप्रदाने समर्थौ दृश्येते। महामनीषिणामृषीणामप्येतन्मतं यत् तमोगुणवर्द्धकमांसादीनामाहारेण मानवानामुग्रस्वभावाः कामादयो रिपव उत्तेजिता भवन्ति। मांसाशिनां जन्तूनां मांसाशिनां मानवानां च दर्शनेन प्रागुक्तं फलं प्रायशोऽवलोक्यते।

---

प्रकृतिविलासकाव्ये

# त्रिपथगा-सौभाग्यम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—सा० भू० कृष्णमूर्ति-शास्त्री ]

महाप्रलयवारिधिव्यतिकरक्रमाभ्रङ्कष-
प्रवाहविपरिभ्रमद्रविविधुग्रहोडुव्रजा ।
निमज्जननिरुच्छसद्दिगिभदुःश्रवाक्रन्दना
तरङ्गपरिवर्तितामरसनाथसङ्क्रन्दना ॥४३॥

प्रतिस्मरभिदद्रिवीच्यसकृदात्मनागभ्रम-
प्रताम्यदसुलालसत्रिदशपत्यनर्थोद्यमा ।
समुत्प्लवनसाधनस्तनसुवर्णकुंभाप्सरो-
मुखाब्जकचशैवलश्लथितपुष्पमुक्ताकुला ॥४४॥

तरङ्गगलितांशुकोत्प्लुतसुपर्ववाराङ्गणा-
नितंबपुलिनव्रजत्सुरविरोधिनेत्राण्डजा ।
निपातितसुरद्रुमद्रुतविनष्टचिन्तामणि-
प्रमुष्टसुरकामधुक्प्रसृमरोर्म्युदग्रारवा ॥४५॥

युगान्तमरुदुच्छ्रितोर्म्युदरलीनमेघङ्कर-
द्युपुष्पवदुदीतभीकरमहान्धकारावृता ।
अजस्रपरिवर्धितत्रिदशभूरिहाहारव-
प्रकारमुखरीकृताखिलहरिज्झरस्पूरिता ॥४६॥

विलुंपितनिलिंपभूस्सुरसरिद्वरेत्थंक्रुधा
वहन्त्यपि धरातलावतरणप्रसंगोद्भवा ।
प्रतिक्षणविजृंभिताप्रतिहतावलेपोद्धता
तृणाग्रहिमबिन्दुतां गिरिशमूर्धनि प्रापिता ॥४७॥

कठोरतपसा ततो विधुवतंसमाराधयन्
भगीरथनृपश्चिरादशिथिलप्रयत्नान्वितः ।
अवाप विबुधापगां धरणिमानिनीषुर्व्रतो
समुद्यमसुरद्रुमः फलति हि क्षमां बिभ्रताम् ॥४८॥
भगीरथमनुव्रजन्त्यधिपथं च जह्नोः कुटी-
मनीनशदृषिर्द्रुतं परमकोपनस्तां पपौ ।
ततस्स्तुतिशतैः कृतैश्चिरतरं प्रसन्नः पुन-
र्जहौ श्रवणतस्ततः प्रभृति जह्नुकन्या स्मृता ॥४९॥
विधाय महता परिश्रमभरेण मर्त्यापगां
स्वमातुलगरुत्मदुक्तयनुसृतौ भृशं श्रद्दधत् ।
नृपस्य, महितान्पितॄन् कपिलकोपदावानल-
प्रपातशलभायिताञ्शुभजलैरतार्षीन्मुदा ॥५०॥
हरामनिशमंहसां हरशिरस्तटीलालसां
जगत्त्रितयशर्मदां जनिमृतिप्रणाशप्रदाम् ।
समस्तसरिदीश्वरीं समवने सदा भास्वरां
भजध्वमवनिं गतां जनिभृतोऽद्य जह्नोः सुताम् ॥५१॥
अजस्रममरावतीविहरणैकबद्धस्पृहा-
प्यधिक्षिति जनुष्मतां कलयितुं महानुग्रहम् ।
समुन्नतहिमावनीधरवरादमर्त्यात्मनः
प्रसूः प्रभवति स्वयं सकलभाग्यसन्दायिनी ॥५२॥
समस्तसुरमन्दिरप्रवरराजवाराणसी-
विहाररसिकाग्रणीः स्फुरति विश्वनाथोऽनया ।
इयं च परिभूष्यते भगवतैव तेनान्विता
मणीकनकसङ्गतिर्जगति कस्य न स्यात्प्रिया ॥५३॥
कलिन्दगिरिकन्यकासरसनीरगोदावरी
विधुप्रियसुताऽनघा भगवती सरस्वत्यपि ।

कवेरतनुजामनोहरतरा च सिन्धुर्धुनी
　　वहन्ति षडिमाः क्षितौ सुरसरित्सुसख्यः शुभाः ॥५४॥
निशाचरकुलानलप्रलयकालमेघात्मना
　　श्रियः पतिरवातरन्निगमवर्त्मरक्षापरः ।
स यत्र परिपावयन्त्यधिभु तामयोध्यां पुरीं
　　सरिच्च सरयूः स्वयं द्यु सरितैव सङ्गच्छते ॥५५॥
स्ववेणुनिनदैर्हरन्नमरशाखिमूले गवां
　　व्रजं व्रजपुरन्ध्रिभिश्चिरमरंस्त नन्दात्मजः ।
यदीयतटमाविशन्विशदकौमुदीबन्धुरं
　　सुताऽहिमरुचेश्च सा व्यतिकरोति गङ्गाम्भसि ॥५६॥
स्रवन्त्यधिधरान्तरं शुभपयाः सरस्वत्यपि
　　प्रसिद्धतरवैभवा जगति, संभिनत्ति स्वयम् ।
झरैरमरदीर्घिकायमुनयोश्च यत्रोच्छ्रितैः
　　प्रयागमवनौ हि तं सकलतीर्थराजं विदुः ॥५७॥
अभङ्गुरतरङ्गया महिमभिर्भृशं तुङ्गया
　　कृपालसदपाङ्गया हरशिरस्स्फुरत्सङ्गया ।
वितीर्णभवभङ्गया श्रितवतां तया गङ्गया
　　मिलत्यमितकौतुकात्क्वचन धातृपुत्रा नदी ॥५८॥
सतां हृदिव निर्मलं वृजिनतूलकालानलं
　　रघूत्तमसमर्चितं निगमसंहतिश्लाघितम् ।
पुरातनयशोऽन्वितं पुरभिदुत्तमाङ्गश्रितं
　　जयत्यमरनिम्नगोदकममन्दमाल्मोक्षकम् ॥५९॥
अनेकमुखमंब ते निगमनं च यादःपतौ
　　व्यनक्ति तदिह स्फुटं शतमखादिदेवेडिते ।
गुरोरपि समुद्धतप्रकृतिकस्य यादृक्फलं
　　सतां खलु विचेष्टितान्युपदिशन्ति नीतीर्भुवाः ॥६०

प्रशान्तिमुपगच्छतात्कलुषितं जगद् जनै-
रवन्तु पृथिवीभुजो निजजनान्सुनीत्यन्विताः ।
चकासतु चिरं श्रुतिस्मृतिपुराणधर्माः क्षितौ
तव त्रिपथगे ! सदा विजयतां च सौभाग्यकम् ॥६१॥

---

## ग्रन्थनिकषः

Annals of the
Sri Venkateswara Oriental Institute (Tirupati)
Editor
K. V. Rangaswami Aiyanger.

तिरुपटिनगरस्थ-श्रीवेङ्कटेश्वरप्राच्यकलाशालाप्रकाशितामिमां पत्रिकाम् अभिनवतत्त्वविमर्शनसमृद्धां प्रकाशितानां ग्रन्थानामपूर्व-व्याख्यानशैल्या अप्रकाशितानां ग्रन्थानां प्रकाशनेन च सर्वविद्वज्जनहृद्यामवलोक्य वयं प्रमुदिताः स्मः। अस्याः पत्रिकाया भूयान् प्रचारोऽस्माभिः काम्यते। न केवलं गीर्वाणवाणीरसिकानां नो वा प्राचीनभारतीयविद्यानुरागिणामियमुपकाराय प्रमोदाय च सम्पत्स्यते, परं विद्यार्थिनां नानाविद्यानिष्णातानां विदुषामपि हृदयमावर्जयितुं समर्था भविष्यति। तत्त्वं विविदिषूनाम् इतिवृत्तविमर्शकानाञ्चानधिगतार्थज्ञापनेन प्रामाणिकत्वेन च नानाप्रबन्धजातसमाढ्येयं पत्रिका सम्मता भविष्यतीत्यत्र नास्त्यस्माकं वितर्कलेशस्याप्यवसरः।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| October, 1940 | १८६२-शकीये आश्विने २३श-वर्षस्य ६ष्ठ-संख्या | Vol. XXIII, No. 6. |


## पञ्चाननस्य शिवलोकाधिगमः


[ निबन्धकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः शास्त्री]


अहो दुर्दैवविलसितं भारतवर्षस्य, अहो भागधेयविपर्यासः संस्कृत-भाषायाः, अहो निरवलम्बता सनातनधर्मस्य, अहो नैष्करुण्यं भारत-भाग्यविधातुः, अहो सर्वङ्कषत्वं कालहतकस्य ! यद् यो नाम शैशवात् प्रभृत्येवासीदव्याजवल्लभो भगवत्या गिरां देव्याः, यमेवोपष्टम्भमवलम्ब्याद्यापि न नामशेषतामनुप्राप्तो भारतीयानां सनातनो धर्मः, येन प्रणीतं शक्तिपरं भाष्यं पारमर्षसूत्राणाम्, यस्मै चाविर्भूय स्वयं देवी भगवती शास्त्रार्थमन्वशात्, यस्माच्चोदविजन्त कृतान्तादिव पाषण्डिनः, यस्य च निरनुरोधं निखिल-सहृदय-जनश्लाघनीय-विरुदप्रत्याख्यानं विस्मयस्तिमितानीव विदधौ सचेतसां चेतांसि, यस्मिंश्च दृष्टमनितरसाधारणं सामानाधिकरण्यमप्रतिमस्य पाण्डित्य-स्यानुपमस्य च श्रद्धालुत्वस्य। सोऽपि गौतमान्वयसम्भवो भट्टपल्ल्य-भिजनो वाराणसीनिवास आसेतुहिमाचल-शास्त्र-गहनपञ्चाननः संस्कार-कममन्य-मत्तकरिकुम्भपीठ-पाटनपञ्चाननः प्रतिवादि-प्रतिक्षेपण-पञ्चाननः शास्त्र-साहित्य-व्याख्यान-पञ्चाननः सदाचार-समर्थन-पञ्चाननः सनातनधर्म-

प्रचारण-पञ्चाननः पञ्चानन-तर्करत्न-भट्टाचार्यो व्यतीते सौराश्विनस्य पञ्च-विंशदिवसे परमपवित्र-वाराणसीपर्यन्ते मणिकर्णिकातीर्थे विहाय जराजीर्णं भौतिकं शरीरं शिवलोकमनुप्रपन्नः। मन्ये जन्मभूमेः साम्प्रतिक्या परिस्थित्या विशकलितस्वान्तः सुहृत्तमेनेन्द्रनाथेन संमन्त्रयितुमेव सुरलोकं संप्रस्थितोऽयं महापुरुषः।

नूनं स्मर्यते पाठकमहाभागैर्यद्दिनकतिपयात् पूर्वं समनुष्ठिते परिषदो वार्षिकोत्सवे समुन्मोचितमालेख्यं महाभागस्यैतस्य। प्रायेण परेतानामेव प्रतिकृतयः संस्थाप्यन्ते संस्थासु साधारणीसु, इत्यपि न खलु न विदितं विदितवेदितव्यानाम्। अतस्तदात्व एव समजनि शङ्का सहृदयहृदयेषु यन्नातः परं चिरं जीवेयुरिमे महात्मान इति।

प्रियपाठक-महाभागाः, आ पञ्चमादेव वर्षाल्लिपिपरिचयसमनन्तरमेव वङ्गवासिप्रभृतिषु पत्र-पुस्तकादिषु सश्रद्धं वाचिता अस्माभिर्महापुरुषस्यैतस्य परःसहस्राः प्रबन्धाः, अस्मिन्नपि वर्षे कियद्भ्यश्चिदेव दिवसेभ्यः पूर्वं पठितं विपश्चिदपश्चिमानामेषां पश्चिमं प्रार्थनं विगलदश्रुधारमस्माभिः। आसीच्चास्माकं बलवती प्रत्याशा यत् पूजावकाशे पुनरपि प्रस्थाय पुण्यपुरीं वारणसीमधिगच्छेयमन्तिमं सन्दर्शनं विन्देयं चान्तिमामाशिषं लोकगुरूणाममीषाम्। परं के वा वयमेवमाशास्तुम्। तदानीमेव समुपनता पविपातसहोदरी वार्ता, मूलतश्च छिन्ना नो मनोरथव्रततिका। अवितथं खलूक्तं कविवर्येण—

यच्चिन्तितं तदिह दूरतरं प्रयाति
यच्चेतसा न गणितं तदिहाभ्युपैति ॥ इति।

रे रे कालहतक! महानुभावमिममप्रसारयता वृथैव त्वयायासितं आत्मा। यावदत्र भारतेऽवशिष्यत एकोऽपि साहित्यरसिको वा दर्शन-प्रवीणो वा प्राचीनाचारबद्धश्रद्धो वा सनातनधर्मसमुन्नतिकामो वा तावदेव जीविष्यत्ययं महात्मा तावदेव ध्मास्यते सद्धर्मपाञ्चजन्यं पञ्चाननेन, तावदेव देदीप्यिष्यतेऽस्य सौम्यमधुराकृतिः, तावदेव श्रोष्यतेऽस्य स्निग्ध-गम्भीरनिर्घोषः कण्ठस्वरः।

सहृदयाः, कति वा न प्रतिदिनमेव समुत्पद्यन्ते मनुजाः कति वा न परित्यजन्ति प्राणान् प्राणिनः। ते तु प्रायेणाहारनिद्राभयादिसक्ताः पशुसमानधर्माणो मातुर्यौवनवनोच्छेदे कुठारायमाणाः परिवर्द्धयन्त्येव भारं भूमण्डलस्य। पञ्चाननप्रतिमाः पुनर्वैदुष्यविशेष-प्रज्ञाः प्रकर्ष-श्रद्धातिशयसमुद्भासितदिगन्तरालाः सन्ताना नैव समुपजायन्तेऽन्तरेण पित्रोस्तीव्रतरां तपस्याम्। परमधार्मिकोऽस्य जनको नन्दलालभट्टाचार्यो सुशीलया सहधर्मिण्या साकं सुचिरं तं तं धर्ममनुतष्ठौ, विशेषतश्च महेश्वरस्य प्रीत्यर्थं विविधान् व्रतनियमान् परिपालयामास। ततश्च तपःसमाराधित-पञ्चाननप्रसादात् समधिगतजन्मायं बाल इति पञ्चानन इत्येवास्य नाम विदधे पिता। अपि नाम तदानीमेव प्रतीतं धार्मिक-धौरेयेण नन्दलालेन सर्वथाऽन्वर्थाभिधानोऽयं बालः सम्पत्स्यतेति।

महाभागाः, आ बाल्यात् कतिकृत्वो वा सर्वतन्त्रस्वतन्त्रधिषण-कुशाग्रीयधी क्षुरधारमति-सर्वतोमुखप्रतिभप्रभृतिशब्दा नोपयाताः श्रवणसरणिमस्माकम्। प्रायेण विशेषणान्येवंविधानि पुरुषेभ्यो व्यावृत्तानि श्रुतावेवावतिष्ठन्ते, परं तर्करत्नमहोदये तेषां समन्वयः कस्य वा विस्मयं नोपजनयामास सहृदयस्य। यत्सत्यं प्रतिमूर्तिरेवायमासीन्नवनवोन्मेषशालिप्रज्ञालक्षणायाः प्रतिभायाः।

सुरगुरुकल्पेनामुना श्रुतेरा च साहित्यात् किं वा शास्त्रं नालोचितम्, किं वा पुस्तकं नाध्यापितम्, कस्य वा रहस्यं नोद्घाटितम्, कस्मिन् वा विषये नाऽऽरचितः प्रबन्धः, क्व वा प्रघट्टके न प्रवर्तितो विचारः। सुगृहीतनाम्नामपि वैदिकानां वेदार्थगताः संशयास्तेन निरस्ताः, स्मृतिशास्त्रनिष्णाता अपि तत्पादमूले स्मृतिशास्त्रमधीयन्त इत्यसकृदेव प्रत्यक्षीकृतमस्माभिः।

रत्नखेट-घनश्यामप्रभृतिभिर्बाल्य एवाऽऽत्मनो वाग्देवीवाङ्मयं साटोपं समुल्लिखितम्। परं 'सावित्र्याः प्रथमं यमद्भुतगुणं वव्रे स्वयं भारती' इति यथा तर्करत्नमहोदयेऽन्वेति तथा नान्यत्र क्वापीत्येव मतिरस्माकम्।

उपनयनतः प्रागेव विरचितान्यनेन बहूनि पद्यानीति सुविदितमेवैतद् भट्टपल्लीवास्तव्यानाम्। पञ्चवर्षेण शिशुनैवैनेन प्रथमतः प्रवृत्तं प्रणेतुं पद्यानि। अदूरविंश एव वर्षे वर्तमानेन सम्पादितैनेन जन्मभूमिसमाख्या समीचीनतमा वङ्गभाषामयी मासिकपत्रिका।

तर्करत्नमहोदयेन सम्पादितेष्वनूदितेषु च

१। महाभारतम्।
२-३। रामायणम्, अद्भुतरामायणम्।
४। योगवासिष्ठम्।
५-२१। भविष्यवर्जं महापुराणानि सप्तदश।
२२-२५। उपपुराणानि चत्वारि सौरादीनि।
२६-४१। मन्वादिसंहिता विंशतिः। गर्गसंहिता।
४७-४८। श्रीमद्भगवद्गीता, श्रीमद्भगवती गीता।
४९-५०। व्रतमालाविधानम्, नित्यकर्म।
५१-५२। महानिर्वाणतन्त्रम्। तन्त्रसारः।
५३। श्रीशङ्कराचार्यग्रन्थावली।

एव विशेषतः समुल्लेखमर्हन्ति।

एतद्विरचिता मूलग्रन्थाश्च—

१-२। ब्रह्मसूत्रशक्तिभाष्यम्। ईशोपनिषद्भाष्यम्।
३-४। श्रीश्रीचण्डीदेवीभाष्यम्। श्रीश्रीगीताशक्तिभाष्यम्।
५-६। सांख्यदर्शनपूर्णिमा। वैशेषिकदर्शनपरिष्कारः।
७। शाक्तवादसारः।
८-१०। द्वैतोक्तिरत्नमाला (न्यायप्रकरणग्रन्थः), मुकुन्ददेवात्मनिदर्शनम् (खण्डनखण्डखाद्ये पङ्क्तिपरिष्कारः), अनुमितिविवृतिः (नव्यन्यायानुमितिटीका)।
११-१२। अमरमङ्गलम् (नाटकम्), कलङ्कमोचनम् नाटकम्।
१३। नेतृचरितम् (भाणः)

१४-१६। सर्वमङ्गलोदयम् ( श्लिष्ट-काव्यम् ), पार्थाश्वमेधम् ( विंशति-सर्गात्मकं महाकाव्यम् ) श्रीविष्णुविक्रमम् ( नवसर्गात्मकं महाकाव्यम् )।

१७-१८। प्राणदूतम्। इन्द्रियानुशासनम्।

१९-२२। स्तोत्रावलिः। मातृकापञ्चाशिका। राजप्रशस्तिः। शोकः।

२३-२४। धर्मसिद्धान्तः। मन्त्रमहिमरहस्यम्।

भवभूतिविरचितं मालतीमाधवप्रकरणमुपजीव्य सरसमधुरा मालती-माधवसमाख्याख्यायिका, आचार्यदण्डिनो दशकुमारचरितञ्चावलम्ब्य निरतिशयं कौतुककरं दशकुमारचरितम्, रत्नावलीनाटिकायाश्चानुवादोऽस्य बङ्गभाषामयप्रबन्धेषु प्रधानानि।

---

# संस्कृत-साहित्यपरिषदश्चतुर्विंशवर्षीयो महोत्सवः

व्यतीते सौराश्विनस्य पञ्चमदिवसे शनैश्चरवासरे कलिकाता युनिभा-सिटिइनष्टिटिउट्भवने बङ्गदेशीय-प्रधान-धर्माधिकरणप्राड्विवाकानां स्वनाम-धन्यानां श्रीमतां मन्मथनाथमुखोपाध्यायमहोदयानाम् आध्यक्ष्येण सुनिष्पन्नः संस्कृतसाहित्यपरिषदश्चतुर्विंशवर्षीयो महोत्सवः।

श्रीमत्-सनत्कुमारचट्टोपाध्यायमहोदयेन सङ्गीतया गीत्या समुद्बोधि-तायां संसदि सभापतिमहोदयेन विश्ववरेण्यस्य पण्डितकुलललामभूतस्य मूर्ति-मतः प्राचीनसदाचारस्य श्रीमतः पञ्चाननतर्करत्नमहोदयस्य प्रतिकृते-रावरणमुन्मोचितम्*। अवसरेऽस्मिंस्तैस्तैः पण्डितवर्यैर्विपश्चितकुलशिखा-मणेरस्य पण्डितप्रकाण्डस्य तांस्तान् गुणानुद्दीर्य प्रकाशयामासिरे, स्वोपज्ञं

---

* दुःखदुःखेनेदं निवेद्यते यदयं महात्मा व्यतीते सौराश्विनस्य पञ्चविंशदिवसे (अस्याभ्युदयस्य विंशतिदिनाभ्यन्तर एव) काशीतलवाहिन्यास्तीरे परमसभ्युदय-मवाप्तवान् इति।

वाग्मिताविशेषाः। एभिः किल कुशाग्रधीभिर्महात्मभिः प्रायेण नवतिर्ग्रन्था निर्माणानुवाद-संस्करणादिभिर्भूषिता इति महानयं भाग्योदयो वङ्गाभिजनाना-मस्माकम्। एतेषु चैकविंशतिः स्वयं विरचिताः शिष्टेष्वनेकेऽनूदिताः स्वल्पाश्च संस्कृता इति। अध्यापक-श्रीयुत-वटुकनाथभट्टाचार्येण च स्वरचितास्तत्प्रशस्तिगर्भाः केचन श्लोकाः पत्रारूढा एव वाचिताः। ते चैते सुललिताः श्लोकाः—

स्वाध्यायाभ्यसनं निवृत्तमधुना ब्रह्मण्यमुत्पीडितं
प्राणान् निर्जरभारतीपरिचराः कृच्छ्रेण बिभ्रत्यमी।
धर्मस्तिष्ठति वा न वेति मनुजाः संशेरते सन्ततं
हा हा दुर्दिनमत्र पुण्यनिलये संवर्धते भारते ॥१॥
कालेऽस्मिन् प्रचलत्यनर्थबहुले विद्यातपःसम्भृतं
ब्रह्मण्यं सुमहद् विरूपजनताचित्तस्य विस्मापनम्।
उच्चैर्धारयता प्रतीपघटना मत्वा तृणायान्वहं
दार्ढ्यं दुर्लभमेव देव भवता लोके प्रमाणीकृतम् ॥२॥
संसारे परिवृत्तिधर्मिणि तथा काले सदाऽग्रेसरे
नित्यं भ्राम्यति भाग्यचक्रवलये राष्ट्रस्य लोकस्य च।
धर्मो नश्यति नैव केवलमहो न ध्वंसते धार्मिको
दृष्टैषा भवतां प्रतीतिरचला श्रद्धा तथा शाश्वती ॥३॥
लौल्यं जात्ववलम्बितं न विषयास्वादे सुखानां कृते
लब्ध्वा राजकुलादुपाधिमतुलं नैवादरो दर्शितः।
हित्वा जन्मभुवं प्रियां हरपुरी हृद्ग्रन्थिभित् संश्रिता
शास्त्रीया विदुषोऽत्वरेऽपि समये सर्वे समाराधिताः ॥४॥
शास्त्रग्रन्थभरप्रकाशनिरतो व्यासावतारः कला-
वाचार्यो ननु माधवः प्रकटयन् प्राप्तः पुराणावलिम्।
गीतायां मुनिबादरायणकृते ब्रह्मार्थसूत्रे तथा
भाष्यं शक्तिपरं न्यवेशि भवता शक्त्या धियोऽपूर्वया ॥५॥

आयुर्वार्द्धकसीमरूढमसवः क्षीणा रुजा विक्लवा
लीना देवनदी-तटे कुशमये तल्पे विशीर्णा तनुः
पादाब्जे गिरिजा-पतेर्भवहरे चेतः सदा रज्यते
चित्रं शास्त्रचये तथापि धिषणा नाद्यापि विश्राम्यति ॥६॥

वन्द्यानां वरणीय ! देव ! भवते कोऽर्घ्यः समाहार्य्यतां
नानारत्नविभूषिते विभुपदे किं वा त्रिपत्रार्पणैः ।
देवे भास्वति सर्वलोकनयने दीपो यथैवार्प्यत
आस्तामस्तमनोन्मुखाय भवते बद्धः प्रणामाञ्जलिः ॥७॥

यदीहासामर्थ्यात् स्वजन इति वाऽत्यन्तिकतया
न शक्यो बोद्धुं ते गुणगणगरिम्णोऽवधि-लवः ।
प्रणम्यानामग्र्य ! प्रथितमहिमन् ! दीप्त-धिषण !
नतिर्नित्यास्तां मे तव चरणयुग्मे त्वगणिता ॥८॥

अनन्तरञ्च स्वर्गतस्य पण्डितधुरीणस्य महामहोपाध्याय-कुञ्जविहारि-तर्कसिद्धान्तमहोदयस्य प्रतिकृतेरावरणमुन्मोचितम् । अस्मिन्नप्यवसरे वाग्मिभिस्तस्य पण्डितकुलमण्डनस्य गुणान् उपजीव्य महती वैखरी प्रकाशिता । ततश्चान्यतरसम्पादकेन श्रीमता अमरेश्वरठाकुर-वेदान्तशास्त्रिमहोदयेन विगत-वर्षीयं कार्यविवरणं पठितम् । द्वितीयसम्पादकेन श्रीमता गणपतिसरकार-विद्यारत्नमहोदयेन च व्यतीतसाधारणसभायां निर्वाचितानां परिषदो विभागीयकार्यपरिचालकानां कार्यनिर्वाहकसदस्यानाञ्च नामान्युत्कीर्तितानि ।

ततश्च सभापतिमहोदयेन विगतवर्षीयेऽभिनये कौशलविशेषं समुद्-भावयद्भ्यस्तेभ्यस्तेभ्यः शैलूषेभ्यस्तैस्तैः प्रतिश्रुतानि पदकानि यथायथं विभज्य संस्कृतशिक्षायाः प्रयोजनीयतावलम्बनेन महद् वाग्वैदग्ध्यं प्रकटी-कृतम्, खृष्टीयैकचत्वारिंशदधिकोनविंशशतकस्य अक्टोवरमासाभ्यन्तरे यथा परिषद्गृहं निर्मितं भवेत्तदर्थं सर्वैर्यतनीयमिति चान्ततः प्रकटय्य सभाभङ्गो विहितः ।

सभान्ते च परिषत्सदस्यैः पण्डितप्रकाण्डस्य राजकीयमहाकलाशालायां न्यायाध्यापकपद्मध्यासीनस्य श्रीमतः कालीपदतर्काचार्यस्य कृतिं "प्रशान्त-रत्नाकरं" नाम नाटकमभिनीय सदस्यानां मानसान्यावर्जितानि। सोऽयमस्य नाटकस्य कविः साम्प्रतिकेषु जीवत्सु संस्कृतकाव्यप्रणेतृषु स्वप्रतिभया-ऽभिनेयवस्तुविचारचातुर्येण तदनुगुण-नाटकादिनिर्माणेन च प्राधान्यमवगा-हत इत्यत्र नास्ति नः संशयः। इदमत्र विशेषतो मानसमावर्जयत्यस्माकं यज्जी-वतां कवयितृणां सम्मानलाभो भाषान्तरेषु सुलभदृष्टिरपि संस्कृतेष्वसौ सुदुर्लभ इवासीत्, तामेतां सनातन-सदाचारपद्धतिम् अन्यथयितुं प्रवृत्ता-नामिव संस्कृतसाहित्यपरिषत्सदस्यानामयं जीवत्-कविकृतिरूपकाभिनयः स्पर्धावतां केषाञ्चनारुन्तुदोऽप्यनेकेषां सन्तोषायैव भविष्यतीति।

अभिनयः सदस्यानां चित्ताकर्षक आसीत्। राज-रत्नाकर-ब्राह्मण-वीरबल लीलावती-धनदत्तानां भूमिका विशेषेण चित्ताकर्षिण्यो जाता इत्येके द्रष्टारो मन्यन्त इति शम्।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| November, 1940 | १८६२-शकीये कार्त्तिके २३श-वर्षस्य ७म-संख्या | Vol. XXIII, No. 7. |
|---|---|---|



प्रकृतिविलास-काव्ये

## प्रभाकरप्रभावः

[ निबन्धकः—सा० भू० कृष्णमूर्ति-शास्त्री ]

श्रेयो वो दिशतात् त्रयीतनुरयं ब्रह्मेत्युपास्यः सतां
जन्मस्थेमलयान्प्रकुर्वत्यनुगमात्तन्वन्ननादिर्विभुः ।
चक्षुः श्रीपुरुषोत्तमस्य निगमैर्वेद्यस्य विश्वात्मनो
बाह्याभ्यन्तरदुस्स्थितान्धतमसध्वंसाय बद्धोद्यमः ॥१॥

आम्नायांश्चतुरो ब्रुवन्त्यचतुरान्प्राज्ञाः स्तवे तेऽर्यमन्
मन्दात्माऽभिदधीय वा कथमहं दूरे भवन्तं गिराम् ।
आयास्यामि भृशं न केवलमहं वाणीमपि क्लेशया-
म्येतत्साहसकृत्यमत्र कृपया क्षन्तव्यमित्यर्थये ॥२॥

विद्वांसः प्रथमे मयूरसदृशा भक्त्याऽऽर्यगृह्याः स्वयं
सूर्यं धार्यमहर्दिवं हृदि सतां श्लोकैरनेकैर्जगुः ।
किं दुष्येम नु तावता कतिपयैः पद्यैः स्तुवानाः प्रभुं
शिल्पज्ञेषु नरेषु सत्सु मधुपा बध्नन्ति किन्नो गृहान् ॥३॥

प्रातश्शीतगभस्तिरस्तशिखरिण्युष्णीषवल्लंबते
बिंबं बिभ्रदशुभ्रवभ्रशकलश्रीकं प्रभादुर्विधः ।
रुग्भिः कृष्णमृगस्य पाण्डरवृषन्त्यक्ष्याण्यधः कुर्वते
भात्यभ्रं विरताभिनायकमहारङ्गाङ्गणश्रीधरम् ॥४॥
वातो वाति समन्ततोऽपि रसितैश्शीतः प्रभातोद्गतः
श्रोत्रप्रीतिकरं विरौति कुतुकाजूम्भाग्रत्पतत्रिव्रजः ।
आकाशः परिपेशलः शरसुमश्रीहारिभिर्वारिदैः
स्वान्तं हन्त ! विकासयन्ति परितः शान्ता दिगन्ता भृशम् ॥५॥
सौन्दर्यं प्रतिभावमुद्गलदिव न्यस्तं प्रकृत्यादरात्
ग्रस्त्वा सन्तमसासुरं विदधतं शून्यं जगन्निर्दयम् ।
संहृत्याभ्रतलं तदीयरुधिरक्षोदाक्तमातन्वती
सन्ध्या सैरिभमर्दिनीव भगवत्याराध्यमानैधते ॥६॥
विष्वद्र्यंच्यरुणत्तमांस्यतितमां सूतोऽरुणस्यारुणः
शुद्धां कर्तुमना विकर्तनपरिक्रामोचितां पद्धतिम् ।
नैरन्ध्र्यं च समीरणेन परितः शीर्णा हिमानी जहौ
जीमूताश्शनकैः प्रधावितमुपक्रान्ता विभीता इव ॥७॥
प्राचीमात्मविलोकनैकरसिकां रोचिर्भिरङ्कूरयन्
बन्धूकस्तवकप्रभापरिभवाहंभावसंभावितैः ।
बिंबं बिंबफलोज्ज्वलं च परितः सद्रत्नकाण्डायितै-
रुल्लासं कमलाकरस्य कलयन्युद्यन् रविः खेलति ॥८॥
पूर्वांभोनिधिगर्भतः किमुदभूत्प्रद्योतनो भानुभिः
कुर्वन्विद्रुमताम्रमभ्रमसितं पाथश्च सारस्वतम् ।
सर्वेषां धियमित्थमादधदयं मन्दोद्गतैरश्चितै-
रारोहन्निव लीलयोदयगिरेः शृङ्गं समालोक्यते ॥९॥
इन्धानं महिमैकधामभिरहर्नाथं स्वयं धामभिः
प्रत्यग्रोद्धृतदिग्धकुंकुमरजःपङ्काकुलाङ्गोज्ज्वलाम् ।

प्राचीं चन्दनचर्चिताचलकुचप्राग्भारनम्रां करै
प्रेम्णा द्राक्परिरभ्य भान्तममितं भक्त्या भजामोऽन्वहम् ॥१०॥
सिन्दूरारुणगन्धसिन्धुरसमुत्तुङ्गोत्तमाङ्गोपरि
स्वैराक्रन्दनपाकमर्दनमधः कुर्वन्निवाहर्मुखे ।
पूर्वोर्वीधरतुङ्गशृङ्गमधिकैस्संरञ्जितं धातुभी
रक्तोऽत्यन्तमनन्तवर्त्मनि विभात्याक्रम्य तिग्मद्युतिः ॥११॥
राजीवव्रजजीवनौघमुषस्योजायमानं जवा-
दुद्गच्छन्तमनच्छतां श्रितवतां छयन्तं कुसुंभच्छविम् ।
सुत्राम्णो दिशि चार्णवोऽरुणममुं नीलैरुदीर्णैः करै-
र्बिभ्रद्भिः किमु फेनपुञ्जकुसुमस्रग्भारमभ्यर्चति ॥१२॥
पूष्णः पुष्करभूषणस्य घृणया पूर्णा घृणिश्रेणयो
मुष्णन्तो घुसृणारुणश्रियमुषस्यभ्रे विवर्धिष्णवः ।
अग्रण्यस्तमसां निवर्हणविधावर्णोजसंप्रीणने
प्राग्रेण्यं दधते तथा वितरणे श्रीणामुदीर्णा नृणाम् ॥१३॥
अस्तोकं भविकं क्रियासुरधिकश्रीकास्तमोघातुकाः
कोकीशोकनिवर्तकाः कमलिनीसंपर्कसौख्योत्सुकाः ।
लोकानां परिपालकाः क्रमणतः कालस्य निर्वाहका
आर्काः पातकपावका हृदि ममाऽऽलोकाश्चिरं नर्तकाः ॥१४॥
मार्तण्डं जगदण्डनायकमसह्ण्डं धरन्तं भृशं
चण्डैर्भानुभिरभ्रमण्डलमुदस्याहिण्डमानं क्रुधा ।
सारस्याद्गुरुपुण्डरीकमुकुलानाखण्डयन्तं करै-
र्नौमि व्योमतलैकमण्डनमहं त्र्यात्मना पिण्डितम् ॥१५॥
मञ्जूद्गुञ्जदलिव्रजैश्चटुलवागालापिनीं पद्मिनीं
श्रीकादंबनितंबिनीकलरवैः शिञ्जानमञ्जीरिणीम् ।
नीलैः कुन्तलिनीश्च शैवलचयैः फुल्लांबुजैः पुष्पिणीं
श्यामां श्यामलशाद्वलेन परितः श्लिष्यत्ययं द्योमणिः ॥१६॥

अर्चांपुष्पमचर्चिकाभिरुचितां सङ्कुच्छमानं दिवा
चञ्चन्मेचकवारिवाहचिकुरोदञ्चद्रुचाऽनीचया ।
मित्रं कञ्चुकितद्रुमाचलकुचा व्याकोचिनीभिश्चर-
न्त्युद्दृश्याच्छहृदश्च दाडिमसुमच्छायं वनीदेवताः ॥१७॥
किं लेखर्षभनीलरत्नफलके खे दीप्रचक्रं हरेः
खद्योताख्यमिहाखिलान्भुवि खिलीकर्तुं खलान्खेलति ।
किं वा प्रेङ्खति वेदशेखरखनेरुत्खात्मेकं परं
ब्रह्माखर्वपराक्रमः खररुचिस्सोयं खगेशद्युतिः ॥१८॥
भव्यं भूरिगभस्तयोऽभ्रमभितो भ्राजिष्णवो भावय-
न्त्वस्मभ्यं परिभाव्य भावितत‍रा भानोर्भवं भीकरम् ।
भित्वाभ्यन्तरमोहमद्भुततमं भानं स्वरूपाभिधं
भक्तानामिह भासयन्तु भुवि नः प्रागल्भ्यमाबिभ्रतः ॥१९
ज्योतिष्मान्जयतादजादिविबुधैः पूज्योऽब्जबन्धुर्जनान
रक्षन्ज्यामधिजग्मुषो विरजसः कुर्वन्नजस्रं च नः ।
राजीभिः परिरञ्जयन्निजरुचां काष्ठाश्च जंभद्विषो
निर्व्याजेन जनुष्मतामिह रुजामाभञ्जयन्नञ्जसा ॥२०॥
अश्वैस्सप्तभिरन्वितेन हरता शक्तिं दृशां द्योसदा-
मेकस्सञ्चरसे रथेन गगनाभोगे च निस्सीमनि ।
प्रत्यावासमुखं सुपर्वमृगदृग्घस्ताब्जनीराजितः
प्रस्थानावसरेऽर्क ! किन्नरसमुद्गीतापदानोऽन्वहम् ॥२१॥
शक्र द्रागिवजहीहि वर्त्म पुरतोऽपक्राम वह्ने मनाक्
तूर्णं सन्नम रे यम स्वपितरं किं चेष्टसे नैरृत !
पाशिन्नुजागृहि मा रुतं कुरु मरुन्मा माद्य यक्षाधिपे-
त्युच्चैर्भास्कर पारिपार्श्वकगणा गर्जन्ति ते प्रस्थितौ ॥२२॥
जन्मादीन्विदधासि सर्वजगतामादित्य ! कालात्मना
श्रुत्यन्तैः प्रतिपाद्यसे समुदितैस्तात्पर्यतः सर्वथा ।

प्रत्यक्षं स्फुरसीह दैवतमथाप्यन्यानुपास्ते जनो
हन्त ! प्रत्यहमेष ते परिचयोऽवज्ञास्पदं किं नृणाम् ॥२३॥
पद्मां पद्मकदंबगर्भविहृतावौत्सुक्यमाबिभ्रतीं
भित्वा पद्मदलानि दर्शयसि हि श्रीपद्मबन्धो करैः ।
आम्रत्कोकनदाभमण्डललसच्छ्रीपद्मनाभात्मने
भक्त्युन्मेषवशात्सुवर्णवपुषे पुंसे परस्मै प्रभो ॥२४॥
किं प्राङ्गिङ्मृगदृक्स्फुरत्कचभरालङ्कारहीरव्रजः
किं वा त्वं प्रकृतेर्विलासमुकुरो देव्याः परेशार्पितः ।
सत्त्वानामुत किं महान्समुदयो मूर्तो गुणानां भवान्
कारुण्यान्मम संशयं व्यपनयाऽऽम्नायैकगम्यार्यमन् ॥२५॥
ज्योतिर्वार्धिमजस्रदुःश्रवरवज्वालोर्मिमालाकुलं
भ्राम्यद्भूरिभयङ्करक्रममरुत्संवर्धितावर्तकम् ।
धूमस्तोमपरीतमुष्णकिरण त्वां द्योतमानं दिवि
स्वान्तस्येव भुवोऽपि दूरमपरिछेद्यं महान्तो विदुः ॥२६॥
कालात्पूर्वमसंख्यकाद्दिनमणे कस्याप्युपाधेर्वशात्
खण्डो मण्डलतस्तवाणुरभवद्यश्शीर्णतां प्रापितः ।
सैवाजन्यवनिर्वनीगिरिसरित्पत्याद्युक्ता क्रमा-
दित्येवं हि खगोलशास्त्ररसिकास्सर्वे विनिश्चिन्वते ॥२७॥
भास्वन्भूरिजवेन केनचिदविच्छेदाद् द्युयानेन चे-
दुद्गच्छेत्कुतुकेन कश्चिदवनेः प्राप्तुं भवन्मण्डलम् ।
अब्दास्स्युर्गमिताश्शतं तनुभृता तेनोत्तरं पञ्चभिः
सन्देहो न मनागपीति कतिचिद्वैज्ञानिकाश्चक्षते ॥२८॥
अत्यन्ताय दविष्ठतामुपगतादित्थं भवन्मण्डलाद्
अष्टस्वेव भुवं भजन्ति घृणयः पूष्णन्निमेषेषु ते ।
ज्योतिष्मंस्तव सर्षपायितमिदं कृत्स्नं धरामण्डलं
भौमस्याद्य कृमेर्मम स्तुतिवचः श्रयेत वा ते न वा ॥२९॥

भिन्द्वानोऽभिनवांबुदेभनिवहान्वज्रोपमैरुच्छ्रितैः
पादैः स्फोरितविक्रमैरतिबलालंबाचरिष्णून्पुरः ।
श्यामव्योमवनप्रचारचतुरः स्वैरं चकास्त्वद्भुतः
कोऽप्यादित्यमृगाधिपो मम सदा हृत्कन्दराभ्यन्तरे ॥३०॥

( क्रमशः )

## ग्रन्थनिकषः

**नव्यस्मृतिप्रश्नोत्तरविवेकः**—सांदिया-संस्कृतविद्यालयाध्यक्षेण श्रीमताशुतोष-काव्यव्याकरणस्मृतितीर्थेन सम्पादितः, ८६, अपार सार्कुलार रोड, कलिकाता इत्येतस्मात् स्थानात् श्रीमदतुलचन्द्रचक्रवर्तिद्वारा प्रकाशितः । मूल्यं राजतमुद्रामात्रम् ।

विदितवैदुष्य एवासावाशुतोष-स्मृतितीर्थमहोदयः सुधीसमाजेषु । एतत्-प्रणीतौ यथोक्त-नामकावेव द्वौ ग्रन्थावाद्यमध्यपरीक्षा-पाठ्यभूतौ प्रथम-द्वितीय-खंडात्मानौ पत्रिकायामस्यां समालोचितपूर्वौ नूनं पाठकानां दृष्टिगोचरतामापन्नावेव । समालोच्यमानश्चायं तृतीयखण्डात्मा स्मृत्युपाधि-परीक्षायाः पञ्चत्रिंशदधिकं शतत्रयं प्रश्नानां तदुत्तराणाञ्च कुक्षीकृत्य छात्राणामनुषङ्गतस्तदध्यापकानाञ्च महते उपकाराय कल्पिष्यतीति जानीमः । अत्र चोपाधि-परीक्षापाठ्यभूतानां तावतां ग्रन्थानां प्रत्येकं सम्भाव्यमानान् प्रश्नान् स्वयमुट्टङ्क्य तदुत्तराणि च यथायथं तदधः सन्निवेश्य ग्रन्थकृता कृतो महानुपकारः परीक्षायां ज्ञानार्जने च च्छात्राणाम् । वर्तमानानि चात्र पञ्चषाणि प्रशंसा-पत्राणि तैस्तैर्विपश्चिदपश्चिमैरकैतवं प्रदत्तानि ग्रन्थस्यास्य सर्वजनप्रियतां प्रयोजनवत्ताञ्च सूचयन्तीति । मूल्यमपि यथासम्भवं न्यूनतयैव स्थापितमिति लभतामयं ग्रन्थः सादर-संग्रहं शिष्याणां स्मृतितत्त्वबुभुत्सूनामुत्तितीर्षूणाञ्च परीक्षोदधिमिति शम् ।

---

संस्कृत-साहित्य-परिषदः चतुर्विंशवर्षस्य ( १३४६ वङ्गाब्दस्य

आयव्यय-निष्कर्षः

## (१) साधारण-कोषः

### आयः

| | |
|---|---|
| गतवर्षस्य व्ययावशिष्टः | |
| { हस्ते ... | २२=५ |
| { शुल्कपत्ते ... | १≡५ |
| वृत्तिरूपेण प्राप्तः | |
| ( कलिकातातः ) | १००५।= |
| ( स्थानान्तरात् ) | ३४१।।।० |
| सामयिक-दानरूपेण | |
| दातृभ्यः | ३२८।।।=५ |
| गवर्नमेण्ट-सकाशात् | |
| ( १६३६-४० ) ... | ६००) |
| कर्पोरेशन-सकाशात् | |
| पुस्तकालयार्थम् | |
| ( १६३८-३६ ) ... | ६५०) |
| चतुष्पाठीसाहाय्यरूपेण | |
| ( १६३८-३६ ) ... | २४०) |
| स्मृति-भाण्डारार्थम् ... | ५) |
| पुस्तकादि-विक्रयात् | १०५≡१० |
| प्रावेशिक-रूपेण ... | ॥० |
| भि. पि. शुल्कपत्रात् ... | १४॥≡ |
| कुशीदरूपेण ... | ५२≡ |
| अन्यतः ... | १७।।।=१० |
| ऋणात् ... | ४१८) |
| अग्रिमादि-प्रत्यर्पणात ... | ४८६।/१० |
| ग्रन्थालय-कोषात् ऋणम् | १०७।१० |
| गृह-कोषात् ऋणम् | १२०।≡५ |
| | ४८२५।।।≡ |

### व्ययः

| | |
|---|---|
| पत्रिकार्थम् ... | ८६४॥= |
| पुस्तकालयार्थम् ... | ८५६=१५ |
| पुस्तकप्रकाशार्थम् ... | १०४॥=१० |
| सभाभिनयाद्यर्थम् ... | ३३७॥=१५ |
| शिक्षाविभागार्थम् ... | ८८।।।०५ |
| गृहभाटकालोकाद्यर्थम् | १०४६।।।०१० |
| वर्तनाद्यर्थम् ... | ४२०/५ |
| गृहोपकरणाद्यर्थम् ... | १६।१० |
| पाथेयार्थम् ... | ३८।१५ |
| साधारण-मुद्रणाद्यर्थम् ... | ४६=१५ |
| पत्रादि-शुल्कपत्रार्थम् ... | १८॥० |
| सारस्वतपरीक्षार्थम् ... | १२।≡५ |
| शुल्कार्थम् ... | १६।= |
| भि. पि. शुल्कपत्रार्थम्... | १४।।।=१० |
| विविधविषयार्थम् ... | ३६/५ |
| स्मृतिरक्षार्थम् ... | ४॥≡१० |
| ऋण-प्रत्यर्पणार्थम् ... | ४०६।।।/ |
| अग्रिमादि-प्रत्यर्पणार्थम् ... | ४४५॥० |
| | ४८१०।।।/१० |
| उद्वृत्तः | |
| { हस्ते | ११/१५ |
| { शुल्कपत्रे | ३॥≡१५ |
| | ४८२५।।।≡ |

## (२) गृहकोषः

( १३४६ वङ्गाब्दे )

आयः

| | |
|---|---|
| १३४२ वङ्गाब्दावसाने | २६१२॥० |
| १३४४ वङ्गाब्दे | ५) |
| १३४५ ,, | ५२८॥० |
| १३४६ ,, | १२११॥~५ |
| | ४३५७॥~५ |

उद्वृत्तस्य विवरणम्

| | |
|---|---|
| * अश्विनी-दत्त-वर्त्मस्थ-गृहादौ | ८७२) |
| ५% गवर्नमेण्ट लोन-पत्रे | १०००) |
| सेण्ट्राल व्याङ्कागारे | |
| सं ५८०१ | ३६१॥।≶ |
| सं ३७८७ | १२५५≶ |
| साधारण-कोषे ऋणरूपेण प्रदत्तम् | ६६०।≶५ |
| | ४४७६॥~५ |
| ग्रन्थालय-कोषात् ऋणरूपेण गृहीत्तम् | १२२) |
| | ४३५७॥~५ |

## (३) ग्रन्थालय-कोषः

( १३४६ वङ्गाब्दे )

| | |
|---|---|
| गतवर्षस्य प्रत्यर्पणावशेषितम् | ४८८) |
| १३४६ वङ्गाब्दे न्यासरूपेण प्राप्तम् | ६०) |
| | ५४८) |
| १३४६ वङ्गाब्दे प्रत्यर्पितम् | ३०) |
| | ५१८) |

उद्वृत्तस्य विवरणम्—

| | |
|---|---|
| सेण्ट्राल व्याङ्कागारे ... | ११~१० |
| पोष्ट आफिसागारे ... | १०।१० |
| गृहकोषे ऋणरूपेण दत्तम् | १२२) |
| साधारण-कोषे ऋणरूपेण दत्तम् ... | २४४॥≠ |
| हस्ते ... | १३०) |
| | ५१८) |

**श्रीरामकृष्ण चक्रवर्ती**

आय-व्यय-लिपिरक्षकः

**श्रीअमरेश्वर ठाकुरः—**

**श्रीगणपति सरकारः**

सम्पादकौ ।

**जे. सि. चक्रवर्ती**

आय-व्यय-लिपि-परीक्षकः ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| December, 1940 | १८६२-शकीये मार्गशीर्षे २३श-वर्षस्य ८म-संख्या | Vol. XXIII, No. 8 |
|---|---|---|

## किञ्चन प्राप्तकालम्

संस्कृत-साहित्य-परिषदियं बहूनामेव साधारणसभ्यानां यथाऽवसरं वृत्त्यलाभेन प्रतिवत्सरं वृत्त्यवशेषेण स्वीयं कार्यं निर्वोढुं न पारयतीति महती खलु विपत्तिरिदानीं सम्भाव्यते। विश्वसिमः—स्वकन्यात्वाभिमानेन सर्वैरपि सदस्यैः परिपोष्यमाणा परिषदियं यथाऽवशिष्टवृत्तीनां यथा-सौकर्यं प्रदानप्रबन्धव्यवस्थापनेन समुद्धार्यैवाचिरेणास्या विपत्तिसंभावनायाः। सदस्यास्तु परिषद एतावताऽपि न न्यूनाः, इति तु सत्यमेव। तथापि वृत्तयस्सर्वेषां यथावसरं न लभ्यन्त इति परिषत्कार्यनिर्वहणार्थं तदा तदा कार्यनिर्वाहकसमित्यनुमत्या सम्पादकैर्ऋणमपि स्वीकर्तव्यं समापतति। अनेन च क्रमेण परिषदो गृहनिर्माणकोशात् प्रायेण चतुस्सहस्र-रूप्याणि ऋणरूपेण गृहीतानि। अस्य खलु ऋणस्य संशोधनमवशिष्ट-वृत्तीनां लाभेऽचिरेण भवितेति सांप्रतमुक्तानां वृत्तीनां प्रदानेन न केवलं परिषद ऋणसंशोधनम्, किन्तु परिषदः समुचितगृहनिर्मणमपि भवितेति सत्यमेका क्रिया द्व्यर्थकरी भवति।

परिषदो गृहनिर्माणार्थं हि कलिकाता-कारपोरेशनसंस्थानेन वत्सरद्वयमध्ये गृहन्निर्माणं कर्तव्यमिति समयबन्धपूर्वकं विनैव शुल्कं पर्याप्ता भूमिर्दत्ता, साम्प्रतं तु वत्सरमेकं विना गृहनिर्माणोपक्रममपि यापितम्, वत्सरमात्रं त्ववशिष्टं समयबन्धसंशोधनार्थम्। अतः प्राणपणेनापि वत्सराभ्यन्तरे परिषदो गृहं निर्माय तत्रैव परिषत्कार्यारम्भोऽपि कर्तव्य इति हि परिषत्सदस्याः प्रायेण सर्व एव जानन्ति। इदमेवात्र सन्तोषनिदानम्—यत्स्वनामधन्याः Sir N. N. Sarcar, K. C. S. I. महोदया मान्यमान्या मरुदेशालङ्करण-श्रीवैजनाथ-वाजोरियामहोदया अन्ये च केचन विशिष्टा अपि संस्कृत-साहित्यजीवातवः साम्प्रतं परिषदो गृहनिर्माणार्थं विशेषत एव सोत्साहं प्रयतन्ते। परिपूर्णोऽस्माकं विश्वासः Sir N. N. Sarcar, K. C. S. I. महोदया एव परिषद्गृहस्य मूलाधारमिष्टकां प्रत्यतिष्ठिपन्निति वत्सरमध्य एव परिषद्गृहमात्मानमतिमनोहरं लभेतेति। परिषत्कार्यनिर्वाहक-समितिरपि वत्सरपर्यन्तं विभागान्तरेषु व्ययन्यूनतां व्यवस्थाप्यापि गृहनिर्माणं प्रथमकर्तव्यं मन्वाना प्रियपाठकानामुदाराणामनुमतिं भाविनीं सिद्धवत्कृत्यानन्तरमासमारभ्य प्रतिमासत्रयं मासत्रयस्यापि मिलित्वा ५० पृष्ठात्मिकां परिषत्पत्रिकां प्रकाशनीयां व्यवास्थापयदिति सप्रणयमिदं श्रीमतां प्रियपाठकानां सविधे निवेदयामः। कार्यान्तरव्यग्रा वयमपि नाम्नैव सम्पादका अभूमेति सत्यमिदं जिह्रीमः सूचयितुमपि। सर्वथैतः परं नैतादृशमौदासीन्यमस्माकमपि भविष्यतीति प्रत्याययामः। अस्मादृशानामौदासीन्येन न केवलं संस्कृतसाहित्यपरिषत्पत्रिका, किन्तु संस्कृत-साहित्यपरिषदपि महतीं दुरवस्थां प्राप्नोतीति सत्यं बहव एव दुःखिताः। कार्यनिवाहकसमितिपरिवर्तनमपि कर्तव्यमिति सोत्साहाः सदस्याः केचनायतन्त, एतेषां खलु प्रयत्नः सांप्रतिकीं कार्यनिर्वाहकसमितिं स्वपतीं नितरामेवाजागरयत्, यतोऽनन्तरकार्यनिर्वाहकसमितेरधिवेशनमारभ्य केचन विशिष्टा अत्यन्तोदासीना अपि कार्यक्षेत्रे समागत्य सहकारिसंपादकानां सर्वेषां कार्यभारादिकं विभज्य च सर्वेषां सन्तोषणार्थमेवायतन्ते। अतः सर्वेऽपि संस्कृतसाहित्याभिमानिनः

सविनयं प्रार्थ्यन्ते—सर्वेऽप्यस्मदीया अपराधाः क्षन्तव्याः पत्रिकायाः एकवत्सरपर्यन्तं पुटसंकोचनादिकृताः। इमे खल्वपराधाः संस्कृतसाहित्य-परिषदो गृहमचिरेण निर्मातव्यमितिभावेन स्वबुद्धिकल्पिता अप्यापत्कल्प-तयाऽनुष्ठीयमानाः परिषद्धितमेव काङ्क्षतामुदारहृदयानां च श्रीमतां मृदुलानुजिघृक्षुं च हृदयमालम्ब्य प्रपत्तिरूपमेवावलम्बिष्यन्ते। उक्तं हि भामत्याम्—

आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम्।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयतीति।

अतः "सहस्व चतुरो मासानि"ति न्यायमवलम्ब्य वयमपि "वत्सरपर्यन्तं क्षमन्तां भवन्त" इति प्रार्थयामहे॥

अस्मिन्नवसरे नेदमपि निवेदनं सर्वेषां संस्कृतसाहित्याभिमानिनां सर्वेषां चापरेषां संस्कृतपत्रसम्पादकानां च सविधेऽसाम्प्रतम्, यदि कणशः कणशोऽपि सर्वेऽपि संस्कृतसाहित्यपरिषदो गृहनिर्माणार्थे कोशे स्वीयं किमपि द्रव्यं न्यस्येयुः, तर्हि गृहमिदं सर्वेषां भवतामतिपवित्रं सर्मं भवितेति विशेष-तोऽत्राप्युपकर्तव्ये दृष्टिर्विधीयतामिति।

## प्रभाकरप्रभावः

[ निबन्धकः—सा० भू० कृष्णमूर्ति-शास्त्री ]

औष्ण्यात्संकथितान्महांबुनिधितो गृह्णन्मयूखैरपो
लोकक्षेमकृते विकर्तन! घनद्वारा धरां सिञ्चसि।
दत्से प्राणनशक्तिमंबरमणे! त्वं प्राणभृद्भ्योऽवना-
विन्धे मूर्तिमती महत्युपकृतिर्मूर्तिः पवित्रा तव॥३१॥
पृथ्व्यां किञ्चन नोदपत्स्यत विभो! त्वं नाभविष्योऽर्यमन्!
निष्प्रत्यूहमवक्ष्यदन्धतमसं स्वीयाधिपत्यं ध्रुवम्।
त्वं लोकैकविलोचनं, जगदिदं त्वत्प्रापितप्राणनं
गायत्र्येकरस! प्रचोदय धियं सत्ये पथीत्यर्थये॥३२॥

मेरुं ते परितः प्रदक्षिणमहर्नौथान्वहं क्राम्यतो
भिद्येतेऽस्तमयोदयौ भगवतो दिग्देशभेदादुभौ ।
छान्दोग्योपनिषद्यपि स्फुटमिदं प्रत्यक्ष्यकुर्वंश्च ये
केचिन्मण्डलमण्डकल्पमवनेर्यन्तः स्वयं सर्वतः ॥३३॥
द्योयानेन च कोऽप्युदप्लुवत खेऽपश्यत्त्वदीयोदयं
सोऽयं भास्कर ! सप्तकृत्व इति तद्ग्रन्थात्प्रतीमो वयम् ।
माहात्म्यं समजानतास्मदृषयो योगप्रभावेण ते
यस्मात्कश्यप एव पश्यक इति ब्रूते श्रुतिर्नः प्रसूः ॥३४॥
नैवोदेति न वायमस्तमयते याथात्म्यतोऽहस्करः
किन्त्वेनं परितो भ्रमन्ति पृथिवीमुख्या ग्रहास्सर्वदा ।
एषोऽनादिरुपाधिरद्वयपरब्रह्मात्मनोऽनुत्तम-
श्छन्दोगश्रुतिमूर्धसौधशिखरे रत्नप्रदीपः स्थिरः ॥३५॥
वर्णानां निधयोऽपि शुद्धहरितोद्रिक्ताः प्रशस्ता भृशं
मध्याह्नार्ककरा निगीर्णमशनं जीवामृतं कुर्वते ।
भुञ्जानास्सकृदेव तत्र समये सन्तः पुरा धार्मिकाः
पर्यष्कार्षुरिमां हि भारतभुवं प्राज्ञाश्चिरं जीविनः ॥३६॥
आरोग्यं ददतामनामयकृमीनावर्धयन्तो वपु-
ष्युस्राः स्पर्शनमात्रतस्त्व जगन्नाथस्य पूताः स्वतः ।
प्रातर्भूरिनमस्कृताश्चिरतरं स्वान्ताधिरूढं तमो
धन्त्वाद्यन्तविहीनतामुपगताः खद्योत ! विद्याप्रदाः ॥३७॥
नानादिक्षु विभिन्नवर्णरुचिरं मध्विवत्यमर्त्या अपि
ब्रध्न ! त्वां समुपासितुं श्रुतिशिरोवाक्याद्व्रजन्त्यर्हनाम् ।
देवानामपि दैवतस्य भवतः प्राप्तुं प्रसादं ममा-
प्याहन्ती भवकेति भास्कर ! भवांभोधौ निमग्नोऽर्थये
पात्रेणार्क ! हिरण्मयेन पिहितं सत्यस्य वक्त्रं परं
पूषंस्त्वं तदपावृणुद्रुततरं मह्यं च मार्गार्थिने ।

धर्माद्याचरणेन मे करणमप्याभ्यन्तरं शुध्यतात्
सोऽहं त्वं त्वमहं मतिस्तव मुहुर्ध्यानेन संवर्धताम् ॥३९॥
अत्रात्मकलानिरूपणमुखात्सार्वात्म्यमाहुस्तरां
प्रश्नाद्याः श्रुतिमौलयस्समुदिताः श्रीद्वादशात्मंस्तव ।
त्वं विश्वं समुदेति तिष्ठति तथा त्वय्येव संलीयते
त्वय्यध्यस्ततयैव भाति मिहिर ! द्वैतप्रपञ्चः समः ॥४०॥
देवानामपि दुर्लभं श्रितवतामङ्कं जनन्या भुवः
सूर्य ! त्वं परिपालकोऽसि जनकः क्रीडार्भकाणां च नः ।
पापाचारपरा अधस्तव वयं किं किं रवे ! कुर्महे
शक्तोऽपि क्षमसेऽपराधमखिलं सर्वंसहेवेह नः ॥४१॥
जीवानामियदौष्ण्यमत्र समयेऽपेक्ष्यं तथा नेयदि-
त्येतत्सर्वमहस्कर ! त्वमनुचिन्त्यैवर्तुषु द्योतसे ।
सत्येवं त्वयि दोषमेव जनता द्वन्द्वासहिष्णुर्ब्रवी-
त्यात्माज्ञानमशेषवस्तुषु मृषादोषं समुद्भावयेत् ॥४२॥
सन्तापस्तव तारतम्यमयते देशप्रभेदाद्रवे
घर्मौष्ण्यात्कतिचित्सपत्यमृषतेत्यश्रौष्म शश्वद्वयम् ।
यद्यप्यत्र न दुष्यसि त्वमखिलं कर्मोपभोग्यं तथा-
प्यज्ञास्त्वां प्रवदन्त्यतः प्रियसुहृन्मा भूः प्रचण्डोऽधिकम् ॥४३॥
वर्षिष्यन्त्यचिराद् ध्रुवं करिवराकाराश्च धाराधराः
सस्याद्यैर्हृदयं हरिष्यति धरा पुष्णत्यपूर्वां श्रियम् ।
मत्वैवं ह्यसहामहि प्रतिदिनं क्रूरं प्रतापं तव
म्लानानामिह नः क्षुधा भुवि भृशं कामान्द्रुतं पूरय ॥४४॥
श्रेयो धर्मफलं स धर्मनिवहोऽनुष्ठित्यपेक्षः श्रुतः
कालापेक्षमनुष्ठितिप्रकरणं कालस्त्वदुत्पत्तिकः ।
सर्वस्यापि निदानमेवमनघं सर्वात्मकं वस्तुत-
स्त्वां ब्रूमः श्रुतिदुग्धवार्ध्यमृतमित्यद्वापरं भास्कर ॥४५॥

प्रत्यासन्नतरः स्फुरस्यहिमरुग् यस्त्वं परब्रह्मण-
स्तस्माद्वेदशिरस्त्वयि व्यधित तद्दृष्टिं जगत्स्रष्टरि ।
कामं सन्तु सहस्रशः सुमनसस्स्वर्गस्य भाराः परं
त्वामेवाहमहर्दिवं हृदि दधे संसारवार्धेस्तरिम् ॥४६॥

एकर्ष ! भवतः प्रभावमवनौ को वेद कस्त्वं नर-
स्त्वादृक्षा बहवः प्रतिग्रहमपि भ्राजन्त इत्यद्भुतम् ।
व्योमेदं परिशिष्यते बहुतरं दत्वावकाशं च वो
द्यौरीशस्य विभूतिलेश इति चेद्विष्णुस्स कीदृग्भवेत् ॥४७॥

त्वत्संप्राप्यमहोत्सवं कुमुदिनीजारस्समुद्राद्रुचां
सूर्यमन्य इव स्वयं, विशदयन्नाशा मनागंशुभिः ।
चारित्रात्कुलसुभ्रुवः कति बत प्रभ्रंशयामासिवान्
दातारं नियतं भजेत वृजिनं दुस्संप्रदानार्जितम् ॥४८॥

आश्लेक्ष्यन्निव लक्ष्यसे दिनकरः प्रत्यक्पुरन्ध्रीं करै-
रुर्वीं काञ्चनवाससेव समलं कुर्वद्भिरात्मत्विषा ।
स्पर्धेते ह्यधुना परस्परमुभे द्यौश्चापि विश्वंभरा
चेतो हर्तुमहो स्वकीयसुषमां पूर्णां समुद्दीर्य नः ॥४९॥

फुल्लं मल्लिवनं श्रयन्ति मधुपाः प्रक्रान्तगीतक्रमा
वात्याहूत इव स्वयं मलयतो वातश्शनैरागतः ।
नानादिग्भ्य उपागता द्विजगणा नीडद्रुमानाभज-
न्त्यंभोजिन्यपि मन्दमन्दमवशा निद्रां समालिङ्गति ॥५०॥

अन्तःशीतमपीषदुष्णमुपरि व्यामिश्रणात्सौख्यदं
रोधः पाटलपुष्पपातसुरभि स्वच्छं पयो बिभ्रतीम् ।
वापीं स्नातुमुपागताः प्रियतमैर्वासो वसाना मितं
क्रीडन्त्यप्सु दिनावसानसुभगा स्वब्जायताक्ष्योऽन्वहम् ॥५१॥

श्रान्तेवोत्प्लवनेन कापि युवतिश्शश्वत्समालिङ्गति
प्रेम्णा नेत्रनिमीलनाभिनयनव्यग्रा परं कामुकम् ।

ऊरुभ्यामुपगूह्य तां स च युवा यत्नाज्जलाभ्यन्तरे ,
सामर्थ्यात्परिदर्शयत्यह बहिः संमत्यभावं परम् ॥५२॥
बुद्ध्वाऽप्यन्यपुरन्ध्रिमेकतरुणो वस्त्रस्य सारूप्यतो
भ्रान्तिं प्राप्त इवालिलिङ्ग सुदृढं पश्चादुपेत्यादरात् ।
जानानाप्ययमन्य इत्यसकृदुद्भूतोरुरोमोद्गमा
स्वैरं साभिनिनाय नायकधियं पश्चाददृष्टोक्तिभिः ॥५३॥
प्रेयान्मे प्रवसत्यनेकशरदो हित्वा रसज्ञामिमां
कामं कामशरार्दिताहमनयं रात्रीश्च बह्वीरिति ।
कस्मैचिन्न निगद्यतां सखि दयाहीना युवानो बते-
त्यूचे काचन वामदृक्स्मरसमं कञ्चिद् दृशाबध्नती ॥५४॥
नृणामीदृगधर्मवर्त्मचरणं सर्वं विगीतं सतां
माऽहं दर्शमिति त्रयीमय तिरोधीत्सेऽस्तपृथ्वीधरे ।
मित्राद्भीततरामसौ शशधरो रात्रावुदेष्यन्करैः
स्त्रीपुंसव्यतिचङ्क्रमो न भवितेत्याख्यातुमीष्टेऽत्र कः ॥५५॥
किं तप्तायसपिण्ड एष जलधिं शुष्कं विधातुं पत-
त्याहोस्वित्प्रकृतेश्शिरोमणिरयं नृत्यात्स्वयं प्रच्युतः ।
किं वा मूर्ततरोऽनुरागनिकरोऽनङ्क्ष्यत्प्रतीच्याः स्त्रियः
किं वा पुण्यफलं महत्परिणतं सत्कर्मिणां द्योमणे ॥५६॥
यस्मिन्नात्मरुचं निधाय दयया‌ऽस्मासु स्वयं लीयसे
वह्निं त्वामिवतं भवत्प्रतिनिधिं सत्कुर्महे भक्तितः ।
सन्ध्यायामुषसो वितीर्य भगवन्नर्घ्यं च वज्रोपमं
मन्देहानसतो निरस्य तरसा प्रत्युद्व्रजामः पुरा ॥५७॥
साक्षाच्छ्रीपुरुषोत्तमोऽपि जगतां क्षोभे परं तन्वतो
निःशेषं विनिहत्य सायकवरै रक्षोधिपस्यान्वयम् ।
धर्मान्स्थापयितुं त्रयीनिगदितानाचार्यभूमौ स्वयं
पूते तेऽवततार वंशजलधौ श्रीरामचन्द्रात्मना ॥५८॥

श्रद्धाभक्तिसमन्विताय मरुतः पुत्राय मेधाविने
दिव्यं व्याकरणं ह्युपादिश इति प्राहुर्महान्तः समे ।
मह्यं नित्यमुपासकाय वितर ज्ञानं सुशब्दार्थयोः
शिक्षित्वा येन च कर्मबन्धमखिलं यायां त्वदीयं पदम् ॥५९॥
रोगं संहर सर्वमीश्वरदशोशक्तिं प्रदीप्तां कुरु
श्रीमन्नर्क धृतिं हृदि स्थिरतरां प्रज्ञां च लोकोत्तराम् ।
विप्रायाऽनुगृहाण सूक्तिममृतस्रोतस्विनीस्पर्धिनीम्
आकल्पं जयतात्प्रभाकरकृतोऽस्माभिः प्रभावस्तव ॥६०॥
श्लोकानामिह षष्टिरेकसहिता माष्टु श्रियं शात्रवीं
संपत्तिं शुभसन्ततिं वितरतादादित्यभक्तिं पराम् ।
सन्तः प्राप्तसुखा भवन्तु सततं सूर्यं प्रसादेन ते
वाचामस्तु फलेग्रहिस्समुदयो लोके कवीनां सताम् ॥६१॥

---

## परीक्षणार्थं प्राप्ता ग्रन्थाः

**योगसारसंग्रहः**—विज्ञान-भिक्षुविरचितः, सांख्य-प्रथम-परीक्षा-पाठ्यभूतः, श्रीयुक्त-गौरसुन्दर-भागवतदर्शनाचार्येण टिप्पण्या समलङ्कृत्य प्रकाशितः। मूल्यं द्वादशाणकाः। प्राप्तिस्थानम् 3C, Nivedita Lane, Baghbazar, Calcutta.

**दर्शन-परिचयः**—श्रीगोपालचन्द्र-सेन-विद्याविनोद-सम्पादितः। नामोचितविषयविमण्डितो वङ्गभाषामयो ग्रन्थः। मूल्यं रूप्यक-द्वयम्। प्राप्तिस्थानं, गुरुदासचट्टोपाध्याय एण्ड सन्स, कर्णवालिश ष्ट्रीट, कलिकाता।

**नित्य-पूजाकल्पद्रुमः**—श्रीरवीन्द्रकुमारभट्टाचार्य-व्याकरणतीर्थेन संकलय्य वङ्गाक्षरेण मुद्रापितः। विप्राणां प्रातःकृत्यादि-नारायणपूजान्त-कर्म-व्यवस्थापकः। मूल्यं छात्राणाम् अष्टावाणकाः ॥०। प्राप्तिस्थानं पोः दशघर, ग्राम काशीपुर, जिला श्रीहट्ट।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| January, 1941 | १८६२-शकीये पौषे<br>२३श-वर्षस्य ९म-संख्या | Vol. XXIII<br>No. 9 |


अखिल-भारतीय-देवभाषा-परिषदो द्वादशाधिवेशने

## सभापतेरभिभाषणम्

[ सभापतिः—श्रीहाराणचन्द्र-शास्त्री ]

परमेश्वरस्य परमकरुणयाऽस्या "देवभाषापरिषदो" द्वादशं महाधिवेशनमद्य समुपस्थितम्। ये खलु पूर्वेषु महाधिवेशनेषु सभापतिपदमलमकुर्वन विश्वविस्तीर्णकीर्त्ति-महामान्यवर-श्रीमदनमोहनमालवीयमहोदय-प्रभृतयस्तेभ्यः सर्वथा ममापकर्षे सत्यपि मामत्र साभापत्ये नियुञ्जाना भवन्तो मयि महान्तमनुग्रहं प्रादर्शयन्नित्यत्र नास्ति कश्चन संशयलेशः, परन्तु मादृशेऽयोग्ये यादृशो महान् भारो भवद्भिः समारोपितस्तत्र स्वकीयामयोग्यतामनुभवन् संकुचितचेता भवत एवाभ्यर्थयेऽत्र साहायकमाचरितुम्—यथा भवद्भिरारब्धं कर्मैतद् निर्विघ्नं परिसमाप्तं स्यात् तथा विधेयं भवद्भिरिति।

अस्मिन्नप्रतिमे सङ्कटकाले देवभाषापरिषद इदमधिवेशनं भवतां सुमहत उत्साहस्य परिचायकतया भाविन्या उद्देश्यसिद्धेः सूचकमिति मां प्रति-

भाति। यद्यप्यस्माकं प्रधानमुद्देश्यं साम्प्रतमेवाचिरात् सिद्धिमेष्यतीति नास्ति प्रत्याशा, तथापि प्रतिनियतमकैतवमाचरितैरुपायैः सुदुर्बलैरपि कालेन फलसिद्धिर्विधीयत इति लोकव्यवहारसिद्धं सत्यमिदमस्माकं मनसि धैर्यमुत्साहं च सर्वदा सम्पादयद् नैराश्यान्धकारं निरुणद्धि।

देवभाषेतिप्रसिद्धा संस्कृतभाषैव भारतीया राष्ट्रभाषा भवितुमर्हतीति परिषदोऽस्याः सिद्धान्तः। सिद्धान्तेऽस्मिन् यद्यपि श्वेतद्वीप- ( Britaiu ) निवासिन उक्षतीर्थ- ( Oxford ) विश्वविद्यालयसंस्कृताध्यापकचरस्य श्रीयुक्त-टमास् (Dr. Thomas) महोदस्य वैदेशिकस्य, मैसूर-(Mysore) राज्यप्रधानामात्यस्य सार् मिर्जामहम्मदइस्माईलमहाशयस्य माहम्मदस्य, हिन्दुसभानेतृवरस्य डाक्टरमुञ्जेमहोदयस्य, काशीहिन्दुविश्वविद्यालयोपाध्यक्षचरस्य (Ex-Pro-Vice Chancellor of Benares Hindu University) आचार्य-ध्रुव (A.B. Dhruva) महोदयस्य, वाराणसेय-राजकीयसंस्कृत-महाविद्यालयाध्यक्षचरस्य महामहोपाध्याय-श्रीयुक्त-गोपीनाथ-कविराजमहाशयस्यान्येषां च केषांचन प्रथितयशसां बुद्धिमतां विपश्चितां सम्मतिर्वर्त्तते, तथापि केचनाद्यत्वे स्वमतिपरिकल्पितयुक्तिजालैरन्यादृशीं सिद्धान्तसरणिमप्यातिष्ठमाना दरीदृश्यन्त एव।

तत्र केचन स्वयूथ्यभूयस्त्वबलबलिता रोमनलिपिमाद्रियमाणा रोमनलिप्या (Roman character) लिखितां 'हिन्दुस्तानीभाषां' भारतीयराष्ट्रभाषायाः पदवीमधिरोपयितुमुत्सहन्ते। रोमनलिपेरक्षरश्रेणी न सर्वाङ्गसम्पूर्णेति न रोमनलिपिसाहाय्येन सर्वेषां शब्दानामाञ्जस्येन लेखनं सम्भवति, न च सा भारतीया लिपिः, किन्तु वैदेशिकी। ये खलु स्वदेशभक्तिमात्मनः प्रख्यापयन्तः प्रभूतं क्लेशमप्यापतितं तृणाय मन्यन्ते,सत्यामपि स्वदेशीयायां परिपूर्णावयवायां लिप्यां कथं ते रोमनलिपिं भारतीय-राष्ट्रभाषायाः परिच्छदं कर्तुमिच्छन्ति, तदेतद् बहुशो विमृशन्तोऽपि वयं नावबोद्धुं पारयामः। 'हिन्दुस्तानी'भाषाया भारतीयराष्ट्रभाषात्वं कथमपि युक्तिपथं नाधिरोहति। पञ्चनदप्रदेशे युक्तप्रदेशे च केचन यद्यपि 'हिन्दुस्तानी'भाषया व्यवहरन्ति, तथापि तयोः प्रदेशयोः

सर्वत्र सर्वैरेव व्यावहारिके 'हिन्दुस्तानी'भाषया व्यवह्रियते इति न वक्तुं शक्यते। पञ्चनदप्रदेशे 'गुरुमुखी'भाषयाऽपि व्यवहर्तारो भूयांसो मनुष्याः सन्ति; युक्तप्रदेशे च बहव एव 'हिन्दी' भाषाभाषिणो विद्यन्ते। बङ्गदेशे मध्यभारते मध्यप्रदेशे महाराष्ट्रे मद्रासप्रदेशे च 'हिन्दुस्तानी' भाषाया लेशतोऽपि प्रचारो न दृश्यते। तस्मात् यत्किञ्चित्-स्थानव्यापिनीयं 'हिन्दुस्तानी'-भाषा सर्वभारतीया न भवतीत्येतस्या भारतीयराष्ट्रभाषायोग्यतैव नास्ति।

अपरे च केचन ईंलिशभाषाया भारतीय-सर्वप्रदेशेषु बहुलप्रचारमालक्ष्य तस्या एव राष्ट्रभाषात्वमिच्छन्ति। तदेतदपि न विचारचारु प्रतिभाति। ईंलिशभाषा यद्यपि राजपुरुषाणां प्रभावेण भारते सर्वप्रदेशेष्वधुना प्रचलिता, तथापि तस्यां वर्त्तते सुमहती न्यूनता। तत्र कुत्रचित्पदेषु केषांचिद् वर्णानामुच्चारणमेव न भवति, केवलं लेखनसमये तानि पत्रारूढानि विधीयन्ते। एकस्यैवाक्षरस्य क्वचित् पदे यादृशमुच्चारणं भवति, अपरत्र न तादृशमुच्चारणं दृश्यते, किन्तु तदेव वर्णं पदान्तरेऽन्यथैवोच्चार्यते। एतादृशानां व्यतिक्रमाणां सर्वत्र समनुगता काचिद् व्यवस्थाऽपि न प्रणीताऽद्यावधि तद्भाषापण्डितैर्यया व्यवस्थया सर्वेषां जनानां तया भाषया व्यवहारः सुकरः स्यात्। तस्माद् राजपुरुषप्रभावेण प्रचलिताऽपि न्यूनतापरिकलिता वैदेशिकी सा भाषा न भारतीय-राष्ट्रभाषापदवीमधिरोढुं योग्या।

भारते वर्षे प्रचलितासु स्वदेशीयभाषासु 'हिन्दी'भाषाया यद्यपि सर्वाधिकः प्रचारः परिलक्ष्यते, तथापि सा भाषा मद्रासप्रदेशे बङ्गप्रदेशे महाराष्ट्रे च न प्रचरति। एतेषु प्रदेशेषु निवासिनो जनाः प्रायेण हिन्दीभाषां नावगच्छन्ति। मद्रासप्रदेशे 'हिन्दी'भाषाप्रचाराय यद्यपि कांग्रेसपक्षीयैस्तदानीन्तनराज्यशासकैः सुमहान् आग्रहः प्रदर्शितस्तथापि तत्प्रदेशीया बहवो जनास्तत्रातीव विप्रतिपन्ना आसन्निति नाविदितं वृत्तान्तपत्रपाठकानाम्। तस्मादसर्वभारतीयतया 'हिन्दी'भाषा भारतीय-राष्ट्रभाषाया आसनं नाधिगन्तुमर्हति।

कतिचन वङ्गीया वङ्गभाषाया राष्ट्रभाषात्वमिच्छन्तस्तत्र युक्तिमिमामुद्भावयन्ति—भारतीयासु प्रचलितासु भाषासु वङ्गभाषायाः साहित्यं सुसमृद्धं

क्रैस्तवधर्मप्रवर्तकस्य क्राइष्ट-नामधेयस्य सम्मतम्। क्षमाप्रधान एव धर्मस्तेनोपदिष्ट आसीत्। आस्तां तावत् क्रैस्तवधर्मवार्ता, क्वापि सभ्यजनोचिते मार्गे स्त्रीबालवृद्धातुराणां निरपराधानां मुधैव हिंसनं कस्यापि सत्पुरुषस्य बहुमतमिति कैश्चिच्छ्रुतपूर्वम्। तस्माद् बाह्यरूपसौष्ठवमात्रेण मनुष्यान् मोहयन्ती मदिरेवोन्मादकरी दानवीया पाश्चात्त्यसभ्यता मनुष्याणां दानवत्वसम्पादनायैवालं न तु कल्याणायेति व्यक्तमद्यत्वे सर्वेषाम्।

गंगायमुना-प्रवाह-पवित्रिते, शमप्रधानैर्ऋषिभिः परिशीलिते भारते वर्षे तस्या एतस्याः सभ्यताया बहुलप्रसारो महानर्थहेतुतया सर्वथाऽनाकांक्षणीय एव दूरदर्शिनाम्। भारतीय-पुरातनसंस्कृतेरुज्जीवनमेव भारते पाश्चात्त्यसभ्यतायाः प्रसारस्य सुमहत् प्रतिरोधकमित्यत्र नास्ति कश्चन सन्देहलेशावसरः।

सा चेयं भारतीया पावनी पुरातनी संस्कृतिः स्वकीयाकरभूतेषु संस्कृतभाषानिबद्धेषु शास्त्रेषु निहिता संस्कृतज्ञानामेवावगमपथमवतरति। संस्कृतभाषायाः सार्वजनीने प्रसारे सम्पादिते भारतीया चिरन्तनी संस्कृतिरपि तद्द्वारेण सर्वजनेषु विदिता भवेत्। यद्यप्यस्मद्देशे मध्ययुगे सर्वेषां संस्कृतज्ञता नासीत्, तथापि पुराणशास्त्रकथानुष्ठानेन कीर्तनादिव्यापारविधानेन च पूर्वतनैः सा संस्कृतिर्बहुधा प्रचारिताऽऽसीत्। साम्प्रतं पाश्चात्त्यभावग्रासिता भारतभूमिः स्वानर्थाय सन्नद्धा पुरातनीः परमहितसाधनीः पद्धतीरुत्सृजन्ती कथानुष्ठानादिकमपि शनैर्विसृजन्ती स्वात्मविलोपं प्रतीक्षमाणा परिदृश्यते। तस्यामेतस्यां दारुणायामवस्थायां संस्कृतभाषायाः सार्वजनीनः प्रसारोऽमृतसेक इव परमोपकारको भविष्यति भारतीयचिरन्तनसंस्कृतेरुज्जीवनायेति संस्कृतभाषाया राष्ट्रभाषात्वमावश्यकम्।

भारतीयानामस्माकं पूर्वपुरुषैरुपार्जितानि धनरत्नानि चिरकालादारभ्य बहुभिरुपायैर्वैदेशिकैर्निःशेषं लुण्ठितानि; महाप्रयासैर्भूयसा कालेन निर्मितानि प्रासादमन्दिरादीन्यपि विजेतॄणां पादप्रहारैर्निश्चिह्नं विलयमुपयातानि। प्राचीनभारतीयसभ्यताया निदर्शनभूतमेकमेवाधुना कलयाऽवशिष्टं शास्त्र-

ग्रन्थजातम् । 'यद्यपि बहवः प्राचीनशास्त्रग्रन्था वैदेशिकानां कोपाग्नौ पुरा शलभायिता अभूवन्, तथापि ये तावदधुनाऽवशिष्टास्तेषामेव भावगाम्भीर्येण भारतीयसभ्यताया लेशतोऽपि परिचयमवगत्य पाश्चात्यदेशवासिनो भारतीयानस्मान् सभ्यजातिसन्तानान् मन्यमाना मानयन्त्यस्मदीयपूर्वजानस्मांश्च तदन्वयसम्भवान् । हृतसर्वस्वानां भारतीयानां शास्त्रमेवैकं धनमधुनाऽवशिष्यते । तच्च शास्त्रजातं संस्कृतभाषयोपनिबद्धमिति संस्कृतभाषाज्ञानमन्तरा तदीयरहस्याधिगमो न सम्भवति । संस्कृतभाषाया अज्ञानेनास्मदीया जनता शास्त्रमहत्त्वानवबोधेन यादृशी महती श्रद्धा शास्त्रे कर्त्तव्या तादृशीं श्रद्धां न पुष्णाति, न च पूर्वजानां महीयसीमुदात्ततामवबुध्यते । संस्कृतभाषा चेत् प्रचुरप्रचारा स्यात्तदा भारतीयाः पूर्वजानामपि महत्त्वं सम्यगवबोद्धुं शक्नुयुः ।

ये 'हिन्दुस्थान'निवासिनस्ते सर्वे एव 'हिन्दु'नामधेया भवितुमर्हन्ति । "हिन्दु" इति नाम न धर्मविशेषसम्बन्धप्रयुक्तं भवितुं युक्तम्, किन्तु देशविशेषनिवासनिबन्धनमेव । अद्यत्वे वैदिकधर्मावलम्बिनः स्वात्मानं हिन्दुत्वेन व्यपदिशन्तीति सुव्यक्तं सर्वेषाम् , तेषामेव पूर्वपुरुषपरम्परयैतद्देशवासित्वमेवात्र कारणमिति वक्तुं शक्यम् । परन्तु बौद्धा जैनाश्च भारतवर्षीया हिन्दुमध्ये परिगण्यन्ते, माहम्मदाः क्रैस्तवाश्च यद्यपि हिन्दुव्यपदेशं न कुर्वन्ति स्वात्मनः, साम्प्रतिका माहम्मदाश्च केचन "हिन्दु" शब्देनोद्वेगमिव भजन्ते, तथापि सर्वे ते 'हिन्दुस्थान'नामधेयाया भारतभूमेरपत्यतयाऽस्मद्भ्रातर एव भवन्ति । न चैतेषां सर्वेषां पूर्वजा देशान्तरनिवासिन एवासन्निति केनापि निर्धार्य वक्तुं पार्यते ; मूलपुरुषाणां देशान्तरवासित्वे स्वीकृतेऽपि सम्प्रतितनानामेतेषामेतद्देशवासित्वमेतद्देशप्रसूतत्वं चापलपितुं नैव शक्येते ; तथैतेषां बहुपुरुषपरम्परैतद्देशीया एवेत्यत्रापि नास्ति कश्चन संशयः । एवं स्थिते भारतभूमेर्यत् किञ्चिद् गौरवं तस्याप्येतेऽस्माभिः समानभागभागिनः । भारतवर्षस्यैकमेव गौरवस्थानमधुना यदवशिष्टं सा संस्कृतभाषैव । पूर्वं "भूपाल"प्रभृतिदेशाधिपतयो माहम्मदा अपि राजानः संस्कृतपण्डितानां

वृत्तिसम्पादनेन प्रभूतसम्मानप्रदर्शनेन च संस्कृतभाषायां स्वकीयां श्रद्धां प्रकटयन्ति स्म । अधुना पाश्चात्त्यदेशीयाः केचन क्रैस्तवपण्डिताः संस्कृतभाषां सम्यगाद्रियमाणाः संस्कृतशास्त्र-सिद्धान्ताधिगमाय शास्त्राण्यालोचयन्ति। सुधारसप्रस्यन्दिनीयं संस्कृतभाषा सर्वेषामेव समादरणीया केषांचनापि नाहिताय प्रकल्पते। तस्मात्संस्कृतभाषायाः प्रचुरः प्रचारो नैतेषां प्रतिकूल इति तस्या राष्ट्रभाषात्वं सर्वथा समीचीनतामेवोपैति । यद्यपि केचन माहम्मदाः केनचित् कारणेनाधुना प्रतिकूलभावं भजन्ते, तथापि तेऽस्माकं भारतभूमेः सन्ततित्वादस्मदीया एवेति कदाचिदवश्यमेव प्रतिनिवर्त्तिष्यन्त इति सुदृढमाशास्यते ।

संस्कृतभाषायाः संरक्षणसम्यक्प्रचारादिकमभिलषद्भिः सर्वाग्रे संस्कृतपण्डितानां संस्कृतविद्यार्थिनां च संरक्षणाय यतनीयम् ; त एवाद्यत्वेऽस्यां भूमौ संस्कृतभाषाया आधारभूतास्तेषां रक्षणेनैव संस्कृतभाषाया रक्षा सम्भाव्यते ; रक्षायां सत्यामेव प्रचुरप्रचारो भवितुमर्हति नान्यथा । संस्कृतपण्डितानां परम्परायां विच्छिन्नायां निराश्रया संस्कृतभाषा कथं वा जीविष्यति कथं वा सर्वेषु भारतप्रदेशेष्वाबालाङ्गनं प्रचरिष्यति ? तस्मात् संस्कृतभाषाकल्याणकामैः संस्कृतपण्डितानां संस्कृतच्छात्राणां चाभिवृद्धेरुपायोऽवश्यमेव चिन्तनीयोऽनुष्ठेयश्च ।

देवभाषापरिषदः समुन्नतये संस्कृतभाषायाश्च प्रचुरप्रचाराय ये साम्प्रतं प्रयस्यन्ति, ते सर्वेऽपि कृतज्ञताभाजनानि धन्यवादार्हाश्चेति निष्कपटं निवेद्यते । अस्याः परिषदो ये प्रथमप्रवर्त्तका आसन्, तेषां मध्येऽद्यत्वे श्रीयुक्तसुरेशचन्द्रशर्ममजुमदारमहोदया ब्रह्मचारिश्रीमत्सत्यव्रतमहाशयाश्च जीविता वर्त्तन्ते । श्रीयुतसुरेशचन्द्रशर्ममहोदयाश्च वङ्गभाषायां कतिचनोपन्यासनामधेयान् प्रबन्धान् रचितवन्तः । यदि ते देवभाषापरिषदः सेवां विहाय वङ्गभाषासेवामेवाधिक्येन विदध्युस्तर्हि तत्र परममुत्कर्षमासादयेयुरित्यत्र नास्ति कश्चन सन्देहः । परन्तु तेषां देवभाषापरिषदर्थः श्रमः शिथिलायेतेति परिषदोऽशुभायेव सा कल्पेत । संस्कृतभाषायाः संरक्षणाय त्यागव्रतमूरी-

कुर्वाणा ब्रह्मचारिसत्यव्रतमहाशयाश्च संस्कृतपाठशालादीनां संस्थापनेन संस्कृतपण्डितानां संस्कृतच्छात्राणां च जीवनोपायसम्पादनेन च संस्कृत-भाषाप्रचाराय यादृशं प्रयतन्ते तत्र दृष्टान्तभूतास्त एवेत्युक्तिर्नात्युक्तिदोष-मावहतीति सर्वे एव तदीयचरितज्ञा विज्ञा विजानन्ति ।

अस्मिन्नवसरे निर्वाणपदवीमधिरूढानाम् आर. एस. नारायणस्वामि-महाशयानां सरला सौम्यमूर्त्तिः स्मृतिपथमधिरुह्यास्मान् विषादयति । तेषां चारित्रौदार्यं देशप्रेमा संस्कृतभाषायां देवभाषापरिषदि चानुरागातिरेकः सर्वानस्मानद्यापि विनम्रयन्ति श्रद्धातिशयेन तान् प्रतीति शम् ।

"सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥"

---

# महाकवि-कालिदासविषये यत् किञ्चित्*

[ निबन्धकः—श्रीदुर्गादास-गोस्वामी काव्य-व्याकरणतीर्थः, बि. ए. ]

हंहो विदग्धाः काव्यकलाकौशलविदः सहृदयाः सामाजिकाः ! स्तिमित-द्युतिना खद्योतेन सहस्रांशुप्रकाशनमिव अनाघ्रातकाव्यालङ्कृतिकेन वराकेण मयेदं जगद्वरेण्यस्य कविकुलशिरोमणेः कालिदासस्य ग्रन्थसमालोचनं प्रथमोऽपराध इति कृत्वा वा, गुरुलाघवं किमप्यविजानतः शिशोर्दन्त-मुकुलोद्गमकाले यत्र तत्र वस्तुनि सलीलं दन्तपातनमिति मत्वा वा, स्वेषा-मुदाररमणीयस्वभावतया वा सर्वं मृष्यन्तु भवन्त इति सप्रश्रयं प्रार्थयामहे ।

तत्रादौ महाकवेः कालिदासस्य देशकालादि-निर्णयरूपान् जटिलान् विषयान् प्रत्नतत्त्वविर्त्सु निक्षिपामः । यद्यपि कैश्चिदस्मद्देशीयैः पुरातनीं किंवदन्तीमनुसरद्भिः पण्डितैः कालिदासस्य कालः खृष्टजन्मनः प्राग्भवे प्रथमे शतके स्वीकृतस्तथापि सामान्यतः पाश्चात्त्यैरधुनातनैर्भारतीयैश्च

* संस्कृतसाहित्यपरिषदो मासिकाधिवेशने वाचितोऽयं निबन्धः ।

मनीषिभिरेतदेव विनिश्चितं यदस्माकं महाकविः खृष्टीयपञ्चमशतके गुप्त-नृपतीनां राज्यकाले प्रादुरभूत्। उज्जयिन्यां तस्य विशेषेण बहुमानं पक्षपातं च दृष्ट्वा केचिदेनं तद्देशवासिनं मन्यन्ते। यथा वा भवतु तथा-स्ताम्। वयमिदानीन्तु तस्य महाकवेः कल्पान्तस्थायिनो ग्रन्थानेवाश्रित्य यथा-मतिवाग्विभवं किञ्चिदालोचयिष्यामः।

हन्त! अस्मिन् खलु भारते वर्षे आद्यं कविं प्राचेतसमारभ्य ताव-दद्यावधि कति वा कवयः प्रादुर्बभूवुः के वा तान् सामग्र्येण जानन्ति! तेषां केचन बुद्बुदा इव महाम्बुधौ कालसमुद्रे विलीनाः, केचिच्च भाग्यवन्तः कालमतिक्रम्य नूनमद्यापि जीवन्ति यशःशरीरैः। एतेषां कीर्तिमतां कवीनामन्यतमः खल्वयमस्माकं महाकविः कालिदासः। स पुनः सर्वेषां कवीनां श्रेष्ठो न वा, केन वा गुणसंघातेनैवं विधो बभूवेति वा सर्वमालोच्य-मस्माभिः।

अस्मद्देशीयानां समालोचकानां मध्ये कश्चिद्वाल्मीकौ, कोऽपि व्यासे, कश्चन भासे, अन्यश्च दण्डिनि, अपरः कोऽपि भवभूतौ, कश्चन माघे, कश्चिदपि श्रीहर्षे समादरातिशयं पक्षपातञ्च प्रदर्शयामासुः।

यथा—कूजन्तं राम-रामेति मधुरं मधुराक्षरम्।
आरूढकविताशाखं वन्दे वाल्मीकि-कोकिलम्॥

इत्यनेन श्लोकेन आदिकविर्वाल्मीकिर्बहुमतः।

यथा वा—अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः।
अभाललोचनः शम्भुर्भगवान् बादरायणः॥

इत्यनेन महर्षिर्बादरायणो व्यासः प्रपूजितः।

यथा वा—सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव॥

इत्यनेन कविमुनिर्भासस्तावदभ्यर्हितः।

यथा वा—जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥

इत्यनेन आचार्यदण्डिनि केनापि पक्षपातः प्रकटितः ।

यथा वा—सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते
धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम् ।
विशुद्धोक्तिः शूरः प्रकृतिमधुरा भारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते ॥

इत्यनेन कोऽप्यज्ञातनामा कविर्भवभूतौ तस्यापरिसीमं पक्षपातं प्रदर्शितवान् ।

यथा वा—"श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरे
वाच्यार्थे सदसद्विवेकविषये चान्ये कथा-वर्णने ।
आ सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी-
सञ्चारी करिकुम्भकुम्भभिदुरो वाणस्तु पञ्चाननः ॥"

"वाणोच्छिष्टं जगत सर्वम्"

इत्यादिभिर्वाणः सम्यक् प्रशंसितः ।

यथा वा—"उपमा कालिदासस्य भारवेरर्थगौरवम् ।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः ॥"

इत्यनेन कालिदासभारवि-श्रीहर्षाणामांशिकत्वेन कविगौरवं माघस्य पुनः सर्वगुणवत्त्वं भवतीत्याचक्षाणेन केनचिन्माघे समधिकं पक्षपातित्वं विज्ञापितम् ।

यथा वा—"तावद्भा भारवेर्भाति यावन्माघस्य नोदयः ।
उदिते नैषधे काव्ये क माघः क च भारविः ॥"

इत्यनेन केनचिन्नैयायिकसमालोचकेन श्रीहर्षो बहुमतः कवीनामग्रे स्थापितश्च । अत्रैतावता मतवैषम्येण प्रतीयते यद् भिन्नरुचिर्हि लोकः । निरपेक्षतया प्रवर्त्यमाने विचारे तु तत्रभवान् कालिदास एव कविकुल-शिरोमणिपदवीमधिकर्तुं प्रभवतीति नः प्रतिभाति । हित्वा रामायणं महाभारतञ्च तयोर्गुरुत्वान्महत्त्वादुपजीव्यत्वाच्च यद्यन्यानि सर्वाणि

काव्यानि निरपेक्षतया परीक्ष्येरन्, तदा कालिदासस्य काव्यानामेव सर्वापेक्षया नियतमुत्कर्षः प्रतिपादयितुं शक्यते। यदुक्तं श्रीमदाचार्यदण्डिना—

"नैसर्गिकी च प्रतिभा श्रुतञ्च बहुनिर्मलम्।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः॥"

इत्यनेन श्लोकेन, तत्रत्याः सर्वे गुणाः कालिदासे नूनं वर्तन्त इति ब्रूमः। कुत्र खलु महाकवेः कालिदासस्येतरकविकुलापेक्षया वैशिष्ट्यमिति प्रश्नो न पार्यतेऽस्माभिरेकेनैव वाक्येनोत्तरयितुम्। सुबहूनि तत्र कारणानि सन्ति, तेषां प्रधानं खलु कालिदासकाव्यानां प्रतिपदं गूढार्थव्यञ्जकं ध्वनिबाहुल्यम्। न कुत्राप्यस्य महाकवेः प्रबन्धेषु तावदपुष्टत्वदोषो दृश्यते। सर्वत्रैवामुना स्वाभिप्रायव्यञ्जकानि सार्थकानि पद-पदांश-निपात-वाक्यानि प्रयुज्यन्ते। एतद्वाक्यस्य समर्थकाः प्रभूता एव दृष्टान्तास्तावदुदाहर्तुं शक्यन्ते, विस्तरभयात्तु द्वित्राः पञ्चषा वा प्रदर्श्यन्ते। यथा

रघुवंशे "गन्धश्च धाराहतपल्वलाना"मित्यादिश्लोके चकारत्रयेण कविना सर्वेषामेव उद्दीपनविभावानां तुल्यप्राधान्यं द्योतितम्। यथा वा तत्रैव, "वाच्यस्त्वया मद्वचनात् स राजे"त्यादिश्लोके राजपदं, यथा वा शाकुन्तले "यास्यत्यद्य शकुन्तलेति हृदय"मित्यादिश्लोके यास्यतीति क्रियापदं, यथा वा तत्रैव "अभिनवमधुलोलुपस्त्व"मित्यादिश्लोके अप्रस्तुतेन त्यक्तचूतमञ्जरीकस्य सद्यःस्फुटकमलवसतिमात्रनिर्वृतस्य मधुपस्य व्यापारेण विसृष्टान्तःपुरयोषितो दुष्मन्तस्य तरुण्यामन्यस्यामनुरागो ध्वनितः। यथा वा मेघदूते "शङ्कास्पृष्टा इव जलमुच स्त्वादृशा यत्र जालैर्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति" इति श्लोके मेघस्य जारेण साम्यं व्यङ्ग्यम्। किं बहुना, व्यङ्ग्यप्रधानमेवकाव्यजातं कालिदासस्य। प्रतिपदमेवास्य महाकवेर्भङ्गितिषु व्यञ्जना वर्ततेतरामिति कृत्वा चिरमेवायं सहृदयानां पाठकानां,श्रोतॄणामालङ्कारिकाणाञ्चबहुमतो जातः

तत्र ध्वनिकारेण आनन्दवर्धनाचार्येण ध्वनिस्वरूपं विवक्षुणोक्तम्—

"सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति प्रतिस्फुरन्तं प्रतिभाविशेषम्॥"

वस्तुतत्त्वं निःष्यन्दमाना महतां कवीनां सरस्वती अलोकसामान्यं प्रतिभाविशेषं प्रतिस्फुरन्तमभिव्यनक्ति। येनास्मिन्नतिविचित्रकविपरम्परा-वाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते।

वस्तुतस्तु, रसिकचूडामणिः कालिदासः प्रायेण विना व्यङ्ग्यार्थं न किमप्याहस्म, व्यङ्ग्यार्थावबोधं विना कालिदासप्रबन्धपाठो वैयर्थ्यायैवेति ब्रूमः। प्रकृत्यैव प्रसन्नगम्भीरपदा, सौष्ठवौदार्यविशेषशालिनी, सदन्वया, सद्वृत्ता रसध्वनिभावादिगहना, गुणालङ्कारवती, ललितोचितवाग्वैदग्ध्य-चतुरा कलाकौशलवती तरुणीव काव्यलक्ष्मीः कालिदासस्य सर्वेषामेव रसिकानां मनांसि सलीलमाकृष्य रमयतितराम्।

( क्रमशः )

## कः पन्थाः

[ निबन्धकः—श्रीरजनीकान्त-दासः ]

राष्ट्रीय-व्यवस्थापकः—कः पन्था जगतः परिस्थितावस्यामन्योन्य-हिंसितविघोरजातीयपरिकल्पनायां क्रमवर्धिष्णुभेदबुद्धिसमिद्धसङ्करानल-करालायामिति विचिन्त्यम्। किं सहसा मानवाः सर्वे केनचिद्दैवोपयोगेने-तरप्राणिभ्योऽप्यधः कृताः, जाताश्च विस्मृतात्मभावाः? कोऽस्ति पथप्रदर्शकः सङ्कटेऽस्मिन् बुद्धिविपर्यासे? नमामि त्वामहं देव, भगवतो विश्वशान्तेः प्रवक्तुः सन्तप्तपतितजीवबन्धो यीशुखृष्टस्य भक्तवर! अपि चिकित्सितं किमपि ते परिज्ञातमत्र?

खृष्टीय ऋषिः—नान्यः पन्था ऋते भगवता यीशुना प्रोक्तेभ्य "आत्मवत् सर्वे प्रीणयितव्याः को नाम लाभस्तस्य सर्वस्य जगतः सार्वभौमेण वञ्चित-श्चेदात्मज्ञानात् स" इत्यादिभ्यो गुर्वर्थयुक्तेभ्यो मन्त्रेभ्यः। ननु समीक्षसे यदयं विशोच्यो लोकस्थितिभङ्गो धर्मसङ्करश्च दृश्यते, सर्वं तदात्मभाव-परिवर्जनादेव सञ्जातमिति? अस्माद्धेतोरेव मानवानां सुखस्वास्थ्य-

वर्धनक्षमं प्राकृतविज्ञानानुशीलनञ्च तेषां नृपशुनिर्यातनपरिकल्पितं विविध-दुःखसंविधानकानामव्यर्थयोनिप्रायं हि सञ्जातम्। प्रयोजनानुरूपं हि जीविकोपकरणं भजनीयं, दस्युवृत्तिप्रायैव सञ्चयलिप्सेति विजानीयात, सहयोगिता न तु प्रतियोगिता खलु लोकस्थितिमूलमित्येवञ्जातीया बहव एव लोकभङ्गनिवारणपटवो निष्कर्षा द्रष्टव्यास्तस्य भगवतो यीशोर्द्विसहस्र-प्रायान् वत्सरान पूर्वं समुच्चारितवाक्यानाम्। अधुना तु विस्मृत्यैतान परमादेशान हिंसन्तः परस्परान्नरा विषमदुःखपाथोधौ निमज्जिताः। दृष्टिर्येषां भगवति यीशौ तस्य चैतेष्वमृतवचःसु त एवाधुना, जनानां हितैषिण इति मे सम्मतम्। तान्येव वचांसि जगतो नवव्यवस्थाभित्ति-मूलानि भवितुमर्हन्ति, नान्यानि। कोऽत्र भवतो महम्मदीयर्षेर्निश्चयः ?

महम्मदीय ऋषिः—धर्मैकज्ञानमेव मानवानां सुदृढमेलनबन्धनं सौहार्द-प्रवर्धकं भ्रातृभावप्रचोदकञ्चेति विज्ञेयम्। एकेश्वरविज्ञानं विना धर्मैक-विज्ञानं न सम्भवति। सर्वेषां जगतां स्रष्टा पाता नियन्ता रक्षक एक एव पुरुषोऽमूर्तोऽद्वितीयो महानाल्लेति पदवाच्यः। तस्यैव सर्वशेषप्रेरितो महाजनो महम्मदाख्यः सत्यधर्मस्यावितथप्रवक्ताऽस्माकं धर्मशास्त्रस्य च प्रणेता। एक ईश्वर एकं धर्मशास्त्रमेको धर्मप्रवक्तेत्येवं रूपं मेलनतीर्थं विना बहुधा विभक्तचित्तवृत्तीनां मानवानां न कदापि भेदबुद्धिपरिहारः शान्तिश्च जगति भविता। अतो धर्मैकविज्ञानसाध्यमेकत्वविज्ञानमेव नः परम-मादर्तव्यम्। तस्मादीश्वरशास्त्रैकज्ञानमूलं धर्मैकविज्ञानं हि जगच्छान्ते-रेकः पन्था इति मे सुनिश्चितम्। अथ किं ते विचारितं भो भगवत-स्तथागतस्य शिष्यवरस्य ?

बौद्ध ऋषिः—संसृतिरेव सर्वदुःखकारणम्। यावन्न जन्मनिरोधः स्यात्तावत कुतो दुःखनिवृत्तिः ? अतोऽपुनर्भवं दुःखत्रयानामैकान्तिक-निवृत्तिमूलं विजानद्भिर्जीवैः स एव सर्वप्रयत्नेन साधनीयः। जन्म च वासनामूलम्। वासनामूलाश्च मानवानामहङ्कारादिचित्तवृत्तयो यावतीया लाभप्रचेष्टा हिंसावृत्तिव्यापाराश्च। अतः संन्यासेन जन्मवीजभूतानां

वासनानां निर्वाणं कुर्यादिति मे मतम्। वासनालयार्थं तीव्रवैराग्य-संन्याससाध्यो योऽष्टाङ्गमार्गो भगवता तथागतेन समादिष्टः स एव जन्म-निरोधैकोपायो जगच्छान्तिप्रवर्तकश्च भवितुमर्हति। किमत्र वक्तव्यमस्ति चात्रभवतो महर्षेर्वेदान्तप्रतिपादितब्रह्मज्ञानस्य पारगामिनः ?

· वैदान्तिक ऋषिः—नाहं जानामि ब्रह्मकृपासम्भवाद्ब्रह्मज्ञानादृते जीवानां सम्बलमन्यत्। यानि यान्यत्रभवन्त ऋषयः प्रोक्तवन्तः, सर्वाणि तानि युक्तानीति मन्ये। किन्त्वस्ति किञ्चित् परिपूरकमिति च जाने। विना तत् सर्वमेतद्वन्ध्यानारीवाफलप्रसूर्भविता। अद्वयब्रह्मात्मविज्ञानं हि तद्वस्तु। यदेकेश्वरविज्ञानरत्नानां कौस्तुभमणिरिव महार्घं दुष्प्रापञ्च, परन्तु कां चिन्ताप्रणालीमवलम्ब्य तत् प्राप्तव्यमिति सुष्ठु विचारितव्यम्। किं सम्बन्धभाक् स एकेश्वरो जगद्भिरखिलजीवैर्विज्ञातृभिश्च सार्द्धमिति विचार-यितव्यविषयः। यावन्न मानवास्तत्सम्बन्धस्य नैगूढ्य-याथार्थ्यं सम्यक् प्रतीयुस्तावत्तेषामेकेश्वरविज्ञानं कल्पनामूलं हि भवेत्। अपिच शास्त्रैकान्ध्य-महाजनविशेषपक्षपातित्वेश्वरावतारवादित्व - प्रतीकमतित्वादि - सर्वभेदबुद्धीनां पुष्कलकारणानि वर्तेरन्। अत एतन्निरसनमूलाद्वयब्रह्मात्मभावो ज्ञान-विज्ञानसम्मतं यथा स्यात्तथा विचारणीयः।

एकमेव वस्त्वस्ति न बहूनि। तद्वस्तु बृहत्वाद्ब्रह्मेतिपदवाच्यम्। नित्यं सच्चित्स्वरूपञ्च तदतः केवलमात्मेति विज्ञातुश्चैतन्यस्वरूपात्मभाव-स्यानुसरणेन हि विज्ञानग्राह्यं नान्यथा। अस्मादादिविज्ञातारः स्थावर-जङ्गमाद्यप्राणवन्तश्च ग्रहोपग्रहसमन्वितं निखिलं विश्वञ्चेति सर्वाणि तस्य ब्रह्मात्मनो लीलास्वीकृतस्वगतविज्ञानभेदरूपाण्येवेति प्रतिपत्तव्यम्। चिन्मात्र-स्वरूपे चात्मनि न कदापि बहुत्वं प्रयुज्येत। चिन्मात्रवस्तुनो बहुत्वमचिन्तनीयम्। विज्ञानविषयभेदादेव केवलं तस्य बहुत्वोपपत्तिः स्यात्। एक एवात्मा प्रकाशालम्बनस्य तारतम्यादाब्रह्मस्तम्बपर्यन्तस्य समस्तस्य विश्वस्य निमित्तकारणमुपादानकारणञ्च। तथा हि स एवैको-ऽचिन्त्यशक्तिप्रभावेण तस्य विश्वस्य चेतनाचेतनाख्य-समस्तपदार्थजातानां

रूपं रूपं प्रतिरूपं स्वीकुर्वन् रूपवैविध्यैः स्वं प्रपञ्चयति विश्वात्मभावेन च विद्यमानः। कथमयमेक आत्मा बहु-ससीमविज्ञातृरूपैः स्वं व्याकुरुत इति न प्रष्टव्यमतिप्रश्नोऽयम्। न चायमात्माऽहम्प्रत्ययस्य विषयः, परन्त्वस्यैव विषयोऽहम्प्रत्ययो भवति। किन्त्वहम्प्रत्ययद्वारेणैव सर्वो ह्यात्मास्तित्वं प्रत्येति। आत्मा च ब्रह्म। अतः सर्वस्यात्मत्वाद्ब्रह्मास्तित्वञ्च प्रसिद्धमेव, सर्वो लोको नाहमस्मीति प्रतीयात्। अत एव लोकेऽस्मिन् क्वचित् क्वचिद्दृष्टो नास्तिक्यवादोऽपि सर्वथाऽनस्तित्वमेव प्राप्य वाचारम्भणत्वं गतः।

अथ किं प्राप्तमस्माद्ब्रह्मात्मकूटात् सृष्टिदर्शनात्। विज्ञातारः प्रतिज्ञानक्रियायां तमात्मानमेव पश्यन्ति, शृण्वन्ति, जिघ्रन्ति, स्पृशन्त्यास्वादयन्तीत्येवं किं नु प्राप्तं स्यात्? स चात्माऽस्मदादीनां बोधेषु बोधेष्वप्यहम्प्रत्ययस्य विषयिरूपेण निरन्तरमनुवर्तमानो विधृति-सेतुरिव जागराद्यवस्थात्रयेषु विद्यते। विषयविशेषमात्रेण हि सम्बन्धयुक्तः सन् विज्ञाता सर्वदा स्वात्मनोऽनन्तत्वं न प्रत्येति। किन्तु सर्वाणि विज्ञानान्येकात्मप्रत्ययसम्पृक्तानि सन्त्येव विज्ञातुर्गोचराणि भवन्ति नान्यथेति यदा वयं किञ्चित् प्रणिधानपूर्वकमस्माकमेतद्विज्ञानसिद्धिप्रकरणं प्रतिबुध्येमहि तदैव निरस्तसर्वसंशया भवेम, यत् एक एवात्मा ससीमासीमादिस्वगतभेदं स्वीकुर्वन् स्वप्नजागरस्मृतिविस्मरणादि-सर्वावस्थायामस्माकं विज्ञानानि सम्भावयति, बहुससीमविषयिषु परम एकोऽखण्डविषयिरूपेण चानुवर्तते। यद्यस्माकमात्मज्ञानं निरवच्छिन्नं ससीममेवाभवत्तदा वयं ससीमा इत्यपि नाजानीम, विस्मृतस्य विषयस्यापि प्रस्फुरणकाले ममैवायं विज्ञात आसीदिति प्रत्यभिज्ञा च नाभवत्। एवं सति आहोस्वित् को महदाश्रयः किं माहात्म्यञ्च मानवमात्रस्य प्रापणीयं स्यात्। अपि च किं नु तेषां परस्परं महन्मेलनसौधोऽनावृतद्वारो भवेत्, सर्वेषां मानवानां समानाधिकारित्वञ्च प्रतिपन्नम्! यथा लोकेऽस्मिन्नेकमातृकाणां सन्तानानां परस्पर-सौहार्दभाव एव स्वाभाविको भवत्येवं निखिलमानवानामन्योन्य-भ्रातृभावेनानुवर्तनं, न तु

द्रोहादिः प्रतिपद्येत । भगवता यीशुना यत् प्रोक्तं सर्वमात्मवत् प्रीणयेदिति तन्मन्त्रस्य चाविचलित-भित्तिमूलं प्राप्तम् । ईश्वरैकज्ञानमूलं यद्धर्मैकविज्ञान-स्थानमत्रभवता महम्मदीयर्षिणा दृष्टं तस्यापि चापरिहार्यत्वं प्राप्तम् । अपि च विभिन्नावतार-महाजनादि-स्वीकारहेतोर्या भेदबुद्धिरुपपद्येत सापि निवारिता स्यात् । ब्रह्मात्मनः कृपामूलैः साधनाद्यैरेव सर्व एव मानवा आर्यानार्य-श्वेतकृष्णादिभेदनिरपेक्षं स्वात्मनि तस्य चिदैश्वर्यमधिकादप्य-धिकतरं स्वीकर्तुं सुक्षमाः नात्र कश्चिद्विधिनिर्दिष्टप्रतिबन्धकः । एवं सति विशिष्टावतारमहाजनवादश्च निर्वैशिष्ट्यं हि गतः । यथा यीशु-सुगत-महम्मदादयो लोकोत्तरचरिता महाजना ब्रह्मेच्छावशादेवाभ्युदायंस्तथान्ये च बहवो मानवानां हितकारिणो लोकोत्तरपुरुषास्तदिच्छयैव भूत आविर्बभूवु-स्तथा भविष्यत्यप्याविर्भविष्यन्तीत्यत्र किं संशयस्थानम् ? उक्तञ्चैतन्महा-ज्ञानिना श्रीमच्छङ्कराचार्येण पञ्चरात्रसिद्धान्तिनां मतं निरस्यता—'न चैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन्, ब्रह्मादि-स्तम्बपर्यन्तस्य समस्त-स्यैव जगतो भगवद्व्यूहत्वावगमात्'। चेतनाचेतनं समग्रं विश्वं ब्रह्मणः स्वप्रकटनविधैवेति प्रदर्शितञ्च मया ।

(क्रमशः)

# आनन्दलतिका

समः—प्रिये साधु मन्त्रितं त्वया, किन्तु त्वामपहाय प्रयातुर्यदि तावज्जीवितं तिष्ठति । (इति सनिश्वासमश्रूणि विमुञ्चन्नधोमुखस्तिष्ठति) ।

रेवा । ( सभयं ) नाथ,

अविधेयं विधेयं स्याद् यत्र भर्ताऽनुरज्यति ।
कुलस्त्रीणामयं धर्म इति धर्मविदो विदुः ॥२५६॥

ईदृशानि भणितानि शृण्वतो
नाथ कस्य न मनो विदीर्यते।
आत्मगौरवमुदस्य दूरतो
भर्तुरीप्सितकरो हि किङ्करः ॥२६०॥

तद् तथा रोचते प्रभविष्णवे तदेवानया विधेयम्।

अन्योन्यमित्थमथ चित्तगतं लपन्तौ
विच्छेदकम्पिमनसौ दधतुः कथञ्चित्।
नानासरोवरसरोजविहारभाजौ
कोकाविव प्रणयिनौ दिवसावसाने ॥२६१॥

नमन्मौलिगलद्बाष्पमधोमीलितलोचनम्।
बद्धकण्ठमुरःकम्पमिदमूचे प्रियां समः ॥२६२॥

अत्र चेदयि वसामि गोपितः
स्नेहतोऽपि जननी विपद्यते।
त्वां विहाय यदि यामि निर्घृणो
जीविते खलु तदा गतस्पृहः ॥२६२॥

जानीहि वामनयने तव किङ्करत्व-
मङ्गीकृतं चिरमनेन न चापरस्याः।
सेवाविधानविधुरो यदि दैवतः स्यां
क्षन्तव्यमेतदपि मे प्रियया कृपाभिः ॥२६४॥

निशम्य रेवा करुणोदितानि
विहाय गन्तुं कृतमानसस्य।
म्लानाङ्गवल्ली चिरमास दूना
दम्भोलिदग्धा नवमालतीव ॥२६५॥

निद्रायितां सहचरीमनुभूय याताः
सख्यश्चिरेण भयवत्सलताढ्यचित्ताः।

आरात्तदिङ्गितमति-प्रतिबोधनाय
सम्भूय वासभवनान्तिक एव तस्थुः ॥२६६॥

अथ तां रेवामानन्दकरम्बितामुन्नीय परस्परम् :—

दूराद्भानु-रथाग्रचारिकिरणे पूर्वाचलं चुम्बति
श्रेणीभूय मधुव्रतेषु नलिनीसन्धानलुब्धात्मसु ।
अस्या कैरपि दुर्निवेद्यविषयैरस्माभिरुन्नीयते
शृण्वत्या इव चक्रवाकनिनदं चक्राङ्गनायाः क्रमः ॥२६७॥

ता दूरतः समभिवीक्ष्य समः प्रियायाः
पाणिद्वयं हृदि विधाय करद्वयेन ।
स्वे कर्णपद्म (?) अभिलिख्य निजां समस्या-
मस्यां निधाय च तिरोऽभवदश्रुदिग्धः ॥२६८॥

अन्योन्यमित्थमनुभूय मिथोऽनुराग-
मानन्दकन्दलितमेव मनो यदासीत् ।
कान्ते गते निजगृहं यदभूच्च यादृक्
तद्भावबद्धहृदयाः परिवर्णयन्तु ॥२६९॥

गतवति यदुवीरे क्षौमरुद्धाखिलाङ्गी
क्षणमपि विरहं सा नैव सोढुं समर्था ।
प्रियमिलनरसार्द्रा लब्धपाथोदधारा
क्षितिरिव नवशस्या चण्डभानुप्रतापम् ॥२७०॥

दिशि दिशि सममूर्त्तिं पश्यतीवायताक्षी
हृदयन्निहितमेनं श्लिष्यतीवादरेण ।
स्वपुरत इव कान्तं मन्दमन्दं बभाषे
प्रतिवचनमथैयं नैव लब्ध्वा मुमोह ॥२७१॥

अनुनयचतुरास्ताः क्षिप्रमभ्येत्य सख्यः
किमिति किमिति मुग्धाः कम्पमानाखिलाङ्ग्यः ।

परिचरति च काचित् कापि रोदित्यजस्रं
क्षितिपतिपुरमन्या वक्तुमाशु प्रतस्थे ॥२७२॥
दैवादहं क्षितिविलोकनकौतुकाय
स्तोकं गतः क्षितिपतेर्दमनस्य पुर्याम् ।
अभ्यर्च्य मां स कथयंस्तनयातदाधि-
मन्तःपुरं धृतकरं सहसा निनाय ॥२७३॥
तत्रैव बालां मलिनां कृशाङ्गीं
तां मुक्तकेशीं क्षितिलग्नदेहाम् ।
संमीलिताक्षीं श्वसितानुमेय-
जीवां निरीक्ष्याशु चमत्कृतोऽस्मि ॥२७४॥
तत्कर्णमूलमधि तस्य समस्य वृत्त-
मामूलतः कथयितुं मयि भिन्नवक्त्रे ।
उत्थाय धैर्यमवलम्ब्य कियत् कुमारी
कृच्छ्रादसौ सपदि मत्पदयोः पपात ॥२७५॥
ततोऽम्बयाऽस्याः सहचारिणीभि-
र्बद्धाञ्जलिं मच्चरणे निपात्य ।
ऊचेऽहमेतत कृपया मुनीन्द्रो
मन्त्रं पुनर्जल्पतु कर्णमूले ॥२७६॥

(क्रमशः)

## विदुषामुपाधिलाभः

प्रायेणात्मनो जन्मदिवसं नववर्षप्रवृत्तिं च निमित्तीकृत्य यथासम्प्रादयं पारितोषिकत्वेनोपाधयो वितीर्यन्ते भारतसम्राजा प्रजाभ्यः । तत्र च महामहोपाध्यायोपाधिर्ब्राह्मणपण्डितानां स्वायत्तीकृतः । वर्षे चास्मिन

भारते वर्षे द्वाविव सुकृतिनौ ब्राह्मण-पण्डितावुपाधेरस्य पात्रतां नीतौ। तत्रैको वेल्लूरप्रान्ताभिजनश्चिन्नस्वामी शास्त्री काशीविश्वविद्यालय-धर्मविज्ञान-विभागाध्यक्ष इति नूनं पण्डित-प्रकाण्ड एव। विदितनिखिलगुणाभिजनादि-विशेषवार्तस्यास्य ब्राह्मणपण्डितस्यानेनोपाधिविशेषलाभेन परमं परितोष-मापन्ना वयम् महान् अस्माकमेवायं लाभ इति तमत्र यथायोग्यमभिनन्दनेन सम्भावयामः।

अन्यतरश्च श्रीमान् कालीपद-तर्काचार्यः साम्प्रतं कलिकाता-राजकीय-संस्कृतमहाविद्यालयस्य न्यायशास्त्राध्यापकोऽपि भूतपूर्वः संस्कृतसाहित्य-परिषदाचार्यः संस्कृतसाहित्यपरिषत्-पत्रिकासम्पादकश्चेति तस्यैतेनाभ्युदयेन परमं खल्वानन्दमनुभवामः। परिषत्प्रवृत्तेरन्यतमः समुद्योक्ताथं सुधीवर्यः आ सृष्टेर्दशैकादशवत्सरान् यावदाचार्यकादिकर्मभिः परिषदं प्राणैः पणैः पर्यचरत्। यत् सत्यं वहत्येव संस्कृतसाहित्यपरिषत्तैस्तैः कर्मभिरधमर्णता-मस्य स्वजीवातुभूतस्य पण्डितप्रकाण्डस्य। सुकविरयम् अद्यापि यावत् स्वयं निर्मितानि तानि तानि काव्यानि स्वस्वत्वनिरपेक्षमेव परिषत् पत्रिकायां पुस्तकात्मता मुद्राप्य तल्लब्धजनुषा धनेन परिषदः कोशोपचये चेष्टते।

अन्यश्चायमानन्दहेतुरस्माकं समुपनतः। यत् कलिकाता-राजकीय-संस्कृत-महाविद्यालयाध्यक्षः श्रीमान् सुरेन्द्रनाथदासगुप्तमहोदयस्तामेव नववर्ष-प्रवृत्तिं निमित्तीकृत्य सि, आइ,इ, इत्युपाधिं लब्धवान्। आङ्गलभाषा-निष्णातोऽयं युरोपादि-दूरदेशादपि समुचितामुपाधिपरम्परामधिगत्य प्रख्यापितवान् भारतवर्षस्य माहात्म्यं तेषु तेषु प्रदेशेषु। अभि-मन्यते सोऽयं संस्कृतभाषामात्मीयत्वेन। संस्कृत-महाविद्यालयाध्यक्षोऽयं संस्कृतसमाजहितमेवाकाङ्क्षन्त्याः संस्कृतसाहित्यपरिषदोऽपि मान्य इति यत् सत्यम् तदीयेनोपाधिलाभेनाप्यानन्दमद्यानुभवामः। चिरं जीव्यासुरिमे विद्वांसः संस्कृतसाहित्यस्योन्नतिं विदधाना इति भगवन्तं भूतभावनं प्रार्थयामहे।

# संस्कृतसाहित्यपरिषदो विशेषाधिवेशनम्

व्यतीते सौर-तपसो द्वादशदिवसे सायं सार्धषड्वादनसमये राजकीय-संस्कृतमहाविद्यालयाध्यक्षस्य श्रीमतः सुरेन्द्रनाथ-दाशगुप्तस्य सि. आइ. इ. इत्युपाधिप्राप्तिम्, तथा तस्यैव महाविद्यालयस्य न्यायशास्त्राध्यापकपदमलं-कुर्वाणस्य श्रीमतः कालीपद-तर्काचार्यस्य महामहोपाध्यायोपाधिप्राप्तिं च निमित्तीकृत्य समभूदेकं विशेषाधिवेशनम् परिषदः। तत्र च कलिकाता—विश्वविद्यालय-प्रधानसंस्कृताध्यापकः श्रीमान् विधुशेखर-शास्त्री महोदयः सभापतिपदमलमकार्षीत्। समागता अनेके महामहोपाध्याय-प्रायाः पण्डिताः आङ्गल-भाषाशिक्षिता विषयिणः सज्जनाश्चाभिनन्द्ययो-रनयोर्गुणानुपजीव्य स्वं स्वं वक्तव्यं प्रकाशयामासुः। परिषदा चाभिनन्दन-पत्रमेतयोः प्रदत्तम्। इमे दाशगुप्त-तर्काचार्ययोरभिनन्दनपत्रे—

संस्कृत-महाविद्यालयाध्यक्ष-सुधीप्रवर-श्रीयुक्त सुरेन्द्रनाथ दाशगुप्त, एम.ए., पि-एइच. डि., डि. लिट. महोदयानां, 'सि. आइ. इ.' इत्युपाधिप्राप्तौ संस्कृत-साहित्य-परिषदः अभिनन्दनम्—

आकृत्या जितमन्मथोऽपि मतिमन् कीर्त्या सुरेन्द्रः स्वयं
प्रेम्णा पण्डित-गोपिका-जनमनस्तोषे रमेशायसे।
नीत्या न्यायपरायणोऽसि समदृक् शुकः स सञ्जीवको
वाचा वञ्चित-वाक्पतिस्त्वमतुलः पञ्चाननः संसदि ॥१॥
प्राच्यं दर्शनवारिधिं निजधिया मथ्नन् सुधां प्राप्य तां
शिष्येभ्यः प्रतिपादयन् प्रतिदिनं कीर्त्याऽसि संकीर्तितः।
सम्राजा गुणपक्षपातनिपुणेनोपाधिनालंकृतः
सी. आइ. ईति सुधीप्रवाञ्छिततमेनाभ्यर्च्य जातादरम् ॥२॥
पाश्चात्त्येऽपि च दर्शने तव मतिर्लब्धान्तरा प्राच्यवद्
द्वे एते मिलिते प्रयागतुलिते तीर्थे सुरेन्द्रे त्वयि।

गङ्गा-सूर्यसुतासमे अघशमे प्राच्या प्रतीच्या मती
कुर्वाते कृतकृत्यतापरिगतांस्तीर्थार्थिनो मानवान ॥३॥
साहित्ये भवतस्तुलातिविरला ग्रन्थाः प्रबन्धाश्च ते
ज्ञानालोकविकाश-भास्करसमाः प्राज्ञप्रशंसार्चिताः ।
आयुर्वेदमहो त्वया प्रतिभया प्रोद्भासयंष्टीकया
सम्मानं कुलजं जयस्यविरतं नैसर्गिकं बंहयन ॥४॥
आलङ्कारिकधीस्तवातिनिपुणा शास्त्रं प्रणीय त्वया
सर्वेषां विदुषां मनस्यविचला श्रद्धा समुत्पादिता ।
सा त्वां मानसमन्दिरे जनगणस्याचार्यभूता चिरं
तैः सम्पूजयति प्रशस्तिमसमां सन्तन्वती सर्वतः ॥५॥
कवीन्द्रवंशो बुधवर्गजन्मतश्चिराय धन्यो भवता तमन्वयम् ।
स्वजन्मना ख्याततमं प्रकुर्वता कुलप्रदोपत्वमुपेत्य दीप्यताम् ॥६॥
स एव धन्यः किल यस्य जन्मना स्वदेशवासी विजयेत गर्वभाक् ।
भवन्तमाशीर्वचसा लभामहे चिरायुषं व्याससमं यशस्विनम् ॥७॥

---

भूतपूर्वस्य संस्कृतसाहित्यपरिषदाचार्यस्य, संस्कृतसाहित्यपरिषन्मुख वर्तमान-राजकीयसंस्कृतमहाविद्यालय-न्यायशास्त्राध्यापकस्य श्रीमतः कालीपद-तर्काचार्यस्य 'महामहोपाध्यायो'पाधिप्राप्तौ संस्कृत-साहित्य-परिषदः अभिनन्दनम्—

प्रशंसामः कामं गुणिनि बहुमानं विदधतं
ससम्राजं राजप्रतिनिधिमुदारं सहृदयम् ।
प्रशंसामो वङ्गेश्वरमथ कृतिं संस्कृतमहा-
कलाशालाध्यक्षं कलितगुणिपक्षं सुचिरतः ॥१॥
प्रशंसामो भाग्यं जनकजनयोर्ग्यं तव पितु-
र्यदस्मादाराद्ध-स्मरहरपदाब्जात्त्वमुदभूः ।
प्रशंसामस्त्वामप्यखिलगुणधामार्हसि महा-
महोपाध्यायं यद् विरुदमणिमुख्यं निरुपमम् ॥२॥

उपाधेर्भूष्यस्त्वं किमथ विरुदोऽभूषि भवता
न जाने तत्त्वेन प्रणिदधदपि प्राप्तविशयः।
तथाप्येतन्निश्चप्रचमुपलभे योऽद्य युवयोः
समासन्नो योगो जयति स मणिं काञ्चनयुजम् ॥३॥
बहोः कालादूर्ध्वं शुभविरुदवृष्टिः समुचिते
निषिक्ताऽभूत् क्षेत्रे प्रकृतिसुभगे यस्य विभवात् ।
समुत्कर्षः शस्यप्रतिम-सुमनोवाचि भविता
यतो दैवी भाषा कमपि समयादुन्नतिपदम् ॥४॥
बहोः कालादस्या विततमुखपत्र्याः सचिवता-
मधासीराचार्यस्त्वमथ समभूर्दीर्घ-दिवसान् ।
समुत्पत्तेरेवंप्रमुखविविधैः क्षेमविधिभिः
समासीस्त्वं प्राणाधिक-सुहृदमुष्याः परिषदः ॥५॥
विद्वत्तया स्वगतया तपसा पितॄणाम्
आशीर्गुणेन गुरुणा गुरुदैवतानाम् ।
स्वेषाञ्च भाग्यविभवेन महामहोपा-
ध्यायस्त्वमस्यथ लभस्व सुखं चिरायुः ॥६॥
लभ्यस्त्वयापि विदुषा यदसावुपाधि-
स्तन्मात्रमेष नहि ते बहुमानहेतुः ।
प्रागप्युपाधिकलनाज्जनसम्मतस्य
हेतुस्तव प्रकृतिसुन्दरतापि तत्र ॥७॥
संस्कृत-साहित्य-परिषदुपलालिता त्वयाऽभिनन्दति ।
महामहोपाध्यायं श्रीकालीपद-तर्काचार्यं त्वाम् ॥८॥

## मासिकाधिवेशनम्

व्यतीते सौर-पौषस्य २६श-दिवसे सायं सार्धषष्ठहोरायां महामहो-पाध्याय-श्रीमदनन्तकृष्णशास्त्रिमहोदयस्य साभापत्येन संस्कृतसाहित्यपरिषदो

वर्तमान-मासीयमधिवेशनं सञ्जातम्। तत्र श्रीमता दुर्गादासगोस्वामि-काव्यतीर्थेन "महाकविकालिदासविषयकं यत् किञ्चित्" इति शीर्षको निबन्धो वाचितः। निबन्धोऽयं विषयगौरवेण भाषासौष्ठवेन च परमरमणीयः समभूत्। उपस्थिताः केचन निबन्धं समालोचितवन्तः। सभापते-रभिभाषणानन्तरं सभाभङ्गो जातः।

## १२श-देवभाषापरिषदः कार्यविवरणम्

अखिलभारतीय-देवभाषापरिषदो द्वादशमधिवेशनं युक्तप्रान्तीयगौरख-पुरमण्डले "वरहज"वाजारस्थले गत-दिसम्बर-मासस्य २४।२५ दिवसयोः कलकत्ता-संस्कृतमहाविद्यालयाध्यापकानां प्रथितयशसां श्रीहाराणचन्द्र-भट्टाचार्याणां सभापतित्त्वेन सुसंपन्नम्। तत्र प्रथमदिवसे स्वागताध्यक्षभाषणं परिषदध्यक्षसमभिभाषणं च वेदमन्त्रपाठपूर्वकं सुसञ्जातम्। अधिवेशनस्य परस्मिन् दिवसे २५शे तिथौ वाराणसेयानां विहार-वास्तव्यानाम् युक्त प्रदेशवासिनाञ्च विदुषां संस्कृतभाषासंस्कृतिविषयमुपलक्ष्य भाषणान्य-भूवन्। प्रस्तावाश्च संस्कृतभाषा-प्रचार-समभ्युदयविषयकाः कतिचित् स्वीकृताः। देवभाषापरिषदः सर्वेषु प्रान्तेषु शाखास्थापनार्थं च प्रस्तावो विहितोऽधिवेशने। नववर्षस्य कृते सभापतिना कार्यसमित्या सदस्यानां नामावली पुरस्कृता सा सर्वसम्मत्वा स्वीकृता।

## द्रष्टव्यं परिषत्सदस्यैः

संस्कृतसाहित्यपरिषत्पत्रिका मासत्रयमध्ये सकृदेव वत्सरपर्यन्तं प्रकाशमेष्यति, इति कार्यकारिसमितिनिर्णयोऽनुष्ठानपथे नेदानीमानेतव्यः। यतः परिषदः परिस्थितिरिदानीं सदस्यानामुत्साहेन कथञ्चनोन्नतिं गच्छ-तीति विगत-सौरपौषस्य ऊनत्रिंशदिवसे कार्यनिर्वाहकसमित्या निर्धारितम्। विश्वसिमः—एवमेव यदि परिस्थितिः क्रमेणोन्नतिमेवोपगच्छेत्, पत्रिकापि यथावदेव सर्वदा प्रकाश्येतेति।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| February, 1941 | १८६२-शकीये माघे<br>२३श-वर्षस्य १०म-संख्या | Vol. XXIII<br>No. 10 |
|---|---|---|


## ॥ शारीरकमीमांसा-प्रश्नोत्तरसाहस्री ॥

### ॥ अध्यासाक्षेपभाष्यपरीक्षा ॥

अयं चात्रानुसन्धेयोऽध्यासाक्षेपपरभाष्यभागः—"युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः, इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य, तद्विपर्ययेण विषयिणस्तद्धर्माणां चाध्यासो मिथ्येति भवितुं युक्तम्"—इति ॥

### ॥ तत्र प्रश्नाः ॥

अत्र (१) "युष्मदस्मत्प्रत्ययगोचरयोरि"त्यत्र युष्मदिति बहुवचननिर्देशः किमर्थः। अस्मत्प्रत्ययगोचरस्य तु विषयिणस्सिद्धान्त एकत्वाद् अस्मदिति बहुवचनं कथं न विरुद्धम्? कथं च गोचरयोरिति द्विवचनम्, न गोचराणामिति बहुवचनम्। (२) युष्मच्छब्देनापि श्रोत्राऽहमर्थ एवावबुद्ध्यत इति स्थिते कथं युष्मदस्मदिति भेदोपन्यासः। (३) एवं "विषयविषयिणोरि"त्यत्र चैतन्यस्याप्यस्मत्प्रत्ययगोचरत्वेन कथं न विषयपदेन ग्रहणम्। (४) विषयित्वे च तस्य कथमस्मत्प्रत्ययगोचरत्वम्। (५) कुतो वा न युष्मत्प्रत्ययगोचर एव विषयी, विषयश्च नास्मत्प्रत्ययगोचरः। (६) "अस्मत्प्रत्यय-

गोचरयोरि"त्यत्र गोचरपदप्रयोगः किमर्थः ; प्रत्ययपदेनैव विषयिलाभात्। (७) "युष्मदस्मत्प्रत्ययगोचरयोरि"त्यनेन "विषयविषयिणोरि"त्यनेन वा निर्वाहे किम्प्रयोजनमन्यतरोपादानम्। (८) विषयस्य विषयिणि सिद्धान्ते तादात्म्यस्वीकाराद् विषयविषयिणोरिति भेदनिर्देशः कथम्। (९) तमःप्रकाशयोः सदा परस्परमतादात्म्याद् विषयविषयिणोः परस्परं बाध्यबाधकभावाभावाच्च कथं तमःप्रकाशवदिति निदर्शनम्। (१०) मन्दान्धकारादौ सामानाधिकरण्यात् कथं तमःप्रकाशयोर्विरोधः। (११) पेचकादीनां दिवाऽप्रकाशस्य रात्रौ प्रकाशस्य च दर्शनेन, मार्जारादीनां सर्वदा प्रकाशेन, सत्यपि प्रकाशे सर्वदा मीलितनयनानामप्रकाशेन च सर्वसाधारणं तमःप्रकाशस्वरूपं च किम्। (१२) पेचकादिप्रकाशस्यास्माकं तमोभावस्यास्मदीयस्य तमसस्तत्प्रकाशभावस्य च दर्शनेन कथं तयोर्नेतरेतरभाव उपपद्यते। (१३) विनाऽपि धर्मितादात्म्यं धर्ममात्रतादात्म्यस्य स्फटिकलौहित्यादिस्थले नीरक्षीरन्यायेन दृष्टत्वात् कथं धर्मीतरेतरभावानुपपत्तिमात्रेण धर्माणामपि नेतरेतरभावः। (१४) "इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणो"त्यादि कथं न पुनरुक्तम्। (१५) किञ्च पुनस्तदुल्लेखस्य प्रयोजनम्। (१६) कथं "चास्मत्प्रत्ययगोचरे विषयिणि चिदात्मक" इति न व्याहतम् ; विषयत्वचिदात्मकत्वयोर्विरोधात्। (१७) किञ्च पुनश्चिदात्मक इति पदान्तरप्रयोगस्य प्रयोजनम्। (१८) अध्यासस्य मिथ्यात्वरूपत्वादद्वैतमते च मिथ्यात्वस्यापि मिथ्यात्वस्यैवाभिमतत्वादध्यासो मिथ्येत्यनेन कथमुक्तैः कारणैरध्यासस्याक्षेपः। (१९) "युष्मदस्मत्प्रत्ययगोचरयोरि"ति पूर्वपक्षवाक्ये विरुद्धस्वभावत्वस्यैवेतरेतरभावाभावप्रयोजकत्वमुक्तम्, नान्यस्य, विरुद्धस्वभावस्तु काल्पनिकेतरेतरभावे न विरोधी शुक्तिरूप्यादि स्थले दृष्टः, "इत्यतोऽस्मत्प्रत्ययगोचर" इत्यध्यासाक्षेपोपसंहारावसरे तु विरुद्धस्वभावोऽपि न परामृष्टः, इत्यध्यासविशेषाक्षेपोऽयं कथं न प्रतिज्ञामात्रम्। (२०) "इति भवितुं युक्तमि"ति युक्तियुक्तत्वमध्यासाक्षेपस्य कथमुपपद्यते। (२१) सत्त्वेन प्रतीतिविषयत्वादिना सालक्षण्यात् कथं विरुद्धस्वभावत्वमपि चैतन्यान्तःकरणयोः। (२२) तद्विपर्ययेण विषयिणोऽध्यासो हि स्वरूपतो

नाद्वैतिभिः स्वीक्रियते, विषयिणोऽपि मिथ्यात्वापत्त्या शून्यवादापत्तेरिति विषयिणो विषयेऽध्यासाक्षेपः कथं न निष्प्रयोजनः। (२३) सर्वस्य प्रपञ्चस्याध्यासे ब्रह्मणि समर्थनीय आक्षेपसमाधानाभ्यामन्तःकरणाध्यासमात्रे कथं पूर्वोत्तरपक्षयोर्दृष्टिः। (२४) अन्तःकरणाध्यासाधिष्ठानस्यैव ब्रह्मत्वे "जन्माद्यस्य यत" इति सकलजगत्कारणत्वेनेशगतेन कथं तस्य लक्षणम्, इत्यध्यासाक्षेपभाष्य एतावन्त आक्षेपा उत्पतन्ति ॥

## ॥ तत्रोत्तराणि ॥

"युष्मदस्मत्प्रत्यये"ति भाष्ये युष्मदिति बहुवचनं स्वरूपतस्तत्प्रत्ययविषयाणां भेदं सूचयति। अत्र च मते गोचरयोरित्येकवचनं जात्यभिप्रायम्। तथा च सर्वस्य प्रपञ्चस्याध्यासे आक्षेपसमाधानाभ्यां समर्थनीये कथमन्तःकरणमात्राध्याससमर्थनम्, कथञ्चान्तःकरणाध्यासमात्रं प्रस्तुत्य शरीरेन्द्रियमनोधर्माणां बाह्यधर्माणां चाध्यासोपसंहार इति शङ्काद्वयमपि परिहृतं भवति। श्रीनारायणसरस्वतीकृतवार्तिके तु युष्मदिति युषि हिंसायामिति धातुतो निष्पन्नमेकवचनान्तमेव विनश्यत्प्रपञ्चमात्राभिप्रायमिति वर्णितमिति युष्मदस्मदिति भाष्ये युष्मत्पदप्रयोगो नानुपपन्नः ॥

एतेनास्मत्पदमपि व्याख्यातम्। यद्यप्यस्मत्प्रत्ययविषय एक एव; तथापि औपाधिकं तद्भेदमादायैव तस्य कथञ्चन व्यपदेश्यता, नान्यथेति सूचनार्थमस्मदिति प्रयोगः। एकत्वं तु तस्य शुद्धस्य स्वरूपमात्राभिप्रायमिति न जात्येकवचनं तत्रांश इति विशेषः। अत्रापि अस्मदित्यसधातुतो निष्पन्नमेकवचनान्तं सन्मात्रपरमस्मत्पदमिति वार्तिके पूर्वोक्त एव व्यक्तम् ॥ १

(२) यद्यपि युष्मच्छब्द-श्रवणेऽपि श्रोताऽहमित्येव प्रत्येति; तथापि सोऽयमहम्प्रत्ययो विशिष्टं पराञ्चमेवात्मानं नियमेन गोचरयति, न प्रत्यगात्मानमिति न युष्मदस्मदिति भेदोपन्यासायोगः। अत्रेदमस्मत्प्रत्यय इति वर्णनापेक्षया युष्मदिति प्रयोगनिमित्तं तु श्रोत्रा युष्मच्छब्दजन्यप्रत्ययेनाहमिति विषयीकृतो जीवोऽप्यध्यस्त एव, इति बाधायामेवाहं ब्रह्मास्मीति सामानाधिकरण्यमिति पक्षमादायाप्यध्यासाक्षेप इति मन्तव्यम् ॥

(३) सद्रूपस्य चैतन्यमात्रस्य यद्यपि नास्मत्प्रत्ययविषयत्वमन्तःकरणादीनामिव मुख्यम्, यतोऽखण्डाकारवृत्तेरावरणाभिभावकत्वमात्रं स्वीक्रियते। तथाच युष्मदस्मदर्थसाधारणं विषयत्वं वृत्त्याकारत्वमात्रम्। साक्षिभास्यानामपि वृत्तिविषयत्वमपि वर्तत इति मतेन त्वध्यासाक्षेपो गोचरपदप्रयोगेण प्रवर्तते। इदमेवाभिप्रेत्य पञ्चदश्याम्—"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्। ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यत" इत्युक्तम्। तथा-च न वितथं गोचरपदम्, न वा विषयिण्यपि ब्रह्मणि गोचरपद-प्रयोगायोगः॥

विषयत्वं चात्र गोचरपदेन विवक्षितं नैकरूपम्, यतो युष्मत्प्रत्ययगोचरेषु फलव्याप्यत्वम्, अस्मत्प्रत्ययगोचरे तु वृत्तिव्याप्यत्वमात्रमिति सूचनार्थमेव विषयविषयिणोरिति पदान्तरम्। तत्र च मुख्यं विषयत्वं युष्मदर्थस्य, गौणं त्वस्मत्प्रत्ययगोचरस्येति न युष्मदर्थो विषयी, न वाऽस्मदर्थो विषयो भवितुमर्हति, न वाऽन्यतरेणैव गतार्थत्वम्। अथवा "युष्मदस्मत्प्रत्ययगोचर-योरि"ति साक्षिभास्यानां स्वरूपचैतन्यस्य वा वृत्तिभास्यत्वं स्वीकृत्य, "विषयविषयिणोरि"ति तु ब्रह्मणः स्वकाशस्यैवाधिष्ठानत्वमिति स्वीकृत्येति पदद्वयस्यापि सार्थक्यम्। अनेन च—"नचायमस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति" भाष्यमपि प्राप्तकालमिति सूच्यते। व्यक्तीकरिष्यते चैतदुपरिष्टात्॥

(४) विषयिणः स्वरूपाध्यासो न सिद्धान्तेऽपि सम्मतः, किन्तु विषयि-संसर्गमात्रस्येति परम्पराध्यासपदेनात्र विषयस्य विषयिणि विषयिसंसर्गस्य विषये चाध्यास एव विवक्ष्यत इति विद्यमानं भेदमादाय विषयविषयिणोरिति भेदनिर्देशः॥

(५) तमःप्रकाशयोरिदंरजतयोरिव कदाऽपीतरेतरभावायोग्यत्वेऽपि तमः-प्रकाशयोरिवेति दृष्टान्तोऽध्यासाक्षेपदृढीकरणार्थत्वान्न पूर्वपक्षस्यैवानुगुणः॥

(६) तमःस्वरूपं तु मलाभिभूतचक्षूरश्मिस्वरूपत्वमिति वार्तिक-सिद्धान्ते चक्षूरश्मिस्वरूपत्वेन मन्दान्धकारत्वाद् अनभिभूतचक्षूरश्मीनां

स्वल्पानामेव प्रकाशेन साकमवस्थानम्, नतु तमसोऽप्यभिभूतचक्षूरश्म्यंशस्येति मन्दान्धकारस्थलेऽपि तमःप्रकाशयोर्विरोधो न बाध्यते ॥

(११) पेचकादीनां चक्षूरश्मिगतं मलं सूर्यप्रकाशेनाभिभूयते, मार्जाराणां तु मलमेव चक्षुषि नास्तीति सर्वदाऽनभिभूतमलकत्वं वर्तत इति पेचकानां दिवाऽप्रकाशो मार्जाराणां सर्वदा प्रकाशश्च नानुपपन्नः। मीलितनयनानान्तु मलं सूर्यादितेजोऽसंनिकर्षादनभिभूतमेव, इति न मीलितनयनानामपि प्रकाशप्रसङ्गः। इयमत्र व्यवस्था, कुत्रचन सूर्यकिरणादीनां मलाभिभावकत्वम्, कुत्रचन नेति तमःप्रकाशयोर्विरोधो न व्याहतः। तत्र पेचकादीनां रात्रौ तमसो न प्रकाशसामानाधिकरण्यम्, अन्येषां मानवादीनां तु सौर्याद्यालोकानां प्रकाशासामानाधिकरण्यम्, मार्जारादीनां तु न तम एव प्रसिद्धमिति तमःप्रकाशयोर्विरोधकथा सर्वथोपपन्ना॥

(१२) तथाच व्यक्तिभेदेन तमःप्रकाशयोः स्वरूपभेदात्, अन्यदीयस्य तमसोऽन्यदीयप्रकाशभावः कथमपि नोपपद्यते, इति न कोऽपि विरोध-"स्तमःप्रकाशवदितरेतरभावानुपपत्तावि"ति भाष्ये ॥

(१३) विनाऽपि धर्मितादात्म्यं धर्ममात्राध्यासस्तु सोपाधिकाध्यासस्थल एव, अन्तःकरणधर्माद्यध्यासस्तु निरुपाधिक एवेति निरुपाधिकाध्यासवादापेक्षं "तद्धर्माणामपि सुतरामितरेतरभावानुपपत्ति"रिति भाष्यम्। अधिकमभिनवद्रविडाचार्यश्रीबालकृष्णानन्दसरस्वतीकृतौ शारीरकमीमांसाभाष्यवार्तिके व्यक्तम् ॥

(१४) इतरेतरभावानुपपत्तिरिति सामान्यतश्चेतनेऽचेतनाध्यासमाक्षिप्य, प्रथामाध्यासं विशिष्याक्षेप्तुम्—"इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणी"त्यादिभाष्यम्। इदं च नाचेतनसामान्यस्याक्षेपपरं भाष्यम्, इति न पुनरुक्तम्॥

(१५) तथाच नात्रोक्तस्यैव पुनरुल्लेख इति किम्प्रयोजनं पुनस्तदुल्लेखस्येति प्रश्न एव नावतरति ॥

(१६) यथाचास्मत्प्रत्ययगोचर इति चिदात्मक इति च न व्याहतम्, तथा तृतीयप्रश्नोत्तरावसर एव विशदीकृतम् ॥

(१७) अत्र विषयिणीत्यनेनैव निर्वाहे चिदात्मक इति पदान्तरं तु शुद्धमेव चैतन्यं लक्षणयाऽस्मत्प्रत्ययगोचरपदेन विवक्ष्यते, नतु वृत्त्युपहितमिति मतसूचनार्थम्, येनास्मत्प्रत्ययगोचरत्वमध्यासदशामभिप्रेत्यैव, नाध्यासात् पूर्वतनावस्थामाश्रित्य। तथा चाहमध्यासेऽधिष्ठानं न कारणमिति मतस्यापि सङ्ग्रहः फलति। तथा चाधिष्ठानज्ञातमध्यासस्य कारणमिति पक्ष इव तदकारणमिति पक्षेऽपि नाध्यासः सिद्ध्यतीति सूचनं चिदात्मक इति पदान्तरस्य प्रयोजनम् ॥

(१८) अध्यासो मिथ्येत्यत्र मिथ्यात्वमध्यासस्यापह्नवरूपमेव विवक्ष्यते, नानिर्वचनीयत्वपरम्। तथाचोक्तैः कारणैरध्यासाक्षेपो न विरुद्धः। वस्तुतस्तु अध्यासो मिथ्येत्यत्र मिथ्यात्वस्य मिथ्यात्वपरत्वेऽपि मिथ्यात्वस्यापि मिथ्यात्वमेव विवक्ष्येतेति मिथ्यात्वमिथ्यात्वे प्रपञ्चसत्यत्वापत्त्याऽध्यासाक्षेपपर्यवसानं न विरुद्धम्। तथाचोक्तैः कारणैरध्यासस्याक्षेपोऽपि प्रपञ्चाध्यासाक्षेप एव पर्यवस्यतीति न दोषः ॥

(१९) तमःप्रकाशवद्विरुद्धस्वभावयोरित्यनेन वैलक्षण्यमात्रमध्यासाक्षेपे सादृश्यज्ञानरूपाध्यासकारणाभावप्रतिपादनार्थं विवक्षितम्। इदं च वैलक्षण्यं न शुक्तिरूप्यादिस्थले दृष्टम्; तयोर्विरुद्धस्वभावत्वाभावात्। चैतन्यान्तःकरणयोस्तु चिदात्मकत्व-जडत्वाभ्यां वैलक्षण्यसूचनार्थमेव चिदात्मक इति चैतन्ये विषयस्येति पदद्वयम्। अन्यथाऽध्याससामान्याक्षेपावसर इव "विषयिणि" "युष्मत्प्रत्ययगोचरस्ये"तिपदाभ्यामेव निर्वाहे विशेषाध्यासाक्षेपावसरे ततोऽप्यधिकं चिदात्मक इति विषयस्येति च वितथं स्यादिति न कोऽपि दोषः। अनेन सप्तदशप्रश्नोऽपि व्याख्यातः। तथाच नात्र प्रतिज्ञामात्रता, किन्तु सयुक्तेरेवाध्यासस्याक्षेपः ॥

(२०) इति भवितुं युक्तमित्यत्रोत्तरत्र तथापीत्यभिसम्बन्धात् यद्यपीति पूरणं कर्तव्यम्। सति चैवमर्धाङ्गीकार उक्तस्याक्षेपस्य। तत्र चाधिष्ठानारोप्ययोर्विवेकः पूर्वपक्ष्यभिमतः सिद्धान्तिनाऽप्यनुमन्यते। अत एव तथापीत्यादिसिद्धान्तभाष्ये "ऽत्यन्तविविक्तयोरि"ति भाष्यम्। एवं चैतन्यान्तःकरणयोर्वैल-

क्षण्यमपि पूर्वपक्ष्यभिमतं सिद्धान्तिनाऽनुमन्यते। इदं च "अत्यन्तविविक्तयो" रित्यत्रात्यन्तपदेन सूच्यते। एतेन—अध्यासमिथ्यात्वमपि—व्याख्यातम्; मिथ्यात्वमिथ्यात्वस्यापि सिद्धान्त्यभिमतत्वात्। अतो बहुष्वंशेषु युक्तियुक्तत्वमध्यासाक्षेपस्यापि वर्तत एव॥

(२१) सत्त्वेन प्रतीतिविषयत्वं तु चैतन्यान्तःकरणयोर्यदि सत्तात्रैविध्यवादेन, तर्हि तत्तत्सत्त्वभेदाद् न सालक्षण्यम्। एकसत्तावादे तु सत्त्वेन प्रतीतिर्नान्तःकरणादेरिति न सत्त्वेन प्रतीतिविषयत्वेनापि सालक्षण्यम्, इति विरुद्धस्वभावत्वमव्याहतमेव॥

(२२) तद्विपर्ययेण विषयिणो विषये यद्यपि स्वरूपतो नाध्यासः सिद्धान्तेऽपि मन्यते। तथापि तत्तादात्म्याध्यासमात्रं विषये स्वीक्रियते। तत्र च संनिकृष्टे विषयेऽन्यथाख्यातिवादस्यैव सिद्धान्तेऽपि स्वीकारात् संसर्गाध्यासमात्रेऽपि विषयिणो विषयेऽध्यास इति व्यपदेशो नानुपपन्नः। तथाच संनिकृष्टे विषयेऽन्यथाख्यातिरेवेति सिद्धान्तसूचनमेव विषयिण इत्युल्लेखस्य प्रयोजनम्। तेन च स्वरूपव्याक्रियैव पराक्रियेति न्यायेनानिर्वचनीयख्यातिमात्रेण निर्वाहो नाद्वैतिनामपि सम्मत इत्युभयाभ्युपगतान्यथाख्यातिवादेनैव सत्ख्यातिवादेनैव वा भ्रमनिर्वाह इति पूर्वपक्षनिष्कर्षः फलति॥

(२३) प्रथमप्रश्नोत्तरावसर एवेदं विवेचितम्—यत् अचेतन-चेतनयोरेव परस्पराध्यासस्याक्षेपसमाधानाभ्यां व्यवस्थापनम्, न त्वन्तःकरणचैतन्ययोरेव परस्पराध्यासस्येति। तथाचे"त्यतोऽस्मत्प्रत्ययगोचर" इत्यस्य भाष्यस्य लक्ष्यविशेषसमन्वयार्थत्व एव तात्पर्याद् न कोऽपि विरोधः॥

(२४) तथाच सर्वप्रपञ्चाध्यासस्य समर्थन एवाध्यासभाष्यतात्पर्यात् "जन्माद्यस्य यतः" इति सकलजगत्कारणत्वेन ब्रह्मलक्षणं न विरुद्धमित्यध्यासाक्षेपभाष्यप्रश्नोत्तराणि॥

( क्रमशः )

# कः पन्थाः

[ निबन्धकः—श्रीरजनीकान्त-दासः ]

( पूर्वानुवृत्तिः )

खृष्टीय ऋषिः—सन्न्यासमाहात्म्यभाग् हि वेदान्तधर्म इति मे श्रुतम्। एवं सति कथं तद्धर्मो निखिलसंसारिणामुपकारी भवितुमर्हति, वर्तमान-लोकभङ्गसङ्कटे च भेषजरूपेण सेवनीयो भवेत्?

वैदान्तिक ऋषिः—सुष्ठ्वेवोक्तमेतत्। कर्माणि ज्ञानविरोधीनीति न मन्यतेऽस्माभिर्नववैदान्तिकैः। परन्तु, ब्रह्मणैव विहितानि सर्वाणि लोकस्थितिकर्माणीति मन्यमानैर्निष्कामं तानि सम्पादयद्भिः सत्वरं चित्तशुद्धिर्लभ्येत, अकृतेषु च तेषु प्रत्यवायोऽस्तीत्यस्माकं मतम्। संन्यासपक्षपाती हि वैदान्तिको धर्मः पुरासीदित्यवश्यं स्वीकर्त्तव्यम्। वर्णाश्रमस्तत्प्रसूतो जातिभेदश्च प्राग् गार्हस्थ्याश्रमिणो ब्रह्मात्मभावसाधने परिपन्थी बभूव। भारतीयार्यसमाजस्य प्रागवस्थायां लोकभङ्गसम्भावनायां बलवत्यां सत्यां गुणकर्मविभागानुरूपा वर्णाश्रमव्यवस्था हितकारिण्येवासीदिति खलु विचारसहं भवेत्। पश्चात् समाजबन्धने सुदृढं जातेऽपि स वर्णाश्रमो गतानुगतिकतावेगवशादवश्यपालनीय-लोकधर्मरूपेण प्राचलत्। वहमाना लोकस्थितिरपि कैश्चिद्बहिरागतैः कारणजातैरबाधिता सती समाजपतीनामपि संस्कारविधौ न कमप्याग्रहं समजनयत्। कालेन तस्माद्वर्णाश्रमप्रतिष्ठानाज्जातिभेदरूपो निघृंणः कालव्याधिरुपजज्ञे, समाजदेहञ्च समाक्रान्तवान्। उपनिषद्ब्रह्मज्ञानरवेरुदये जातिभेदो देवपूजञ्च प्रत्येकं ब्रह्मज्ञानेन सहाहिनकुलवत् सम्बन्धितमिति विस्पष्टं बभूव। पक्षान्तरे ब्रह्मात्मतत्त्वानुगामिन ऋषयः प्रायेण समाजसंस्कारविषय उदासीनाः सन्तो बाहुल्येनारण्याश्रमिणो जाताः। ब्रह्मज्ञान-साधनानुकूले तदाश्रमे जातिभेददेवोपासने न प्रसारं लेभाते; फलतः कालधर्मेण ब्रह्मविद्यैव वनवासं गता। ब्रह्मज्ञानार्थी संन्यासाश्रममवलम्ब्य

वनं व्रजेदिति यल्लोकविचारः श्रूयते तस्यैवमेवैतिह्यं मन्ये। कर्मसंन्यासं विना ब्रह्मज्ञानं न स्फुरतीत्येवमपि केचित्तु श्रीमच्छङ्कराद्यः प्राचीन-वैदान्तिका निश्चितवन्तः। अस्माकन्तु नव-वैदान्तिकानां नात्र समादरः। किं तद्धर्म-विधानकं नाम यस्य श्रेष्ठावदानाद्वञ्चिताः सन्तोऽगणितसंसारिणश्चेदन्धायमाना दुःखायमानाश्चावतिष्ठेरन्? अतो वयं नववैदान्तिका ब्रूमः, इहैव गार्हस्थ्याश्रमे ब्रह्मज्ञानं साधनीयमिति।

महम्मदीय ऋषिः—कथमयमन्योन्यविरोधिसन्निवेशः प्रसज्येत, ब्रह्मज्ञानसाधनञ्च तद्विरोधि देवोपासनं जातिभेदश्चेति? कथञ्चेमौ देवोपासन-जातिभेदौ भवादृशेषु ब्रह्मज्ञानिषु सत्स्वपि भारतकृष्टिगौरवं चिराद्याच्छाद्य वर्त्तेते इत्यपि विचिन्त्यम्। अपि च, ब्रह्मात्मविज्ञानसाधनं यदि मानवानां सर्वविधकल्याणकरं स्यात्तदा भारतसमाजे ब्रह्मज्ञानसाहचर्य्येणैवैतयोरनुवर्त्तित्वं दुर्बोधमिति मन्ये।

वैदान्तिक ऋषिः—दुष्करेयं लोकशिक्षा, न च झटिति सा साध्येत। सहस्रं वत्सरान् व्याप्य ये संस्कारा मानवेषु प्रोथितमूलास्ते शनैः शनैरेव ब्रह्मात्मभावसाधनप्रभावेण पर्युत्क्षिप्येरन्। न चात्र भारतीया ब्रह्मज्ञानिनः सर्वथोदासीना आसन्। "पशुरेव स देवानामि"ति देवोपासकं प्रति हेयत्वोक्तिः प्राचीनबृहदारण्यकोपनिषदि द्रष्टव्या। "सर्वे देवास्तं बलिमाहरन्ती"ति ब्रह्मोपासकः सर्वदेवेभ्यो गरीयांस्तैः स पूजयितव्य एवेत्येवंरूपमपि कश्चिदृषि-रमन्यत। "ब्रह्मचक्रे महेशानि जातिभेदं विवर्जयेदि"ति तन्त्रोक्त आदेशोऽपि जातिभेदस्य पराभवोऽयञ्च कथमपि सहनीय इति चासूचयत्। एवम्प्रकाराणि बहूनि वचनानि संस्कारद्वयस्योन्मूलनार्थं प्रचेष्टितं प्रदर्शयन्ति। नव-वैदान्तिकाश्चात्र नितरां तत्पराः।

खृष्टीय ऋषिः—बाढम्। निष्क्रियं निरवद्यं सर्वथा निर्विशेषं नेतिनेति-मात्रलक्षणं वैदान्तिकानां ब्रह्मेति श्रूयते। कथं तर्हि साधकैस्तदुपास्येत, श्रवण-मनन-निदिध्यासनादि-साधन-प्रकरणैश्च विज्ञानविषयीभूतत्वमीयेत। पक्षान्तरे मुक्तस्य यदि ब्रह्मलय एव परिणतिः स्यात्, तर्हि को नामाऽऽग्रहो

भवितुमर्हति साधकानां जगतो दुःखनिराकरणादिव्यापारेषु ? असदिव सर्वमिदं जातम् । न कस्याप्यसति समादरो युक्तश्चेति मे संशयस्थानम् ।

वैदान्तिक ऋषिः—उपनिषत्सु ब्रह्म यथा निर्विशेषं नेति-नेति-पदमात्र-लक्षितमित्युक्तं, तथा "महेश्वरो, धर्मावहः, पापनुदः, सर्वज्ञः, सर्वाभः, सर्वरसो, विश्वकर्मा महात्मा सदा जनानां हृदये सन्निविष्ट" इत्यादिभिर्मन्त्रैस्तस्य सगुणत्वं सविशेषत्वञ्च प्रदर्शितम् । द्वे एव चिन्ताधारे उपनिषत्सु द्रष्टव्ये ब्रह्म निर्विशेषं सविशेषञ्चेति । ब्रह्मर्षियाज्ञवल्क्येन प्रधानतः प्रथमोपदिष्टा, प्रजापतीन्द्रचित्रादि-देवर्षिराजर्षिभिश्च द्वितीया प्रोक्ता । एवं सति वैदान्तिकानां ब्रह्म केवलं निर्विशेषं निरुपाधिकमिति वक्तुं न शक्यम् । भगवता शङ्कराचार्येण ब्रह्मणो निर्विशेषत्वमेव समाद्रियते । अन्ये तु ब्रह्मसूत्रभाष्यकारास्तस्य सविशेषत्वं व्याख्यातवन्तः । अस्माभिरपि नववेदान्तिकैर्विशिष्टाद्वैतवाद एव समाद्रियते । अतो ब्रह्मण उपासनयोग्यत्वं न व्याहन्यते । मुक्ताः परब्रह्मणि लीयन्त इत्यपि कैश्चिदेव वैदान्तिकैऋषिभिर्भाष्यकारेण शङ्कराचार्येण च प्रोक्तं समर्थितं वा, न तु समस्तैः । अपि चात्यन्तिकमोक्षे विज्ञातुः पृथग्ज्ञानमुद्वर्तिष्यते वा नेति विचारोऽपि सर्वथा निष्फलो न प्रमाणयोग्यश्च, ब्रह्मणि लयप्राप्तस्य विज्ञातुर्दर्शनाभावात् । अतस्ते प्रतिपक्षद्वयमकिञ्चित्करमेव जातम् । यद्यपि विश्वरूपेण विश्वात्मरूपेण च ब्रह्म विज्ञेयं तथापि प्रकाशद्वयेनानेन तन्न समाप्तिं गतं तस्य अनन्तत्वात् । अतो ब्रह्मणः किमपि निर्विशेषं नेति-नेतिपदवाच्यं विश्वातिग-रूपञ्च प्रसज्येत । उक्तञ्च श्रीमद्भागवते :—

"वदन्ति तत् तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" ॥

इति । वयञ्च ब्रूम इत्येव तत्त्वसारो विज्ञायते । श्रुत्युपलब्ध्यनुयायिनी युक्तिरेव हितकारिणी न तद्व्यवहिता । जीवपरमयोरात्यन्तिकाभेदो जीवानां ब्रह्मलयरूप-मोक्षश्च श्रुत्युपलब्धिभ्यां न प्रतिपद्येते । नापि तत्त्वमसि सर्वं खल्विदं ब्रह्मेत्यादिभिः श्रुतिवाक्यैर्जीवपरमयोर्जगद्ब्रह्मणोश्चात्यन्तिक-

भेदो दृश्यते नापि जीवानां मोक्षे ब्रह्मलयः समर्थ्यते। कौषीतक्युपनिषदि मुक्तात्मनो मुखे यदृषिणा "यस्त्वमसि सोऽहमस्मी"ति वाक्यं प्रदत्तं तेनापि मुक्तस्यात्यन्तिकब्रह्मलयो न प्रतिपद्यतेऽहमिति प्रवक्तुर्दर्शनात्। उपलब्धितोऽपि मुक्तस्य जीवस्य ब्रह्मलयो न प्रमाणयोग्य इति च वितर्कितं मया। वस्तुतस्तु जीवपरमयोर्भेदाभेदावेव युक्तिश्रुत्यनुभूतिभिः प्रसज्येते न त्वात्यन्तिकोऽभेदो भेदो वा। प्रकाशस्तदाश्रयवदेव तौ प्रतिपत्तव्यौ।

ब्रह्मकृपया सर्वे मानवा इमं ब्रह्मात्मभावमस्य माहात्म्यमौदार्यं महामेलनतीर्थत्वञ्च कदा भोतृष्यन्तीति न आग्रहातिशयः। मानवेषु मानवेषु भगवता यीशुना परिकल्पितो भ्रातृभावो भगवता महम्मदेन परिकल्पितो धर्मैकज्ञानसाध्य एकत्वबोधः, भगवता तथागतेन प्रोक्तो नीतिमूलकोऽष्टाङ्गमार्ग इत्यादयः सर्वधर्मविधानसारसमुच्चयग्रहणाद् ये ये निष्कर्षा निर्गलिता भवेयुस्ते सर्वे एकस्मिन ब्रह्मात्मभावसाधने स्वभावतोऽनुस्यूता इति पश्यामः। नूनमस्य महायुद्धस्यावसाने काचिन्नवतरा लोकस्थितिपरिकल्पनाविर्भविष्यति, तां व्यवस्थामेतद्ब्रह्मात्मभावसाधनसहां कर्तुं सर्वे व्यवस्थापकाः सर्वे धर्माधिकारिणः सर्वे समाजपतयः सर्वे लोकहितैषिणोऽर्हन्त्विति मे वाक्यशेषः। अत्रभवतां सर्वेषां शुभाशिषं सहयोगित्वञ्च प्रार्थये। नमो युष्मभ्यम्।

---

# रसिकभूषणम्

[महामहोपाध्याय-वेदान्तकेसरि-पञ्चनाड्-गणपतिशास्त्रि-प्रणीतम्]

वाञ्छितार्थवदान्यं तद्वन्दे किमपि दैवतम्।
न पुमान्न वधूर्नापि क्लीबो यत्तु विराजते ॥१॥
विमलाब्जसमुल्लासि विद्यापूरैकवर्षुकम्।
शान्तं समाश्रये कञ्चिच्छारदाम्बुदमादरात् ॥२॥

वितरन् कविताकन्यां सरसां साध्वलङ्कृताम् ।
विभाति वेङ्कटगुरुर्विश्रुतो मम कूकुदः ॥३॥
यदुपज्ञमभूल्लोके कवितामृतसेवनम् ।
कलये प्रणतिं तस्मै कवये नाकुजन्मने ॥४॥
कवितानवपीयूषं रसयन् यस्य भावुकः ।
जातु याति न तृप्तिं तं कालिदासं कथं स्तुमः ? ॥५॥
वाणी सा भट्टबाणस्य वर्तिषीष्ट सुखाद्भु वि ।
ब्रह्मानन्द इवापैति यत्र मग्नं मनो न हि ॥६॥
काव्यामृतरसं कान्तमुद्गिरन्तो मुखेन्दुभिः ।
शब्दप्रपञ्चब्रह्माणः शतशः सन्त्वपीतरे ॥७॥
रसिकैः सुमनोवृन्दैः संभृतं रसवत्तरम् ।
अनुच्छिष्टमनाश्यन्तदद्भु तं कवितामधु ॥८॥
अर्थेषु ब्रह्मणो नान्यद्यथाऽऽनन्दैकनिर्भरम् ।
तथा काव्यामृतादन्यन्नास्ति शब्देषु किञ्चन ॥९॥
अक्लिष्टपरमानन्दं कवित्वस्याथवात्मनः ।
यथेच्छमापिबन्तो हि नितान्तं भाग्यशालिनः ॥१०॥
अखण्डेनाधिपत्येन किं देवेन्द्रपदेन वा ।
काव्यामृतविदां सर्वं तुच्छं ब्रह्मविदामिव ॥११॥
परिणम्रधियामेव स्वदते कवितारसः ।
न शिशुर्वरवर्णिन्या नर्मालापरसोचितः ॥१२॥
पाथः केचित् पयः केचित् फाणितञ्च परे जनाः ।
सुधावत्कवित्वामेकां सुकृती कोऽपि चूषति ॥१३॥
इदमत्युत्तमं काव्यं यस्य श्रवणमात्रतः ।
विलीयत इव स्वान्तं विगतेतरवेद्यकम् ॥१४॥
वरमेकोऽपि सरसः शब्दो नान्ये सहस्रशः ।
क्षाराम्बुधिशतैः किं वा बिन्दुमात्रमलं सुधा ॥१५॥

न सर्वाः कविताः किन्तु काश्चिदेवामृतोपमाः ।
न हि स्त्रीव्यक्तयः सर्वा रोचन्ते नर्मकर्मणे ॥१६॥
कवितायाः विलासस्तु दिष्ट्या क्वापि प्रकाशते ।
न हि प्रयत्ननियुतैः शर्करा रत्नतां व्रजेत् ॥१७॥
कवितारससारस्यं कश्चिदेवावगच्छति ।
किं जानन्ति जनाः सर्वे रत्नारत्नविवेचनम् ॥१८॥
रसमात्रमुपादत्ते काव्ये सहृदयो जनः ।
विविधेष्वपि पुष्पेषु मरन्दमिव षट्पदः ॥१९॥
यत्किञ्चिदेव काव्येषु यथाजातोऽवगच्छति ।
अन्धो हस्तगतञ्चापि न जानाति मणिं मणिम् ॥२०॥
आपिबन्नाविलं किञ्चिदन्तर्बिलमवस्थितः ।
धन्यंमन्यो ह्यरसिकः सदा गर्जति भेकवत् ॥२१॥
नृपत्वमपि देवत्वं ब्रह्मत्वञ्चाप्यदुर्लभम् ।
रसिकत्वन्तु केनापि साधनेन न लभ्यते ॥२२॥
असंख्याता नृपा आसन्नल्पे चापि ततोऽधिकाः ।
भोजस्येव यशः कस्य भूमिपालस्य विद्यते ॥२३॥
कति जाताः कति मृताः कतमं वेत्ति को नु वा ।
कवयस्त्वद्य पश्चादप्याभान्त्यग्रे स्थिता इव ॥२४॥
कविताऽत्यद्भुता सा या कल्पान्तेऽपि च खेलति ।
अजरामरणं भर्तुराश्रयन्ती यशोवपुः ॥२५॥
चर्वन्ति चर्वितान्येव सर्वेऽपि सततं जनाः ।
कविरेकस्तु सततं भुङ्क्ते नवनवं रसम् ॥२६॥
अक्षय्यमखिलैः स्वाद्यमद्भुतं कवितामृतम् ।
कर्णेषु किरतां भाग्यं कवीनामद्भुतं हि तत् ॥२७॥
अकवित्वमतिश्लाघ्यं न हीना कविता नृणाम् ।
वन्ध्यात्वमुत्तमं लोके विकलो न तु पुत्रकः ॥२८॥

रसहीना कृतिर्नैव सालङ्काराऽपि शोभते ।
शवः किं भूष्यते लोके भूरिभिर्भूषणैरपि ॥२९॥
स्पृहणीया रसवती मिताऽपि कविता वरम् ।
नन्दन्ति मन्दमरुतं न तु चण्डानिलं जनाः ॥३०॥
सद्वृत्तिहीनकाव्येषु नालङ्कारो गुणायते ।
निर्लज्जानां कुलस्त्रीणां निस्तुलं भूषणं यथा ॥३१॥
ज्ञानकाव्यरुचिर्धीमान्नान्यत्र रमते क्वचित् ।
पीतामृतो न हि पुमान् पिण्याकं भोक्तुमिच्छति ॥३२॥
सरसः कविसंलापः सदसो भूषणायते ।
भूष्यते कोकिलैः किं वा फेरुभिः प्रमदावनम् ॥३३॥
मञ्जुकाव्यामृतालापमध्ये रटति तार्किकः ।
अन्तःपरिणयं यूनोरपमृत्युरिवोत्थितः ॥३४॥
अश्राव्यैः कटुनिर्घोषैर्हन्ति मूर्खस्तु तार्किकः ।
कमनीयाञ्च कल्हारस्रजं किं कुरुते कपिः ? ॥३५॥
बिभेति कविता कामं तार्किकाह्वयमात्रतः ।
अत्यन्तसुकुमाराङ्गी बालिकेव पिशाचतः ॥३६॥
पठन्तो नीरसाञ्छब्दान् गर्जन्ति कटु तार्किकाः ।
उच्छिष्टपत्रसंभ्रान्ता निश्शङ्कं शुनका इव ॥३७॥
पठेयुः परिजल्पेयुः कुर्युः कोलाहलं च ते ।
न विदन्ति रसं क्लीबाः परीरम्भसुखं यथा ॥३८॥
गृणन्ति नीरसाञ्छब्दानानन्दादेव तार्किकाः ।
दशन्ति शवमानन्दात् काककङ्कादयो यथा ॥३९॥
योग्याः सरसगोष्ठ्या नो शास्त्रज्ञा अपि तार्किकाः ।
स्थाप्यो न हि घटः शिक्ये गोमयैरपि पूरितः ॥४०॥
दुष्टतार्किकशेमुष्यो दोषायन्ते गुणा अपि ।
न हि कामलनेत्रस्य कम्बुः क्वापि सितायते ॥४१॥

दृढः परिचयस्तर्के रासिक्यस्य महान् रिपुः ।
न ह्यधर्मैकनिरतैर्नाकभोगोऽनुभूयते ॥४२॥
न कालो न सभापेक्षा न लज्जा नापि गौरवम् ।
भषन्त्येकपदे रौद्रं तार्किका रासभोपमाः ॥४३॥
तार्किकोल्लेखनं काव्ये हासाय रसिकस्य हि ।
रम्भाया मदविभ्रान्तपिशाचीनर्तनं यथा ॥४४॥
कवितास्वादकालेऽपि तत्किमेतत्किमित्यहो ।
क्रुष्यन्ते तार्किका हन्त श्वानः सुरतभोगवत् ॥४५॥
रसे निष्यन्दमानेऽपि तेषां दोषे परं रुचिः ।
पीयूषेऽपि स्थिते पङ्कं मण्डूको न जहाति हि ॥४६॥
नूनं प्रायेण रासिक्यं तार्किकत्वे न जायते ।
यदि तत् क्वचिदेव स्यान्नरत्वे केसरित्ववत् ॥४७॥
नीरसादपि चाक्रन्दान्न निवर्तेत तार्किकः ।
खादन्नपि च कङ्कालं भषको न निवर्तते ॥४८॥
अविच्छिन्नोऽपि शब्दौघस्तार्किकस्य न मोदकृत् ।
करटानां वाशितानि कर्णखेदाय केवलम् ॥४९॥
रसिकान्निस्सृता वाणी मोदयेन्न तु तार्किकान् ।
न हि स्वदेत कस्मैचित् पायुतो निर्गतो मरुत् ॥५०॥
कः शृणोति विधत्ते कः कः प्रीतिं प्रार्थयत्यहो ।
किमर्थं गर्जति क्रूरं तार्किकः शारदाभ्रवत् ॥५१॥
तार्किकाणां कलकलस्तद्गोष्ठीमात्रमोदकः ।
प्रीणाति कः प्रावृषेण्यभेकोबकबकायितैः ॥५२॥
कवितारससानन्दं रसिकः सर्व एव हि ।
नवमाध्वीकनिःष्यन्दो न को वा रसिकः पिबेत् ? ॥५३॥
कमनीया भवेद्वाणी कवावेव न तार्किके ।
पीवान एव करटाः पिकादपि ततः किमु ? ॥५४॥

अजस्रतर्कपाठैकदृढीभूता हि तन्मतिः ।
न गृह्णाति रसं नूनं न कुड्ये दृश्यते मुखम् ॥५५॥
अत्यन्तसुकुमारस्य कवित्वस्य स्वतो द्विषः ।
देहस्येव व्याधिसंघाः किमर्थं तार्किकाः कृताः ? ॥५६॥
सहकारे यथा वज्रं सैरिभः सारसाकरे ।
तथा रसिकहृद्यायां कवितायान्तु तार्किकाः ॥५७॥
तार्किको नैव कवितामास्वादयितुमर्हति ।
न हि रम्भाधररसं महिषः पातुमर्हति ॥५८॥
कठोरं व्याहरन्तोऽपि कथनीयगिरं कविम् ।
बकोटा इव कादम्बं बत निन्दन्ति तार्किकाः ॥५९॥
गर्ह्यते तार्किकैर्गोष्ठ्यां कवेर्वाण्यतिसाध्व्यपि ।
धार्तराष्ट्रैर्महापापैर्द्रौपदीव पतिव्रता ॥६०॥
अत्यन्तसुकुमाराङ्गीमीदृशीं कवितां सृजन् ।
असृजः किं हतविधे घातुकांस्तार्किकानपि ॥६१॥
क्रूरतार्किकगोष्ठ्यन्तः प्रविष्टो वेपतेतराम् ।
वृकसङ्घातसंवीतमृगशावोपमः कविः ॥६२॥
वरं कवेरात्महत्या जिह्वामुन्मूल्य तत्क्षणात् ।
न तु तार्किकदुर्गोष्ठीनरकान्तः प्रवेशनम् ॥६३॥
सुकुमाराङ्गिरं पापैर्वध्यमानां कुतार्किकैः ।
इमामनाथामज किं पश्यन्नपि न शोचसि ॥६४॥
त्वचो दुरालम्भा (?) मृत्युर्नेत्रयोस्तु मलादिकम् ।
रसनायाश्च तिक्तत्वं कर्णयोस्तार्किकध्वनिः ॥६५॥
परिहासां स्तुतिं पश्यन् परेषां द्विष्टमप्यहो ।
अन्धं कटुतरं पाठमात्रे डयति तार्किकः ॥६६॥

(क्रमशः)

# महाकवि-कालिदासविषये यत् किञ्चित्

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीदुर्गादास-गोस्वामी काव्य-व्याकरणतीर्थः, वि. ए. ]

यच्च श्रीकण्ठपदलाञ्छनेन भवभूतिना प्रोक्तम् ,

"यत् प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्य-वैदग्ध्ययोः ।"

तदस्मिन् महाकवौ सर्व एवैते गुणाः सर्वथा निवसन्तीति विज्ञापयामः ।

रुचिर्भाव-प्रवणता च लोकानां स्वाभाविकी, देशकालपुरुषप्रभावानुसारिणी च । तत्राऽऽद्ययुगे कवीनां रचनासु यादृशी प्राञ्जलता, मधुरता, रसभावाद्यनुगुणता च दृश्यन्ते न तादृशी कवीनामधस्तनानां रचनासु । कालिदासात् प्राचीनेषु वाल्मीकि-व्यासाश्वघोष-भासप्रभृतिषु कविषु रसभावादिनिमग्नता सुतरां लक्ष्यते, कालिदासोत्तरवर्तिषु कविषु पुनर्गुणीभूतत्वं, ततोऽप्यर्वाचीनेषु अर्थचित्रादिबाहुल्यं, ततोऽप्यधस्तनेषु यमकादिप्रियत्वं सुकरमनुसन्धातुम् ।

तदुच्यते—

"कृते युगे व्यञ्जनयाऽवतीर्णो युगे द्वितीये स गुणीबभूव ।
युगे तृतीये पुनरर्थचित्रं युगे चतुर्थे यमकप्रपञ्चः ॥"

सन्दृश्यते च काव्यविशेषज्ञैर्यत् कालिदासोत्तरवर्तिनि भट्टौ यमकभाषासमाद्यलङ्काराणां व्याकरणोक्तपदानाञ्च बहुशः प्रयोगः कृतः, दण्डिनि यमकानामनुप्रासानाञ्च प्रपञ्चः प्रदर्शितः, भारवौ हलखड्गमुरजबन्धादयः कृत्रिमताः सुलभाः, सुबन्धु-वाणभट्ट-कविराजादिषु श्लेषदीर्घजटिलवाक्यानां भूरिप्रयोगा दृश्यन्ते । भवभूतौ पुनर्दीर्घसमासादयः, माघे भारवेरक्षमाऽनुकृतिः श्लेषबन्धे कृत्रिमतादयश्च, नैषधे चौचित्यबोधविरहः, इत्येवमादीनि बहूनि

"उद्गलितदर्भकवला मृगी परित्यक्तनर्तना मयूरी ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ।।"
"अदर्शयन वक्तुमशक्नुवत्यः शाखाभिरावर्जितपल्लवाभिः ।

निराभरणायै शकुन्तलायै वनस्पतिभिरपि मण्डनान्युपाह्रियन्ते-

"क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित् ॥"

सर्वत्र प्रकृत्या सह कालिदासस्य निविडं परिचयं, सरसं प्रेमसम्पर्कञ्च सम्यगविजानतः कालिदासकाव्यचर्चा तावदसम्पूर्णैवेति ब्रूमः । वस्तुतस्तु, कालिदासस्य काव्येषु प्रकृतिरपि विशिष्टां पात्रीभूमिकां गृह्णाति, अतः खलु सा काव्यानामपरिहार्यमङ्गम् । तेषु मूका जडा च प्रकृतिः, किन्तु मुखरा, सचेतना, कर्ममयी च । सापि काव्यानां परिपुष्टिपरिणामादि-विषये प्रभूतं प्रयोजनं साधयन्ती चेतनावतां साकमेकीभूता सञ्जाता ।

तदनु कालिदासेन प्रयुक्तानामुपमानां माधुर्यवैशिष्ट्यादिकं लक्ष्यणीयम् । स्वतन्त्रे प्रबन्धेऽपि न सर्वथैतद्विषयसमालोचनं सम्भवति, तत् समासतः किञ्चिदालोचयिष्यते । उपमादानविषये कवयः प्रायेण गतानुगतिकाः संलक्ष्यन्ते । तत्र तेषामभिनवत्वं प्रतिभोत्थं चमत्कारावहत्वं वा नोपा-दीयते । नैष व्यापारः कविचूडामणिना कालिदासेन प्रदत्तासूपमासु दृश्यते । सर्वैरेव कविभिः कामिनीनां मुखं पद्मेन चन्द्रेण वा सार्धमुपमीयते । न तत्र किञ्चिद्वैचित्र्यं प्रतिभाप्रत्यायकत्वं वा किञ्चित् पश्यामः । महाकविना कालिदासेन प्रदत्ताः पञ्चषा एवोपमाः पश्यन्तु भवन्तः । ताभ्य एव निःसंशयमस्माकं महाकवेरनन्यसाधारणत्वं स्फुटीभविष्यति । तत्र तावदवि-नश्वरे गीतिकाव्ये मेघदूते "त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति" "कुन्दक्षेपानुगमधुरश्रीमुषामात्म-बिम्बं पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम्" इत्येतयोरुपमयोः चक्षुषो-श्चलने कीदृशी विभिन्ना भङ्गी, कीदृग् निपुणं प्रकृतिनिरीक्षणञ्च ! यथा वा "चक्षुः खेदात् सलिलगुरुभिः पक्ष्मभिश्छादयन्तीं साभ्रेऽह्नीव स्थलकमलिनीं

न प्रबुद्धां न सुप्ताम्। इत्यनया अश्रुभारादर्धनिमीलितलोचनायास्तथा गुरुवेदनाविक्लवतया यक्षकान्तायास्तावदतिकरुणं चित्रमङ्कितम्। अन्यत्र च "प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः" इत्यनया यक्षप्रियाया विरहवशात् सुतरां कार्श्यमाविष्कृतम्। यथा च रघुवंशे "अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे," इत्यनया कर्तव्यवशंवदतया कठोरहृदयस्यापि रामस्य सहसा सीताऽकौलीनश्रवणाद् निगूढमर्मशल्यघट्टनरूपो दशाविपर्यासः सुष्ठु कविना वर्णितः, यथा वा तत्रैव "बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः" इत्यनया प्रकृतिरञ्जकस्य धीरोदात्तचरितस्यापि रामस्य अन्तर्गूढवेदना कथञ्चिदुन्नेतव्या। अथवा तस्मिन्नेव महाकाव्ये गङ्गायमुनासङ्गमवर्णनावसरे "क्वचित् प्रभालेपिभिरिन्द्रनीलै"रित्यनया मालोपमया शुभ्रसलिलाया गङ्गायाः कृष्णसलिलाया यमुनायाश्च सङ्गमस्थलस्यापूर्वं मनोहरं सौन्दर्यं परमेण नैपुण्येन वर्णितम्। यथा वा कुमारसम्भवे "तां हंसमालाः शरदीव गङ्गा"मित्यनया मालोपमया च पार्वत्याः सहजातो विद्यालाभः प्रदर्शितः। यथा वा पार्वत्याः सन्दर्शनेन क्षुभितकरणस्य महायोगिनः शङ्करस्य "हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः, उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि" इत्यत्र महेशस्य समुद्रेण साम्यं तस्य महासत्त्वत्वम् ईषद्विचलितत्वञ्च प्रतिपादयति। यथा वा शाकुन्तले "अर्कस्योपरि शिथिलं च्युतमिव नवमल्लिकाकुसुमम्" इत्यनया शकुन्तलाया अप्रत्याशितस्थानस्थितत्वं विचित्रमिति प्रकटितम्। यथा वा तत्रैव "भ्रमर इव विभाते कुन्दमन्तस्तुषारं न खलु सपदि भोक्तुं नैव शक्नोमि हातुम्"। इत्यनया राज्ञः प्रेयःश्रेयसोरन्तरे दोलायितमतित्वं सुष्ठु चित्रितम्। न जात्वेवंविधा उपमाः कवीनामितरेषां लेखनीभ्यो निर्गलन्ति। अहो आसां स्वतःस्फूर्तत्वं, माधुर्यमभिनवत्वञ्च। प्रतिपदमेव कालिदासप्रदत्तानामुपमानामन्यकविकुलापेक्षया वैशिष्ट्यं विस्पष्टमुपलभ्यते। नैतादृशि वामने प्रबन्धे कालिदासस्योपमानां सौन्दर्यादिविश्लेषणं सम्भवतीति कृत्वा विरम्यतेऽस्माभिः।

गुणालङ्कारसमूहमिव महाकविः कालिदासः सर्वथा वृत्तजातमपि रस-भावाद्यनुगतमेव विदधाति। यद्यपि सुवृत्ततिलके क्षेमेन्द्रो मन्दाक्रान्ताया-मेव कालिदासस्य समादरातिशयं पारदर्शिताञ्चोल्लिखितवान ,तथापि "चला-पाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं" "अनाघ्रातं पुष्पं किशलयमलूनं कररुहैः," "रथेनानुद्घातस्तिमितगतिना तीर्णजलधि"रित्यादिषु श्लोकेषु शिखरिणीवृत्तेऽपि तस्य सावलीला गतिः संलक्ष्यते। एवमन्येष्वपि बहुलेषु वृत्तेषु कालिदासः स्वस्य प्रतिभायाः परिचयं ददाविति नास्ति नः सन्देहलवोऽपि। प्रसङ्गतः पूर्वोक्तः क्षेमेन्द्रस्य श्लोक उद्ध्रियते—

"सुवशा कालिदासस्य मन्दाक्रान्ता प्रवल्गति।
सदश्वदमकस्येव काम्बोजतुरगाङ्गना॥"

प्रबन्धस्य कलेवरप्रसारभीत्या तावदस्य महाकवेर्गुणालङ्काराणां रसभावा-द्यनुगतत्वं न मनागपि व्याकर्तुमर्हामः।

कालिदासः प्राधान्येन शृङ्गाररसस्य करुणरसस्य च कविः। तेन खलु महामतिना अहेरिव प्रकृत्या कुटिलगतेः प्रेम्णः पूर्वराग-प्रवास-मान-विरह-सम्भोगादीनां सर्वासामेवावस्थानां वर्णने यादृगनन्यसाधारणं नैपुण्यं, सूक्ष्मरसानुभूतिः, लोकचरित्रज्ञानं, मनस्तत्त्वविश्लेषणञ्च प्रदर्शितानि, तानि तु कालिदास एव सम्भवन्ति। अपि च तस्य नाटकेषु विदूषकाणां संकथासु, प्राप्तनृपाङ्गुरीयकस्य धीवरस्य राजश्यालादिभिर्निग्रहकाले च प्रचुरो हास्य-रसोऽप्यनेनाविष्कृतः। रघोर्दिग्विजयाभियाने वीरो रसः प्रदर्शितः। अजस्य विलापे करुणस्य, तथा रतेर्विलापे, यक्षस्य पुरूरवसश्च खेदोक्तिषु। पतिगृहप्रस्थितायां शकुन्तलायां सर्वेषामुद्वेलिते विच्छेदशोकसिन्धौ, निर्वा-सितायां सीतायां नायकनायिकयोर्मर्मस्पर्शिनि वियोगवेदनाप्रसरे यत् सत्यं महाकवेः कालिदासस्य लेखनी करुणविप्रलम्भरसस्य प्रस्रवणमिवोज्जगार। काममेतद्वक्तव्यं तथापि तु वयमेतदुररीकुर्मो यद् भवभूतिप्रभृतीनामिव कालिदासस्य भयानके, रौद्रे, वीभत्से, अद्भुते च रसे न तादृशी दक्षता परिलक्ष्यते। तत्तु मानुषस्य कवेश्च कालिदासस्य निसर्गादेव कुसुमकोमल-

प्रेमकहृदयतया, शान्तिसंयमप्रियतया, प्रकृत्याः स्थिरे, शान्ते सुन्दरे च भागे प्रणयनिष्णतया च सम्भाव्यते। न जातु तस्य काव्येषु कल्पना प्रकृतिर्वा कठोरतां विसंष्ठुलताञ्चावगच्छतः। शान्तेऽप्ययं महाकविः परं प्रवीण इति विज्ञापयामः। प्रपञ्चभयात्तु दृष्टान्तस्थलानि नोद्धर्तुं शक्यन्ते।

( क्रमशः )

## विज्ञप्तिः

मान्याः परिषत्सदस्याः, परिषदो गृहनिर्माणमिदानीं कालक्षेपमीषदपि न सहत इत्यसकृदावेदितमस्माभिः। यद्यपि नास्माभिरप्यत्रार्थे शयानैः स्थीयते, तथापि विना सर्वेषां युष्माकं सम्मिलितं यत्नं निर्वाहमधिगच्छेदयं कर्मभार इति नूनं भवतामपि नाविदितं मन्यामहे। महाप्राणैः श्रीमद्भिः सार एन. एन. सरकारमहोदयैरेतदर्थे पर एव यत्न आधीयते। तैस्तत्र तत्र धनिनां सविधे पत्रादिकं विनियुज्य तेषामत्र दृष्टिराकृष्यते। फलितं च तेषां प्रयत्नेन स्वल्पं वा बहु वेत्यधोनिर्दिष्टानामर्थदातॄणामर्थानाञ्चालोचनेन भवतां प्रतिभास्यति। श्रीमान रतनमोहन-चट्टोपाध्याय-महोदयश्चार्थसंग्रहे प्रभूतमुत्साहं दर्शयन परिषदः कृतज्ञताभाजनं वर्तते।

परिषदपि स्वकीयाम् 'अश्विनोदत्त रोड्' स्थितां भूमिं विक्रीय गृहनिर्माणकोषोपचयार्थं कार्यनिर्वाहकसदस्यैरनुमता। तेन च प्रायेणायुतं मुद्राणां फलिष्यति। अपरञ्चेयं 'मृच्छकटिकं' नाम रूपकम् शुल्कपत्रविक्रयपूर्वकमभिनेतुं साम्प्रतं कृतप्रयत्ना वर्तते। मन्ये ततोऽपि किञ्चिद्धनमुत्थास्यति।

एवं स्थिते भवद्भिरपि यदि यथासाध्यं किञ्चन साहायकमनुप्रेष्यते तदाऽयं कर्मभारः परिषदा सुवहः स्यादिति विश्वसिमः। प्राप्तानाञ्चार्थानां यथारीति पत्रिकाद्वारेण स्वीकरणं भविष्यति।

## संस्कृत-साहित्य-परिषदो गृहनिर्माणार्थं प्रार्थयितॄणां तद्दातृणाञ्च निर्देशः

श्रीयुक्त सरोजेन्द्रनाथ भञ्ज—५), श्रीयुक्त अशोकनाथ शास्त्री—२००), श्रीयुक्त म० म० अनन्तकृष्ण शास्त्री—२०१), श्रीयुक्त हरिहर शेठ—१००), श्रीयुक्त यतीन्द्रनाथ राय चतुर्धुरीण—५०), श्रीयुक्त सुधीरचन्द्र मित्र—५०), श्रीयुक्त दुर्गामोहन भट्टाचार्य एम्. ए.—१५), श्रीयुक्त दक्षिणाचरण भट्टाचार्य एम्. ए.—५०), विचारपति श्रीचारुचन्द्र विश्वास—२५०), विचारपति श्रीविजनकुमार मुखोपाध्याय—१००), श्रीयुक्त रामकुमार बाङ्गर—१०००), विचारपति श्रीरूपेन्द्रकुमार मित्र—१००), बंशीधर जालान (सुरजमल नागरमल)—१०००), श्रीरतनमोहन चट्टोपाध्याय—१००), ए. आर. ए. रहिम—५०), श्रीशैलेन्द्रनाथ वन्द्योपाध्याय—५००), खान बाहादुर-सेक महम्मद-जान—१०१), बैजनाथ बाजोरिया—२५०) (अंशतः), शङ्करलाल भरतराम एण्ड कों (दिल्ली)—२००), उपेन्द्रनाथ ब्रह्मचारी—१००), राजा कमलारञ्जन राय—५००), महाराजा श्रीशचन्द्र नन्दी—१००)।

## स्मृति-सभा

व्यतीते सौरमाघस्यैकविंशदिवसे सायं सार्धसप्तवादनसमये भूतपूर्वाणां परिषत्सम्पादकानां पशुपतिनाथ-शास्त्रि-महोदयानां स्मरणार्थमेकमधिवेशनं परिषदि जातम्। तत्र परिषन्मान्याचार्याः श्रीमन्तो जगन्मोहन-ज्योतिर्विनोद-महोदयाः सभापतिपदमलमकुर्वन्। बहव एव वाग्मिनः समुपस्थिताः स्वर्गतानां शास्त्रि-महोदयानां विविधान सद्गुणानुत्कीर्त्य वाचः प्रावर्तयन। अधिकायां रजन्यां सभापतेर्धन्यवादानन्तरं सभाभङ्गो जातः।

## विशेष-सभा

व्यतीते सौरमाघस्य त्रयोविंशदिवसे १०८ श्रीमतां दण्डि-स्वामि-करपात्रीमहाशयानां परिषदि शुभागमनमुपलक्ष्य काचिद् विशेषसभा

परिषद्येवानुष्ठिता। सभायामस्यां बहवः पण्डिताः समुपस्थिता आसन्। अत्र च दण्डिस्वामि-महाराजा धर्मशास्त्रमवलम्ब्य किञ्चन व्याख्यानमारचयन्। महामहोपाध्याय-श्रीयुक्तानन्तकृष्ण-शास्त्रिमहोदया धर्माचार्याणामेषां दण्डिस्वामिमहोदयानां वाग्मितताया भूयसीं प्रशंसामाधाय परिषदि शुभागमनार्थं तेभ्यो धन्यवादः प्रदत्तः। ते चाभिनन्द्या महात्मानः परिषदः शुभं कामयमाना इदमुदैरयन्—

"ऐहिकामुष्मिकाभ्युदय-निःश्रेयसभूतं संस्कृत-साहित्य-संरक्षणम्। इयं संस्कृत-साहित्यसमितिः संस्कृतसाहित्यस्य संरक्षणे विशेषतः प्रयत्नशीला। साहाय्यमस्याः समर्थैः सर्वैरेव कार्यम्" इति।

## मासिक-सभा

अतीते सौर-माघमासस्योनत्रिंशदिवसे सायं परिषदो मासिकाधिवेशनमेकं सञ्जातम्। तत्र महामहोपाध्यायानन्तकृष्ण-शास्त्रिमहोदयानां प्रस्तावेन श्रीयुक्त-जानकीनाथ-साहित्यशास्त्रिमहोदयानामनुमोदनेन च माद्राज-प्रदेशवास्तव्या व्यवहाराजीवाः श्रीमन्तः एल् नटेश आयार महोदयाः सभापतिपदमलमकार्षुः। कार्यविवरणादिपाठानन्तरं श्रीयुक्त के शङ्कर-शर्मणा व्याकरणमहोपाध्यायेन "संस्कृत-साहित्ये भासस्य स्थानम्" इति-शीर्षको निबन्धः स्वयं विरचय्य पठितः। निबन्धसमालोचना जाता। श्रीयुक्त-जानकीनाथ-साहित्यशास्त्रिणां प्रस्तावेन श्रीयुक्त-दीनबन्धुसाहित्यशास्त्रि-महोदयानां समर्थनेन सर्वसम्मत्या च अश्विनीदत्ता रोडस्थिता परिषदः स्वकीया भूमिर्विक्रीता भवत्विति प्रस्तावो गृहीतः। श्रीमन्तोऽनन्तकृष्ण-शास्त्रिणस्तु "परिषदो भाविन्या विपदः प्रतीकारार्थं परिषदीया भूमिरवश्यमेव विक्रेतव्येति परिषदियं मन्यत" इत्युक्तवन्तः। सभापतेर्धन्यवादानन्तरं सभाभङ्गो जातः।

संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| March, 1941 | १८६२-शकीये फाल्गुने<br>२३श-वर्षस्य ११श-संख्या | Vol. XXIII<br>No. 11 |


## तारकेश्वरवन्दनम्

[ निबन्धकः—वैद्याचार्य-श्रीभोलानाथ-कविराज-विद्यानिधिसरस्वती
कविभूषण भिषग्रत्नायुर्वेद-शास्त्री ]

नाथस्तारकनाथो मे दिष्ट्या दृष्टिपथं गतः ।
यतो यातमितो नाशं पातकं शातमागतम् ॥१॥

रतिर्भवतु तारके सकललोकनिस्तारके
समस्तपरिकल्पनाविदुषि वेदविद्यास्पदे ।
चिकित्सितसुकौशलाद् भवति यस्य भूमौ क्षणाद्
बलोपचयसञ्चयः प्रचुरमायुरुल्लाघता ॥२॥

भजे भुजङ्गमालिनं महाकपालपालिनं
विभुं विभूतिभूषितं गजेन्द्रचर्मसंवृतम् ।
विशालशूलधारिणं त्रिलोकशोकहारिणं
निरीशतारकेश्वरं भजाम्यहं महेश्वरम् ॥३॥

अवाप्तसर्ववन्दनं प्रलिप्तरक्तचन्दनं
कलान्तचन्द्रशेखरं स्मरान्तकं दिगम्बरम् ।

कपालपावकाचितं सुरासुरार्चनोचितं
महेशतारकेश्वरं शिवं शिवास्पदं भजे ॥४॥
प्रभूतभूतपालकं निबद्धजाटजूटकं
वृषासने विराजितं समस्तलोकपूजितम् ।
अपूर्वरूपधारिणं दशास्यगर्वहारिणं
महेशमेकमीश्वरं भजामि तारकेश्वरम् ॥५॥
अनादिमादिपूरुषं पुरातनं सनातनं
भवं भवाब्धितारकं समस्तदुःखहारकम् ।
नमामि तारकेश्वरं भजामि तारकेश्वरं
वदामि तारकेश्वरं स्मरामि तारकेश्वरम् ॥६॥
श्रीतारकेश्वरशिवं शिरसाऽभिवन्दे
मन्देऽपि यस्य न कृपाकृपणत्वमस्ति ।
यस्तीव्रयोगसुलभो विषयेष्वसक्ता
भक्ता भजन्ति यमनादिमनन्तमन्तः ॥७॥
अनाथनाथोऽखिललोकनाथस्त्वमेव हे तारकनाथ नाथ ।
समाधियोगाद् हृदयोपसेव्यो भव्योत्तम प्रेमरसैकलभ्य ॥८॥
स्वप्नान्तर्भजतामशेषरुजतामारोग्यसम्पादना-
दर्थानामविधेः सुखार्जनविधेरर्थार्थिनो दर्शनात् ।
जिज्ञासो रसतत्त्वबोधजननाज् ज्ञानार्पणाज् ज्ञानिनः
सेव्यस्तारकनाथ एव जगतामेको महानीश्वरः ॥९॥
वन्दे तारकनाथदेवमनिशं मन्देऽप्यमन्दादरं
लोकस्याखिलरोगशोकशमनं सम्पत्तिसम्पादकम् ।
सर्वैश्वर्यमयं शिवैकनिलयं संकल्पकल्पद्रुमं
सृष्टिस्थित्यपहारकारणमहंलक्ष्यं वचोऽगोचरम् ॥१०॥

# मनोहरं दिनम्

[ निबन्धकः—आ. रा. हेबारे ]

[ पटोत्तोलनम् ]

जननि, जय, तुषारद्रिनिर्धौतरम्यप्रभाशुभ्रहिमखंडमृदुमंजुहासस्फुरित-कान्तदन्तावलीप्रान्तभारे, कलितपुष्पमालाललितकण्ठहारे, हृताखर्वसर्वप्रणत मानसोन्माथिगणिताङ्कसंख्यानवच्छिन्नविपदुन्मिषद्दीर्घ हृदयप्रहारे।

प्रसीद, प्रसीद, द्रवन्नीलमणिदीप्तिवर्षाम्बरा भा-विसरबिम्बितानन्त-कल्लोललोलोच्छलद्वीचिमन्दाकिनीमञ्जुवारिप्रवाहप्रकटपुण्यवक्षःस्थलीनिर्गलद्दु-ग्धधारासहसोल्लसन्मातृवात्सल्यपीयूषसारोत्सुकाङ्ख्यशिशुकप्रसारे! आयाहि जगदम्ब, मानसविहारे, रचयन्ति नतिमत्र पुत्रास्तव त्रासपरिपूरिते विश्व कान्तारपारे।

[ नान्द्यन्ते ]

सूत्रधारः। ( पुष्पाणि विकीर्य ) अहह, परमरमणीयोऽयमवसरो रूपकाभिनयेन मनस्तोषसमुद्भावनस्य। कतमद्रूपकजातमपुनरद्याभिनय-भाजनतां नीयेत ? ( क्षणं विमृश्य ) अस्ति हि कश्चित्कविरानन्द-पदवाच्या-भिधेयाक्षरविन्यासो रामचन्द्रसूनुर्हेबारे-कुलसम्भवो दाक्षिणात्य-भूभागवासी। वर्तते तस्यैव काचिन्मनोहरदिनाङ्कित-शीर्षक-शब्दपङ्क्तिरेकाङ्किका। तामेवा-भिनीयाद्य सभासदानां मनःप्रसादमात्रामुत्पादयामि। ( परितो विलोक्य ) तद् गच्छामि, येनानन्तरकरणीयाय सज्जो भवेयम्।

( इति निर्गच्छति )

इति प्रस्तावना

( ततः प्रविशति निर्वर्तितप्रातराशो हस्तक्षालने दत्तैकलक्ष्य आश्रमलघुजलागारस्य नलमुद्घाटयन् वसन्तपत्रः । )

वसन्त पत्रः—( हस्तक्षालनपुरस्सरं गायति )

स्वप्नानां संसारोऽस्माकं स्वप्नानां संसारः !
स्वप्नानां विरहश्चेत्प्रभवेद् गुरुरिह जीवितभारः !
जाग्रदवस्थाशाश्वतमूर्तिः तत्र कुतः खलु तत्प्रतिपूर्तिः ?
शक्यः स्वप्नेष्वेव कथञ्चित् प्रिय ! काङ्क्षितपरिहारः ।
स्वप्नानां संसारोऽस्माकं स्वप्नानां संसारः

( पुरो विलोक्य स्वगतम् ) कथमयं मम सम्पिण्डितस्नेहधाराप्रवर्षसहस्रस्यैकमात्रं भाजनं परमरमणीयमुखाकृतिः सञ्चय इव ब्रह्मवर्चसां प्रियः सखा पञ्चवदनः प्रातराशमशेषं भुक्त्वा करप्रक्षालनार्थमित एवाभिवर्तते । अयं निजामृतमयेन वचसा मामनुगृह्णीयाच्चेन्महान्ममाद्य हर्षोत्सवो भविष्यति ।

( इति सोत्कण्ठं तिष्ठति )

( ततः प्रविशति पञ्चवदनः )

पञ्चवदनः । ( वसन्तपत्रं विलोक्य स्वगतम् ) अहो, अयं वसन्तपत्रः । मय्येव बद्धसकलहृदयानुरागो मय्येव स्खलितविरलतरलदृष्टिः कमपि गीतध्वनिमुत्पादयँस्तिष्ठति । अनेन सहाभाषमाणस्यैव मम बहुतिथः कालः क्षयमुपागतः । तत्कथमपि वाग्विजृम्भणं करोमि । ( प्रकाशम् ) किमिति सखे वसन्तपत्र ! चिरादिव दृष्टोऽसि ?

वसन्तपत्रः । ( प्रणयसंकोचप्रवणदृष्टिः सन् ) मित्र पञ्चवदन, यदा प्रतिवासरं नयनगोचरतां गतान्यपि प्रियमित्राणि न त्वया लक्षीक्रियन्ते । तत्र ममापि को वाऽऽपराधः ? प्रभाते विद्यालयारम्भमङ्गलगानाभ्यासवेलायां किं मां न पश्यति भवानग्रत एव समासीनम् ?

पञ्चवदनः । ( स्वमपि हस्तं क्षालयन् ) सखे, क्षम्यतामयं जनः । दुर्निवार-परीक्षानियोगभारानुष्ठानपरतन्त्रचेष्टस्यैव ममेदमकृतज्ञपुरुषैकशंसनीयं

पराङ्मुखत्वम्, न पुनर्यस्य कस्यापि। सम्प्रति कथय कथङ्कारमात्मानं कलयसि, अपि कुशलि मे मित्रं वसन्तपत्रः ?

वसन्तपत्रः—सर्वथा कुशली खल्वहं विशेषतश्चैवं स्फुटीकृते पराङ्मुखताकारणे प्रियमित्रेण। मया तु मनसि कृतमासीद् यद् विस्मृतवानेव मामधन्यं भवानिति।

पञ्चवदनः। (उत्थाय वसन्तपत्रस्य कराग्रमान्दोल्य) सखे, एवं किल समाकर्ण्यते यज्जननान्तरेऽपि प्राग्जननसंभवः सौहार्दसंस्तवो बलवान्विजृम्भते। तत्कथमस्मिन्नेव जनुषि शक्यस्त्वं मया नितरामेव विस्मर्तुम् ? आगच्छ तर्हि, कुत्रापि निभृतकुटीरके प्रविश्य मुहूर्त्तं प्रियमालपन्तौ परस्परादर्शनाभाषणादिजन्यं चिरादुपचितं मनःखेदं दूरीकुर्वः।

वसन्तपत्रः। (हर्षोत्फुल्लवदनः) प्रियं मे प्रियं मे। नूनं कल्याणशुभोदर्काणि मे भागधेयानि, येनैवं मदीया कल्पशतोपसम्भृताऽविज्ञातपरितृप्तिरसास्वादमङ्गला तृडियमद्य प्रशमिता भवति।

(तथा करणार्थमुद्यतौ कियद्दूरं गच्छतः)

(नेपथ्ये)

भोः भोः कुण्डलिनोदुग्धापूपसंयाव-विदुरस-गुल्लक-मिश्र प्रातराशास्वादनैकक्षेत्रमेदिनीबृहन्मल्ला ब्रह्मचारिणः! त्वर्यतां त्वर्यताम्, उपश्रूयमाण इव जनितकर्णज्वरो मुहुर्मुहुः कालयति वः पठनसज्जायै महानयमभ्यासघण्टारवः।

(उभौ शृणुतः)

पञ्चवदनः। (स्वगतम्) अरे रे, सहसैव परस्सहस्रसुख-खुण्नलतावृन्तलग्नानां बालकुसुम-कलिकानामुपरि दारुणस्तुषारपातः! तद् योजनीयोऽद्य कश्चिदनध्यायस्योपायः! (प्रकाशम्) सखे वसन्तपत्र, मन्ये, अद्य कालात्पूर्वमेव घण्टा निनादिताऽनेन परमविप्रियकारिणा ललितवक्त्रकेण। तर्हि चल, प्रथममयमेव निवेदनीय आवाभ्यामाचार्यचरणेभ्यः। (तस्य कर्णोपान्तिकं गत्वा किमपि शिक्षयति) एवमिव !

(ईषत्प्रहासपरिखेलिताधरौ तावुभावपि निष्क्रामतः)

( ततः प्रविशति दुर्गृहीतवेशविन्यासः, आजानुपरिहितक्षुद्रशाटिकाखण्डः, पृष्ठपर्यस्तोष्णोषिकालाङ्गूलः, दर्शितश्यावदन्तपङ्क्तिः, हस्ते धृत्वैकां महतीं घण्टां कयापि लगुडमुद्गरिकया मुहुर्मुहुर्निनादयन् ललितवक्तृकः। प्रविशन्ति च बहवो भोजनभाण्डागारस्थासनपङ्क्तिषु समुपविष्टाः प्रातराशाभ्यवहरणैकदत्तावधाना ब्रह्मचारिणः।

ललितवक्तृकः। भो भोः कुण्डलिनीदुग्धापूपसंयावबिंदुरसमोदकमिश्रप्रातराशास्वादनैकक्षेत्रमेदिनी बृहन्मल्लाब्रह्मचारिणः! त्वर्यतां त्वर्यताम्, जायते पठनकालारम्भसंवेदको घण्टारवः। (स्वगतम्) कथं कोऽपि नहि शृणोति? भवतु तत्रैव गत्वा निनादयामि। ( उपसृत्य ) भो भो ब्रह्मचारिणः! त्वर्यतां त्वर्यताम्! ( स्वगतम् ) अपि नाम बधिरकर्णा इमे सर्वे संवृत्ताः? भवतु, भूयोऽपि जवेन घण्टायां मुद्गरिकाप्रहारं करोमि। (इति नितरामुच्चैर्घण्टां प्रहरति। सर्वे ब्रह्मचारिणो मोदकानां भक्षणे भूयसीं प्रवृत्तिं नाटयन्ति। ललितवक्तृकोऽपि श्रान्तिमनुभूय घण्टामेकतः स्थापयति। ब्रह्मचारिणश्च तथाविधान् निपुणं निरूप्य स्वगतम् ) अह ह, बलवदिदं नाम जिह्वालौल्यं जनानां हठादाकृष्य प्रवृत्तिं दयिततरेषु मधुररसासाररुचिरेषु भोग्यवस्तुषु स्थिरीकरोति। (ब्रह्मचारिणां पुरस्तात्परिवेषितान् प्रातराशपदार्थान् दृष्ट्वा) अहो, कीदृशं पदार्थजातमभिनवहैयङ्गवीनतापनोपलब्धतीव्रघृतकुण्डोद्गतसुवासनिर्वरं ह्येतत्! ननु ममापि वर्षिष्ठस्य दृष्ट्वा भूयानिव दन्तोदकसम्प्लवो भवति। ( विमृशति ) परं केनोपायेन मे रसनाचापल्यप्रतीकारः स्यात्! ( निरीक्ष्य ) भवतु, अयमुत्तिष्ठति समाप्तप्रातराशको नितान्तकृपाविष्टमानसः सरलाकृतिर्ब्रह्मचारी हस्तप्रक्षालनाय। तदेनमुपसर्पामि। (भृङ्गारकमादायोपसृत्य तं ब्रह्मचारिणं प्रति) भो महानुभाव, क्व गम्यते, अस्ति मम हस्ते वारिणा कण्ठपर्यन्तं पूर्णोऽयं भृङ्गारस्तदेनेन यथास्वं स्वाभिलषितं प्रतिपद्यताम्। (इति सुखोष्णजलपूर्णं भृङ्गारं तमुपनयति।)

ब्रह्मचारी। ( हस्तं तथा प्रसार्य स्वगतम् ) कथमस्मदाचार्यचरणानां गृहपरिचारको ललितवक्त्रकः ! ( प्रकाशम् ) अये ललितवक्त्रक, त्वमसि ? (हस्तप्रक्षालनं कुर्वन्) कस्मादद्य चिरायितोऽसि

ललितवक्त्रकः—( स्वगतम् ) कच्चित्सफलं मे साम्प्रतं मनीषितं स्यात्। (प्रकाशम्) कस्मिन् विषये ?

ब्रह्मचारी। अस्मिन्नेव विद्यालयस्य घण्ठानादननियोगानुष्ठानविषये।

ललितवक्त्रकः। (स्वगतम्) हा धिक्, दारुणोऽयमदारुणवदनोऽप्यवदन् 'प्रातराशभक्षणार्थमागमनविषय' इति। (प्रकाशम्) चिरादेवाशून्याधिकारोऽहं तत्र।

ब्रह्मचारी—( ससम्भ्रमम् ) अप्येवम् ! द्रुतं तर्हि व्रजामि स्वावासकक्षकं प्रति, कदाचिद्विलम्ब्योपस्थानं भवेत !

(इति त्वरया पदं निधाय निर्गच्छति।)

ललितवक्त्रकः। ( स्वगतम् ) कथं प्रातराशभक्षणं ममापृष्ट्वैव प्रद्रुतः ! भवतु, अन्यं कमपि पृच्छामि। ( अन्यमुपसृत्य ) महाभाग, अद्य किं किं वस्तु प्रातराशके निर्मापितम् !

द्वितीयो ब्रह्मचारी। ललितवक्त्रक, किमनुयुङ्क्षे भवान् !

ललितवक्त्रकः। नहि किमपि विशिष्टं महाराज, केवलं प्रातराशे किं वस्तु निर्मितमस्तीति जिज्ञासाकुतूहलेन परवान् मे मानसस्तदेवानुयुज्यते।

तृतीयो ब्रह्मचारी। ( सोच्चैर्हासम् ) नैवं कस्माद् ब्रवीषि यदद्यतनं तथाजातीयकं बहुतरास्वाद्यद्रव्यपूर्णं प्रातराशकं विलोक्य रसना मे-भरवती जातेति !

ललितवक्त्रकः। (सावहित्थम्) नहि महाराज, 'मादृशस्य वर्षिष्ठस्य न तथा सम्भवति।

द्वितीयो ब्रह्मचारी। इतोऽप्यास्वादय त्वमपि किञ्चित्।

ललितवक्त्रकः। न शक्यते मया ग्रहीतुं लवमपि।

केचिद् ब्रह्मचारिणः। अरे गृहाण गृहाण, ( भाण्डागाराध्यक्षं प्रति )

भो भाण्डागारिक, प्रयच्छास्मा अपि ललितवक्त्रकाय प्रातराशम्। अयमपि तपस्वी तद्वस्तुरसास्वादमङ्गलमनुभवतु।

ललित-वक्त्रकः। नहि महाराज, मया नैवाऽऽस्वाद्यते।

अपरे ब्रह्मचारिणः—गृहाण को दोषः? बहन्तमवशिष्टं निखिलमपि बलिभुग्भ्य एव प्रदातव्यमस्ति।

ललितवक्त्रकः। (स्वगतम्) फलितमिदानीं मन्मनोरथद्रुमवरेण! (प्रकाशम्) महाराज! यद्यपि नास्ति मम जिघृक्षालवोऽपि, तथापि भवतामयं दासजनो न स्थातुमलं भवादृशां पुण्यचरित्रशालिनां ब्रह्मचारिणामाग्रहस्य पुरस्तादिति प्रह्वं मे मनो भवदाज्ञां शिरसा वोढुम्।

( सर्वेऽपि ब्रह्मचारिणस्तादृशीं तद्वचनरचनाचातुरीं दृष्ट्वा, तच्चेष्टाभिश्च तदन्तर्गतं बुद्ध्वा प्रचुरं हसन्ति )

भाण्डागारिकः। (भृत्यमेकं सम्बोध्य) अये गच्छ, ललितवक्त्रकस्य कृतेऽपि यावत्पदार्थजातमुपाहर, यथाकामं च सन्तर्पयैनं, चिरादुज्जृम्भित-जिह्वादोहदोऽस्त्ययं वराकः।

(सहसा पञ्चवदन-वसन्तपत्राभ्यां सह आचार्यपादः प्रविशति)

आचार्यः। ( ललित-वक्त्रकमुद्दिश्य सरोषम्) भो ललितवक्त्रक, इत एहि।

ललितवक्त्रकः। (सहसा वेत्राघातेन ताडित इव) एषोऽस्मि महाराज, उच्यतां काऽनुज्ञा दासस्य कृते?

आचार्यः। अयमेव पञ्चवदनः कथयति, यदद्य कालात्पूर्वमेव घण्टा निनादितेति।

पञ्चवदनः। आर्य, कुलकार्यभवनघटिकायामितोऽपि सपादाष्टवादनं प्राभातिकं न जातमिति स्वयमाचार्यचरणा द्रष्टुं प्रभवन्ति।

वसन्तपत्रः। नूनं यथाह पञ्चवदनः। इयं काचिदद्यतन्येव कथा न भवति। श्रीमन्नयं प्रतिदिनमेव सुराप इव मत्तमाचरति। पृच्छ्यतामयमेव कदाप्यनेन साधुकर्म कृतम्भवेत्!

ललितवक्त्रकः। (लज्जावनम्रमुखो धरित्रीं पश्यन्) महाराज, अद्य क्षम्यताम्, पुनर्नैवं द्रक्ष्यते श्रीमच्चरणैः प्रभुवर्यैः !

आचार्यः। (परुषतरवचनैर्मन्युमुद्घाटयन्) अये, दुर्ललितवाग्दूषित-वाक्यक ! अभियुक्तापसद ! पशो ! उपाध्याया अपि एतदेव मतं कुर्वन्ति तव विषये। इतो यावद्बहु सोढं मया, परमत ऊर्ध्वं निमेषमात्र-मपि न सहिष्यते।

पञ्चवदनः। भूतार्थं ब्रवीत्याचार्यपादः। नूनं न सोढव्यम्, विशेषत-श्चायमद्यतनापराधस्य कृते अवश्यं दण्डनीयः। एवं तु नाम व्यवस्था-भङ्गस्य प्रश्रयः स्यात् संस्थासु।

ललितवक्त्रकः। प्रभो ! क्षम्यतामयं दीनजनः। दासोऽयं श्रीमतां महाराज !

आचार्यः। नहि नहि, नैवं भवति। शृणु, अद्य त्वम् अष्टाणकान् दण्ड्यसे। अतः परं यदि कदापि त्वया समाश्रितमीदृशं शैथिल्यं स्यात् तर्हि रूप्यकं दण्ड्यो भविष्यसि।

ललितवक्त्रकः। (तूष्णीमधोमुखः सन् स्वगतम्) हृदय, मर्षणीयोऽयं दुःसह्योऽपि दण्डाघातः। दारिद्र्योपहतका नामेतादृश्येव विधुरा गतिः।

पञ्चवदनः। आचार्य, अन्याप्येका याचना वाचालयति माम्। अभय-प्रदानं चेद्ब्रवीमि।

आचार्यः। दत्तं तत्तदैव, यदा त्वं कुलभवने प्रविष्टः। सुतनिर्विशेषा एव यूयं मम सर्वे।

पञ्चवदनः। आर्य, नाद्य भवतां वियति दृष्टिर्गता, कथं सजल-स्निग्ध-श्याममनोहरैरम्भोधरपटलैः परिवारित इवायं भास्वान् सहस्ररश्मिः ?

आचार्यः। अभ्युपगम्यते।

पञ्चवदनः। कथं भागीरथीजलकणैर्मिश्रा अभिनववृन्तविगलत्पुष्प-परागरेणुसुरभिरियं तुषारशीतला समीरधारा ?

आचार्यः। अनुभूयते तावत्।

पञ्चवदनः। तर्हि किमवशिष्टं प्रभो ! मनोहरत्वे दिनस्य ! दीयतामद्य मनोहरदिनस्य तावाननध्यायः।

केचित्। अहो पञ्चवदन, नूनमिदानीं त्वमसि !

केचिदन्ये। साधु भोः, साधु वस्तु भाषसे त्वम् !

वसन्तपत्रः। ननु वक्तव्यं ममैव हृदयेन सह सम्मन्त्र्य ब्रवीषि !

केचिदपरे। अवश्यमवश्यमनध्यायोऽद्य आचार्यपाद ! मनोहरमस्ति दिनम् !

आचार्यः। (सप्रमोदम्) पञ्चवदन ! बहुप्रगल्भोऽसि वचनरचनायाम् ! कुसृतिप्रवणो नाम, नूनं धूर्त्ततरस्त्वम् !

अन्येऽपि केचन। आचार्य, प्रातराशकोऽप्यद्य बहुविधस्वादुद्रव्यपरिपूर्ण आसीत्, तस्मात्तथा प्रकाममस्माभिर्भुक्तं येन न शक्ष्यामो बलवतीं निद्रामभिभवितुमध्ययनवेलायाम्। तद्वयमपि पञ्चवदनवदनोद्गतां वाक्यावलीमनुमोदामहे। तत्प्रीयतामाचार्योऽनध्यायप्रदानमात्रकेण।

आचार्यः। (किञ्चित्क्षणं विचार्य) एतदेव व्यवसितं युष्माभिः ? आस्तां तावदद्य युष्माकमवकाशः। (भाण्डागारिकमुद्दिश्य ईषत्कठोरया गिरा) केनाऽऽज्ञप्तोऽसि भो भाण्डागारिक, तादृशगरिष्ठवस्तुपरिवेषणार्थमद्य प्रातराशके ? नैवं वेत्सि, यदियं नितान्तं सुकुमारकोमलमतीनामन्तेवासिनां निवासभूमिः ? यद्येतादृशजिह्वालौल्यपरिरक्षणेन गृहीतव्रते वैक्लव्यमुपजायेत तत्कस्तत्र दोषभाग्भविष्यति, अहं वा त्वं वा ? एतावदपि न त्वयाऽवगम्यते यद्गरिष्ठभोजनेन ब्रह्मचर्यस्य क्षयो भवतीति ? तस्मादुत्कर्णः सन् शृणु, मदादेशवर्जं किमपि न वस्तु निर्मापणीयमतः परम्, श्रुतम् ?

भाण्डागारिकः—(तूष्णीमधोमुखस्तिष्ठति)

ब्रह्मचारिणः—(अन्योन्यस्य मुखं पश्यन्तः स्तब्धतां नाटयन्ति)

आचार्यः। ललितवक्त्रक ! गच्छ, अनध्यायस्य घंटानिनादेन स्वाधिकारमशून्यं कुरु।

ललितवक्त्रकः। यथाज्ञापयति महाराज !

(इति घंण्टा-मुद्गरिके गृहीत्वा, निष्क्रामति )

आचार्यः। वरं चलनीयमिदानीं मयापि।

(अनुपदमेव निष्क्रामति)

सर्वेऽपि ब्रह्मचारिणः। अल्पीयानेवात्र खल्वस्माकं प्रसादावसरो येनास्माकं भावी प्रातराशक एव सूक्ष्मतां नीत आचार्यमहाभागैः। अस्तु, चलत, तावदद्य स्वेषु स्वेषु कक्षेषु उपस्तरणं प्रसार्य स्वप्नसुखं लभामहे।

(इति सर्वेऽपि निष्क्रामन्ति)

वसन्तपत्रः। (सस्मितम्) सखे, त्वमतीव निपुणोऽसि, घटिकायाः समय-सूचिकां निम्नाङ्के विघटय्य, तपस्विनि निर्दोषेऽपि ललितवक्त्रके दोषं प्रतिपाद्य, तथा वचनोपन्यासेन यत्नान्मनोहरदिवसस्यावकाशं सम्प्रदाप्य द्राघीयानेवावसरो दत्तस्त्वया स्नेहप्रमोदनिर्भरालापपरम्परायां मे।

पञ्चवदनः। वयस्य, अयं शिथिलव्यवस्थो ललितवक्त्रकः प्रत्यहं विद्यालयान्तरेषु स्वैरमाचरतीति मया प्रागेव त्वं शिक्षितस्तत्सर्वथा वितथं नासीत्। सोऽद्य शिक्षणीय इत्यपि ममासीन्मनोगतम्। इति निर्दोषे दोषः प्रतिपादितो मयेति न वक्तुमर्हन्ति भवन्तः। अस्यान्धजनविद्रवणस्य कदाचित्तु नाम प्रतीकारो विधेय एवासीन्न वा ? तस्मादेव मयाऽनीप्सितमपि सदीप्सितं तादृशं समाचरितम्।

वसन्तपत्रः। आस्तां तावत्। प्रिय सखे, अद्य तव कृपाचेष्टितेन बहुतरकालानन्तरं पुनरपि त्वं मया लब्धोऽसि नवनवप्रणयानुरागभरमन्थरगोष्ठीसुखमास्वादयितुं, लब्धश्च मनोहरदिनस्यावकाशः सर्वैः।

पञ्चवदनः। भूयः किं ते प्राभृतं प्रियमुपाहरामि प्रिय सखे !

वसन्तपत्रः। अतः परं किमाह्लादकरमुपाहरिष्यसि।

चिरात्पराङ्मुखप्रायं नयनानन्दशंसि मे।
मित्रं देवोपमं लब्ध्वा किमन्यदभिलष्यताम्॥

पञ्चवदनः। तथापीदमस्तु (भरतवाक्यम्)—

बालः सर्वे पठन्तु प्रचुरमनुदिनं लब्धविद्या भवन्तु ;
मान्नां रम्या गुरूणां विनयपरवशस्वान्तमङ्के वहन्तु ।
स्निग्धं खेलन्तु, भूयात्तनुरपि सबला, स्वास्थ्यमुग्रं च तेषां ;
येनास्मद्राष्ट्रमातुर्व्यथितमपि मनो भूयसीं तुष्टिमीयात् ॥

(इति उभावपि निर्गच्छतः)

पटक्षेपः

---

# संस्कृतसाहित्ये भासस्य स्थानम्

[ निबन्धकः—शङ्करशर्मा ( महोपाध्यायः ) ]

नाविदितचरं हि भवतां सहृदयानां, यद्विशिष्टशब्दार्थमूर्तिव्यङ्ग्यरसैक-जीवितम् , सुकुमारमतीनां मानसोल्लासकालङ्कारपरिशोभितम्, शृङ्गारादिरस-लोलुपसमालोचकमधुकरागुञ्जनगुञ्जितनिचयम्, सदाऽन्यूनगुणादिसमृद्धम्, चतुर्वर्गफलकम्, सहृदयहृदयाह्लादि कल्पान्तस्थायि च काव्यमेवेति ।

देशभेदेन कालभेदेन च वृद्धिमुपजातेष्वनन्तेषु साहित्येषु, आदिमत्वात् समग्रगुणसम्पूर्णत्वादितरेषां विषयप्रदानैकचित्तत्वात्सर्वमूलकत्वाच्च संस्कृत-साहित्यमेवार्हति परां काष्ठामधिरोढुमित्यत्र मन्ये न केषाञ्चिद्विप्रतिपत्तिलेशोऽस्तीति ।

दृश्य-श्रव्यभेदेन प्राधान्यतो द्विधाभूते हि तस्मिन् विनैव भेदमावर्जयति प्रेक्षकमानसानि रूपकमिति सर्वविदितं किल ।

तथा चोक्तं वामनेन काव्यालङ्कारसूत्रवृत्तौ—

"सन्दर्भेषु दशरूपकं श्रेयः
तद्विचित्रं चित्रपटवद्विशेषसाकल्यात्-
दशरूपकस्यैव हीदं विलसितं सर्वम् ।
यच्च कथाख्यायिके महाकाव्यमिति ।"

संस्कृतरूपककर्तॄणां मध्ये आदिरूपकप्रणेतुर्भासस्य विषये यत्किमपि वक्तुं सुशकं कुशाग्रबुद्धीनां विदुषाम्, नास्मादृशस्य वाचाटस्य, यदि चोच्यते तदपि वचनं हासास्पदमेव स्यादिति दृढप्रत्ययोऽप्ययं जनः।

"अनुगन्तुं सतां वर्त्म कृत्स्नं यदि सुदुष्करं, स्वल्पमप्यनुगन्तव्यम्"—इति न्यायानुसारं प्रवृत्तोऽस्मि जल्पने। अत्र संभावितान्दोषान्मर्षयन्तु, कृपया शृण्वन्तु च सावधानं भासकविनिष्ठबहुमानेनेति वारं वारमभ्यर्थये भवतः।

के नाम निःशेषं जानन्ति यन्निस्स्वार्थं निरन्तरं च सुरसरस्वतीसमाराधनैकतत्पराः, स्वोपहारैः काव्यकुसुमैरर्चितवन्तश्च तां यथाशक्ति, यशःकायावशिष्टाश्चिरन्तना आसन कति वा महाकवय इति; जन्मना लीलाखिलविलासैश्च तेषां को वा देशः पवित्रीकृतः कैरक्षरैर्वा सुकुमारैराराचितान्यासीत्तेषां नामानि, कानि कानि काव्यकुसुमान्युपहारीकृतान्यम्बायै संस्कृत साहितीदेव्यै, कस्मिन्वा काले तेऽवर्तन्त इत्यादि बोधकाश्चारित्रिका ग्रन्था न सन्त्येव संस्कृतसाहित्ये इति। यान्विना सुनिश्चितं नावगन्तुं शक्यतेऽतिपावनानि तेषां चरितानीति महदिदं विषादस्थानमस्माकम्। तस्मादद्य जीवितकालसमालोचने चारित्रिकाणामेवावसरस्तथापि किञ्चिदिव विचार्यते।

महाकविना कालिदासेन मालविकाग्निमित्रप्रस्तावनायां—"प्रथितयशसां भाससौमिल्लकविपुत्रादीनां रूपकेषु सत्सु वर्त्तमानकवेः कालिदासस्य कृतौ कथं बहुमानः" इति मुक्तकण्ठं प्रशंसितो भासः। सुस्पष्टमुभयोर्ग्रन्थानां समालोचनेन सुकरमवगन्तुं शक्यते महत्साजात्यमेषामिति। तत्तु विचार्यतेऽन्यत्र।

भट्टबाणो हर्षचरिते—

सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव॥

इति स्मृतवान्भासम्।

काव्यालङ्कारसूत्रकर्ता वामनः स्वकृतौ

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥ स्वप्न. अ. ४.

[ का. अ. ३. अधि ४]

"यो भर्तृपिण्डस्य कृते न युध्येत्" प्रतिज्ञा.

[का. अ ५. अधि २]

यासां बलिर्भवति मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव पूर्वबलिपीठयवाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥ चारु.

[का. ५. अ २]

आचार्यदण्डी काव्यादर्शे उत्पेक्षालक्षणनिरूपणे—

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः"

इति बालचरितगतपद्यमुद्धृतवान ।

भामहोऽपि काव्यालङ्कारे स्वकीये चतुर्थ-परिच्छेदे न्यायविरोधस्योदाहरणत्वेन प्रतिज्ञानाटिकाकथावस्तु संगृहीतवान् ।

अर्थशास्त्रकाराच्चाणक्यात्पूर्वकालिकत्वम्—क्रिस्तोः पूर्वीयचतुर्थशताब्दकालिकश्चाणक्यः स्वकीयशास्त्रे—दशमाधिकरणे तृतीयेऽध्याये—"अपीह श्लोकौ भवतः"—इत्युपक्रम्य प्रतिज्ञानाटिकागतं—

"नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य मा भून्नरकं च गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ॥"

इति श्लोकमुदाहृतवान । किञ्च, भासः प्रतिमानाटके पञ्चमेऽङ्के रावणवाक्येन तत्कालीनानां सर्वेषां शास्त्रग्रन्थानां सङ्कलनं करोति, तत्र कौटलीयार्थशास्त्रस्यानुक्तत्वम् अर्थशास्त्रे भासकृतश्लोकस्य दृष्टान्तप्रदर्शनं च ज्ञापयति चाणक्यस्य पूर्वकालिक एवायमिति ।

"भोः ! काश्यपगोत्रोऽस्मि, साङ्गोपाङ्गं वेदमधीये मानवीयं धर्मशास्त्रम्,

माहेश्वरं योगशास्त्रं, बार्हस्पत्यमर्थशास्त्रं, मेधातिथेर्न्यायशास्त्रं प्राचेतसं श्राद्धकल्पं च" ॥

रूपकसमूहेष्वेषूपलभ्यन्ते असंख्याता अपाणिनीयाः प्रयोगाः। तत्र को वा हेतुस्स्यादिति विचारणायामस्य काले पाणिनीयव्याकरणप्रचाराभावः, प्रचारेऽपि तद्विधीनामुल्लङ्घनं पाणिनिपूर्वकालत्वं वा स्यात्। प्रथमद्वितीययोः पक्षयोराश्रयणं न समञ्जसं भवितुमर्हति। प्रथमाश्रयणे पाणिनिसमकालिकत्वादस्य तादृशानां प्रयोगाणामभाव एव न्याय्यः। द्वितीयाश्रयणे अप्रयुक्तादि-काव्यदोषबाधितत्वादमीषां रूपकाणां दुष्टत्वमभ्युपगन्तव्यम्। तथा चाभ्युपगमे कालिदासादिकवीनामस्मिन्महाकवेः प्रबन्धानधिकृत्य नैव समादरः प्रादुर्भवेत्। दृश्यते चालङ्कारिकैः महाकविभिश्चास्य मुक्तकण्ठं प्रशंसनम्। तस्मादयं पाणिनेर्भगवतः पूर्ववर्ती निस्सन्देहो भवितुमर्हति। अपाणिनीया द्वित्राः प्रयोगाः प्रदर्श्यन्तेऽस्माभिः—

अपाणिनीय-प्रयोगाणां सूची

| | | |
|---|---|---|
| I | मा दाणि भवं अणत्थं चिन्तिअ— स्वप्न पृ ६· <br> मा मा भूयो अवइणिअ ३२ | इह माशब्दयोगे क्त्वाप्रयोगोऽशास्त्रीयः। एतादृशा बहवो वर्तन्तेऽस्य कृतिषु। |
| II | मा दाणि भवं अत्ताणं ओहसिअं कादुं—स्वप्न पृ ६ <br> मा दाणिं भभ्र अदिमत्तं सन्तप्पिदुट्ट ६९ | प्रतिषेधार्थोऽत्र माशब्दस्तद्योगे तुमुन अशास्त्रीयः |
| III | प्रत्यायति—अभि पृ २४ | प्रत्येतीत्यर्थे प्रत्याङ्पूर्वोऽयतिरप्रसिद्धः। परस्मैपदश्च |
| IV | अवन्त्याधिपतेः—स्वप्न. | अवन्त्या अधिपतिरित्यधिपतिशब्दे आङः संश्लेषणमपूर्वम्। |
| V | यद्येवं नलागिरिवाहणार्थं विमुक्तश्चेत —प्रतिज्ञा | यदि चेच्छब्दयोः सहयोगोऽपूर्वः। |

| | |
|---|---|
| VI स्वस्ति भवते सपत्नीकाय-अवि | प्रकृत्याशिषि इति प्रकृतिभाव-विरुद्धः स-भावः सहशब्दस्य। |
| VII काशिराज्ञे (अवि) | "राजाहस्सखिभ्यष्टच्" इति समासान्तप्रत्ययो न कृतः। |
| VIII व्यूढोराः (मध्य) | "उरःप्रभृतिभ्यः कप्" इति नित्यमिह कपा भाव्यम्। |
| IX रुदन्ती (दूत) | इह नुम् अशास्त्रीयः। |
| X गृह्य (दूत) | असमासे ल्यप्करणं शास्त्र-विरुद्धं "समासेऽनञ्पूर्वे—इति विधानात्। |
| XI धातूनां पदभेदास्तु आपृच्छामीत्यादि | साधारण्येन दृश्यन्ते सर्वत्र। |

प्रसिद्धनाट्यशास्त्रस्यार्वाचीनत्वमस्मात्

अस्मिन् रूपकचक्रे नोपलभ्यते कुत्रापि कविनामसङ्कीर्तनं प्रस्तावनासु। भरतनाट्यशास्त्रे तु "प्रसाद्य रङ्गं विधिवत्कवेर्नाम च कीर्तयेत्। प्रस्तावनां ततः कुर्यात्काव्यप्रख्यापनाश्रयाम्॥" इति हि विधिः। नान्दीपाठस्यापि ग्रन्थाद् बहिरेव करणात्, किं बहुना ऊरुभङ्गे दुःखपर्यवसायित्वस्य दुर्योधनमरणस्य, बालचरिते च प्रत्यक्षकृतयुद्धस्य, अभिषेकनाटके च मरणस्य चात्यन्तविरुद्धानां नाटकेष्वेतेषु निवेशनाच्च भासोऽयं भरतनाट्यशास्त्रप्रादुर्भावात्प्रागेवासीदिति। किञ्चास्य कृतीनां सर्वश्लाघ्यता सत्यपि —पूर्वोक्तदोषबाहुल्ये विनिगमयत्यस्मानस्य भरतनाट्यशास्त्रा-त्प्राक्कालिकत्वम्।

क्रमशः

# रसिकभूषणम्

[ निबन्धकः—महामहोपाध्यायः पङ्गनाडु-गणपतिशास्त्री ]

अत्यन्तकटु गर्जन्नप्यानन्दति हि तार्किकः ।
कर्णारुन्तुदमुद्घुष्यन् सैरिभः किल मोदते ॥६७॥

सद्यो दुहितृवैधव्यदुःखं सह्यतमं भवेत् ।
कवितायास्त्वरसिकैर्हिंसा नूनं सुदुस्सहा ॥६८॥

मातर्वाणि पुरा नूनं महदेनः कृतं त्वया ।
दुस्सहा दुर्विदग्धानां पीडा यदनुभूयते ॥६९॥

शुष्कशास्त्रीयशब्दौघं गृणतामतिमोदतः ।
सुकुमारे सूक्तिपूरे रुचिः केन न जायते ॥७०॥

अनादिरुजया सूक्तिसारस्यारुचिहेतुना ।
जडीभूतं श्रवस्तेषां न रोचेतान्यथा कथम् ॥७१॥

जिह्वाजाड्यचिकित्सां ये प्रोक्तवन्तो महर्षयः ।
कर्णजाड्यस्य तां नैते कष्टं कस्मादवादिषुः ॥७२॥

मृत्पिण्डबुद्धिभिस्साकं सँल्लापो नरकोपमः ।
रासभीसुरतं कस्मै कामुकायापि रोचते ॥७३॥

अचेतनत्वमत्यन्तमरासिक्याद्वरं ध्रुवम् ।
तद्धि नाभासयेत्काव्यमसावन्यथयेद्रसम् ॥७४॥

शृणाति कर्णं वितरञ्छिरः कम्पयतेतराम् ।
खलकरोति खलः कामं अपदेऽपि बतान्धधीः ॥७५॥

परेषामिङ्गितं किञ्चिदजानन् हन्त मूढधीः ।
अभिनेतुं प्रयतते स एवैनं हसत्यहो ॥७६॥

रुद्राक्षमाला भूतिश्च यत्किञ्चिचापि जल्पनम् ।
नीलीकटाहतुन्दश्च निह्नुते पामराञ्जनान् ॥७७॥

स्मेरः पूर्वं समासीनः शिरःकम्पादिसंयुतः ।
बालोऽपि वदतीत्येवं जल्पन् विद्रायते जडः ॥७८॥
अत्यन्तजरठोऽप्यज्ञो नोचितस्सदसोऽन्तरे ।
पञ्जरे लालनीयः किं पेचको नाम जातुचित् ॥७९॥
वृद्ध इत्युपचारस्तु मूर्खाणां नैव सांप्रतम् ।
लाल्यमाना हि शुनका आरोहेयुश्शिरस्पदम् ॥८०॥
मातस्त्वन्महिमाभोगमण्डितं शब्दशासनम् ।
अधीयन्तोऽपि मधुरं वक्तुं नार्हन्ति केचन ॥८१॥
शब्दशास्त्रमधीत्यापि सन्दर्भं ये न जानते ।
अध्वरैरप्सरोमध्यमाप्ताः क्लीबा अमी ध्रुवम् ॥८२॥
शास्त्रं सम्यग्विदन्तोऽपि शाब्दिकाः स्वाप्नभाववत् ।
उपयोक्तुं पदैकञ्च हन्त नार्हन्ति केचन ॥८३॥
हन्ति काव्यरुचिं नूनमादौ शास्त्रपरिश्रमः ।
शैशवादेव संन्यासस्सारसाक्षीसुखं यथा ॥८४॥
अभ्यस्तपदतन्त्राणामाभाषितुमनर्हताम् ।
निरर्थकं जन्म नूनं निधिरक्षकभूतवत् ॥८५॥
कोलाहलेन जल्पन्तु क्रोडपत्राणि वा स्वयम् ।
कर्णयोर्मधुरं वक्तुं कविरेकः किलार्हति ॥८६॥
पदान्युच्चावचान्येके प्रक्षिपन्त इतस्ततः ।
क्लिश्यन्त्यभिनिवेशेन कवयो गाधिसूनुवत् ॥८७॥
अन्विष्यन्तः प्रतिपदं कोशमप्रथितैः पदैः ।
किञ्चिल्लिखन्तो मन्यन्ते स्वं कवीनां शिखामणिम् ॥८८॥
पदैरस्फुटवेद्यैर्यः कवयन् मोदते कविः ।
पाषाणशकलान्येष भक्षयन् कुतुकी भवेत् ॥८९॥
एकोऽपि रसवान् ग्रन्थः श्लाघ्यो नान्ये सहस्रशः ।
सूकरैर्बहुभिः किं वा कलभो लाल्यते नृपैः ॥९०॥

कवित्वकीर्तिदुर्लोभाच्छन्दान मुष्णन्त्यहो शनैः ।
प्रभुत्वलिप्सया गूढं परस्वमिव केचन ॥९१॥
अत्यन्तकठिना नैव कविता स्वादुतां व्रजेत ।
शिलामयवधूगाढाश्लेषो न हि सुखायते ॥९२॥
कवितामुपयुङ्क्ते यः कत्थने क्षुद्रभूपतेः ।
कामधेनुमसौ प्राप्य कर्षेदेव न संशयः ॥९३॥
असूयान्धीकृताः केचिदत्यन्तसरसामपि ।
न पश्यन्ति विदन्तोऽपि परकीयां कृतिं मुदा ॥९४॥
नवपीयूषमधुरकवितापूरचातुरीम् ।
रसयद्भिः कर्णपुटैर्विरतापरवेद्यकम् ॥९५॥
कवितानन्दसन्दोहपरीवाहमिवागतम् ।
परमानन्दबाष्पौघं पातयद्भ्यो दृगम्बुजैः ॥९६॥
वहद्भ्यः परसंस्पर्शे रसभङ्गभयादिव ।
कन्दलद्गाढरोमाञ्चकञ्चुलीच्छादितं वपुः ॥९७॥
कविता-युवतीचित्तकल्हारोल्लासकर्मणि ।
जीवातुभ्यस्तृणप्रायं गणयद्भ्यः परं सुखम् ॥९८॥
पचेलिमतमात्मीयमनीषेभ्यो ममानिशम् ।
रसैकस्पृहयालुभ्यो रसिकेभ्यो नमो नमः ॥९९॥
करुणारसकल्लोलमग्नोन्मग्नमनोऽम्बुजम् ।
सरसापाङ्गसंपातसंमुष्यत्सारसोद्भवम् ॥१००॥
शोभाविजितशुद्धाब्ज-शुश्रूषितसुखासिकम् ।
सुधासूतिशिशूत्तंससुहृद्भूतशुभालिकम् ॥१०१॥
विद्यामहिमविख्यातिकृते पुस्तकहस्तकम् ।
सुधारसस्फुरीरम्यसुषुमामग्नविष्टपम् ॥१०२॥
विशुद्धविद्यासर्वस्वं विवृत्तं तद्विराजताम् ।
महनीयं महः किञ्चिन्मन्मनोमण्टपे सदा ॥१०३॥

अस्तु तुभ्यं नमो मातरसूये किञ्चिदर्थये ।
पश्यतः कृतिमेतां त्वं पण्डितान् दूरतस्त्यजेः ॥१०४॥
कविर्गणपतिश्शास्त्री कच्छपीपदभूषितः ।
कौतुकादित्थमकरोत् कान्तं रसिकभूषणम् ॥१०५॥

इति श्रीमहामहोपाध्याय-पञ्चानाडू-गणपतिशास्त्रिणां
कृतिषु रसिकभूषणं समाप्तम् ।

---

## ग्रन्थनिकषः

[ परीक्षकः—महामहोपाध्यायः श्रीकालीपदतर्काचार्यः ]

**न्यायदर्शनम्** महामहोपाध्याय-श्रीयुक्तफणिभूषणतर्कवागीश-महोदयसम्पादितम् ; प्राप्तिस्थानं—वङ्गीयसाहित्यपरिषन्मन्दिरम् ।

मान्या वाचकमहाभागाः ! न खल्वविदितमिदं भवतां यत् सुविश्रुतनामभिः पण्डितकुलकेशरिभिः प्राचीननवीनोभयतन्त्रस्वतन्त्रमतिभिर्महामहोपाध्याय-श्रीयुक्तफणिभूषणतर्कवागीशमहाभागैः स्वकृत-समुपादेयभूमिका-सुविस्तृतविचारबहुलभाष्यविवरण-भाष्यानुवाद - टिप्पन्यादि - बहूपकरणैरुपस्कृतं सुसम्पादितं कलिकातास्थ-वङ्गीयसाहित्य-परिषत्प्रयत्नेन वात्स्यायनभाष्योपबृंहितं गौतमीयन्यायदर्शनं नाम ।

यदा पूर्वं वङ्गीयसाहित्य-परिषदः प्रयत्नेन प्रथमतः प्राकाश्यमिदमलभत, तदापि संस्कृतसाहित्यपरिषत्पत्रिकायाः सम्पादकभूमिकामधितिष्ठतो ममैवाभूदेतदीयसंख्यातीतगुणविचारसौभाग्यम् । अद्य पुनः कालान्तरेऽपि संस्कृतविद्याया निरवद्यभागधेयप्रसूततद्ग्रन्थसंस्करणप्रकर्षातिशयेनैव तदीयप्रथमखण्डे निःशेषतामाप्ते पुनर्नवीनोद्यमेन भूयांसं प्रयासमङ्गीकृत्य महामहोपाध्यायतर्कवागीशमहाशयैस्तत्खण्डस्य द्वितीयं संस्करणं प्राकाश्यं नीतमासादितमालोचितञ्चास्माभिः ।

प्राचीने काले न्यायदर्शनस्य भाष्यवार्तिकाद्युपबृंहितस्य स्थितेऽपि सर्वतः सम्प्रदायाविच्छेदे कालतो नव्यन्यायाविर्भाव-प्रचारप्रभृतिप्रत्यूह-व्यूहसङ्कटनेन तदालोचनादीनामभितो विघटनाद् वस्तुषु प्रतीकेषु च सुतरां वैकल्यमापन्नमिदं परं दुरधिगमं समजनि। ततश्च प्राचीनन्यायदर्शन-निरूढा दार्शनिकी पद्धतिः क्रमशः क्षीणक्षीणा दर्शनविधया तस्य परितः प्रथितात्मानमपि प्राचीनप्रकर्षं प्रत्याययितुं काले नालमजनिष्ट तत्त्व-जिज्ञासुसमाजेषु। तदेतदन्यैरुपेक्षितप्रायमपि सावधानमवेक्षमाणा महा-महोपाध्यायतर्कवागीशपादाः स्वकीयामनितरसाधारणीं तार्किकप्रतिभां तत्र नियुज्य वस्तुषु प्रतीकेषु च तथा बहुप्रकारं संस्कारमस्य सुसम्पादितवन्तो येन स्वल्पप्रज्ञानाञ्च बहुविदाञ्च सममेव समुपनतेनानेन महानुपकारः पदं कुरुते। किं बहुना यदि गौतमीयन्यायदर्शनस्य वात्स्यायनभाष्योपबृंहितस्य तादृशं तत्त्वार्थविवरणोपकरणं समीचीनं संस्करणं महामहोपाध्याय-तर्क-वागीशपादैः प्राकाश्यं नानेष्यत, तदा ग्रन्थस्यास्य परितः प्रसरदुपेक्षा-गोचरतया क्रमेण प्राचीनन्यायदर्शननिरूढा दार्शनिकपद्धतिः सुधीजन-धियामप्यविषयतामेवालप्स्यत। तदनेन महोपकारेण नूनं सर्व एव दार्श-निकसमाजः श्रीमतां तर्कवागीशपादानामधमर्णतामर्हतीति शक्यं सुदृढं निरूपयितुम्।

अतिरोहितञ्चेदं विशेषविदां यत् कालेन सुधियामपि वस्तुविचार-परा शक्तिश्च शैली च सुपरिणतिमासादयत इति। तत् अत्रापि प्रस्तुते महामहोपाध्यायकृतप्रबन्धे प्रथमखण्डस्य द्वितीये संस्करणे तत्फलभूतानि बहूनि वस्तूनि सुसम्बद्धान्यस्य प्रथमसंस्करणाद् भूयांसमुत्कर्षं सूप-पादयन्ति।

संस्करणेऽस्मिन् महामहोपाध्यायमहाभागैरनेकत्र वस्तूनामुपपादन-रीतिरतिसमीचीना नवीनैव समवलम्बिता। युक्तिप्रमाणाद्युपन्यासोऽप्यत्र सम्यक्तया भूयस्तया च सुविहितः श्रीमद्भिः। अन्यादृशी नाम दार्शनिकी प्रतिभा च शास्त्रज्ञता च तान्त्रिकवस्तुप्रतिपादनस्वतन्त्रता च

श्रीमतां तर्कवागीशपादानां, दैवदिष्टेनैव यासां समन्वयेन तत्कृतिरेषा विशेषतः समुत्कर्षभागिणी दार्शनिकविद्याधिकृतानां महोपकाराय परिकल्पेत। आशास्यते चास्माभिर्यदतः परमपि पण्डितकुलचूडामणयस्तर्कवागीशपादाः सुदुर्गमतत्त्वानां ग्रन्थान्तराणामपि तथाविधसुगमतत्त्वार्थविवरणादिप्रचारणेन शास्त्रविद्यामनवद्यं वर्द्धयन्तः सुदीर्घं निरामयमायुर्लब्ध्वा वसुन्धरायां नामधेयं सान्वयं सम्पादयेयुः।

अन्ते तावत् पूर्वमस्यैव ग्रन्थस्य प्रथमसंस्करणप्रकाशानन्तरमालोचनावसरे यत् किल सम्पादकमहाभागानां चरणप्रान्ते प्रार्थनाविधया प्रस्तुतमस्माभिः, अद्य प्रथमखण्डस्य द्वितीयसंस्करणसमालोचनावसरेऽपि तदेव पुनः सविनयमुपन्यस्य विरम्यते, यथा महामहोपाध्यायमहाभागैरेतद्ग्रन्थभाष्यादिबोधोपधानाय यानि विवरणादीनि प्रस्तुतानि सर्वाण्येव तानि वङ्गभाषामयाणि, नह्यविदितवङ्गभाषा इच्छन्तोऽप्यनायासेन तैरुपकृता भवितुमलंभवेयुरित्यतस्तेषामुपकाराय ग्रन्थस्यास्य सर्वदेशसाधारण्यसम्पादनाय च गीर्वाणवाणीमयी स्वल्पकायापि तदीया सुगमप्रकारा टीका श्रीमद्भिः प्रणीय प्रकाश्यते चेत् पृथिव्यां सर्वस्यामनवद्या प्रथमानसम्माना प्राचीनन्यायविद्या सुचिरं जीविता स्यादित्यलं पल्लवितेन।

---

# उक्तिवैचित्र्यम्

[ निबन्धकः—श्रीहिमांशुप्रसाद-भट्टाचार्य-काव्यतीर्थः, बी, ए ]

अहो युक्तमुक्तं 'खलु "कविप्रकाण्डेन दण्डिना—'वाचामेव प्रसादेन लोकयात्रा प्रवर्तत' इति। निखिलेऽस्मिन् भूमिवलये यद् यत् खलु कृत्यजातं संसाध्यते तत् तद् यथा प्राकाश्यं प्रपद्येत तथा सर्वथैव वाग्व्यवहारमनुरुध्यत इत्यलमनल्पजल्पनकल्पनया। शब्दोच्चारणमन्तरेण वदतां शब्दविन्यासं विहाय वा लेखकानां नैव कालः कदाचित् क्वचिदपि गच्छति।

न हि कश्चित् क्षणमपि किमप्यनुक्त्वा किमप्यलिखित्वा वा स्वकार्यं सुखं साधयितुं क्षमत इत्यत्र किं मृग्यमिव प्रमाणं प्रतिभाति सांसारिकाणाम् ? ज्ञानं वा कर्म वा न खलु किञ्चिदपि सिध्यति विमुच्य वाचां प्रवृत्तिम्। तथाचोक्तं दण्डिनैव—

'इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥'

सिद्धेऽपि नाम वाचो लोकयात्रानिर्वाहकरूपत्वे प्रत्यक्षमस्ति चास्या रूपमपरं वैचित्र्यमयं व्यवहारेषु। देशे देशे भाषा नैकरूपा तत्रापि च प्रयोगश्चित्ररूपः, यदुक्तं कविनागेन माघेन—'अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता' इति। यथैव लोके विचित्ररूपाः खलु चित्तवृत्तयः, तथैव तावद् विचित्ररूपाः खलु वाक्प्रवृत्तयः। परन्तु सत्यपि वाचामनन्तवैचित्र्ये सर्वत्रैव स्फुटान्तरं तावद् द्विविधं वैचित्र्यम्—स्वभावोक्तिर्वक्रोक्तिश्चेति। अत्रापीदानीं 'रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां' मतिभेदमनाकलय्यैव निष्कर्ष एव उत्सर्गतो विधीयते। यो वै जनानां स्वाभाविको वाग्व्यापारो लोकव्यवहारे सन्निधिं व्रजति, स एव साधारणतामापन्नः स्वभावोक्तिरिति कथ्यते। यस्तु स्वाभाविकत्वमतिक्रम्य सम्भाषणादिषु काव्यनाट्यादिषु च चमत्कारकारित्वेन वैचित्र्यावहत्वेन वा बहुशः प्रयोगं प्रति युज्यते, सैवोत्सर्गतो वक्रोक्तिरिति निर्दिश्यते। कविकृतिषु द्वितीययैव दर्शितं प्रभुत्वमित्युपरिष्टात्। उदाहरण एवास्या रूपमाविर्भविष्यति।

या स्वभावोक्तिर्नाम, सा खलु वस्तुनो निजस्वरूपवर्णनतया, आगन्तुकस्वरूपवर्णनतया च द्वैविध्यं नातिवर्तते। केचिदुभयात्मिकामपि स्वभावोक्तिमलङ्कारतया प्रतिपद्यन्ते, अपरे तु द्वितीयपक्षस्यैव विशिष्टोक्तेरलङ्कारत्वमङ्गीकुर्वन्ति। वक्रोक्तिरित्ययं शब्दो बहुधा प्रयुक्तो विदग्धादिभिः। दण्डिना भामहेन वक्रोक्तिजीवितकारेण चैष शब्दोऽलङ्कारगर्भविचित्रशब्दगुम्फरूपत्वेन निरूपितः। रुद्रटेन रुय्यकेण वामनेन काव्यप्रकाश-साहित्यदर्पणादिकारैश्च विशिष्टालङ्काररूपत्वेनैषा गृहीता। अयं चात्र विशेषः—रुद्रटेन शब्दालङ्कार

इति स्वीकृतः, तत् खलु काव्यप्रकाश-साहित्यदर्पणनादिष्वपि दृश्यते। रुय्य-केण तु अर्थालङ्कार इत्यभ्युपेत्य भाषितम्—'वक्रोक्तिशब्दश्चालङ्कारसामान्य-वचनोऽपीहालङ्कारविशेषे संज्ञितः' इति। वामनेनोक्तम्—'सादृश्याल्लक्षणा वक्रोक्तिः' इति, उदाहृतञ्च—'उन्मिमील कमलं सरसीनां कैरवं च निमिमील मुहूर्तात्' इति। दण्डिमतेनात्र समाधिनामको गुण एव विलसति। कादम्बरीकारेण वाणेन 'वक्रोक्तिनिपुणेन विलासिजनेन,' 'एषापि बुध्यत एतावतीर्वक्रोक्तीः' इत्यादि वदता शब्दस्यास्य क्रीडालापः परिहासविजल्पित वाऽर्थः प्रकटीकृतः। अमरुशतकेऽपि—"सा पत्युः प्रथमापराधसमये सख्योपदेशं विना, नो जानाति सविभ्रमाङ्गवलना वक्रोक्तिसंसूचनम्।' इत्यत्र स एवार्थोऽभिप्रेतः प्रतिभाति। कटुवाक्याभिधायकत्वमप्यस्या दृश्यते शुक्रनीतिसारे, तद् यथा—'तीक्ष्णवाक्यान्मित्रमपि तत्क्षणाद् याति शत्रुताम्। वक्रोक्तिशल्यमुद्धर्तुं न शक्तं मानसं सतः।' नैषधीयेऽपि वक्रोक्तिर्वाचो वक्रता वेयं ध्वनेर्विलसितमिति विवृतं वर्तते। केचिदतिशयोक्तिमपि वक्रोक्तिमिच्छन्ति, प्रायेण सर्वेषामलङ्काराणामनयैव वैचित्र्यविधानसम्भवात्। तथाचोक्तं दण्डिना—'अलङ्कारान्तराणामप्येकमाहुः परायणम्। वागीश-महितामुक्तिमिमामतिशयाह्वयाम्।' अत्र तावत् तर्कवागीशपादैर्व्याख्यावसरे व्याहृतम्—"एतदभावे च वैचित्र्याभावेन विद्यमानानामुपमादीनां नालङ्कार-त्वम्, यथा गौरिव गवय इत्यादौ। यदुक्तम्—

'सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥'

अन्यच्च—

'कस्याप्यतिशयस्योक्तिरित्यन्वर्थविचारणात्।
प्रायेणामी अलङ्कारा भिन्ना नातिशयोक्तितः ॥'

इति। एवं सर्वत्रातिशयोक्तिसद्भावेऽपि वैचित्र्यान्तरेणालङ्कारव्यपदेशः,

लोके कोऽपि वदति—'त्वमसि मे प्राणेभ्योऽपि प्रियतमा।' अपरश्चैतदेवान्यथाकारं प्रयुङ्क्ते—

'त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।'

कश्चिदाचष्टे—'सुखादहं दरिद्रतां गतः, अतः, कथं कथमपि याचे।' अन्येन चैतदितरथा प्रयुज्यते—

'नवीनदीनभावस्य याचमानस्य याचने।
वचोजीवितयोर्मध्ये पुरो निःसरणे रणः॥

एको वक्ति—'दारुणं शीतं वर्तते।' अयमेवार्थो भङ्गीक्रमेण भाष्यते—

'नरक्रोडगतो वह्निर्वह्निकोणगतो रविः।
दिवसाः क्षयमायान्ति राजञ्छीतस्य का कथा॥'

भवत्येष प्रयोगः—'राजपुत्रः सर्वथा पितुरेवानुकरोति।' दृश्यते चापरोऽपि—

'न कारणात् स्वाद् बिभिदे कुमारः, प्रवर्तितो दीप इव प्रदीपात्॥'

अविदग्धो वदति—'सुखभागोचितो राजा वनं प्राप्य वापोतरङ्गध्वनिं कोकिलकूजनञ्चाकर्ण्य मयूरनृत्यं च प्रेक्ष्य तुतोष।' कविश्च वैदग्ध्यविलासेन व्याहरति—

'विलासवापीतटवीचिवादनात् पिकालिगीतेः शिखिलास्यलाघवात्।
वनेऽपि तौर्यत्रिकमारराध तं क्व भोगमाप्नोति न भाग्यभाग् जनः॥'

अकवयो वयं ब्रूमः—जले कमलानि प्रफुल्लानि, स्थलेऽपि पद्मानि विकसितानि। काव्यरसिकश्च कवयते—

'विम्बागतैस्तीरवनैः समृद्धिं निजां विलोक्यापहृतां पयोभिः।
कूलानि सामर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः॥'

उक्तिरेषा नैसर्गिकी जनानाम्—'सा तन्वी लतेव सविभ्रमा तथा हरिणीव लोलनयना, सा हि सर्वान् कामान् विहाय तपसि प्रवृत्ता। चित्रोक्तिश्चेयं कवितविलासिनः—

'पुनर्ग्रहीतु' नियमस्थया तया द्वयेऽपि निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टिर्हरिणाङ्गनासु च ॥'

अरसिको भाषते—शरदि नदीतटानि क्रमशो व्यक्तिं भजन्ति । रसिकश्च भणति—

'दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः ।
नवसङ्गमसव्रीडा जघनानीव योषितः ॥'

एषु चोदाहरणेषु प्रयोगाः प्रतिप्रयोगाश्च प्रदर्शिताः । तेषु च पूर्वेषु स्वभावोक्तिः परेषु च वक्रोक्तिः सर्वत्र विलसतीति सुविदितमेतत् कोविद-विशारदानाम् । तत् सुप्रतीतमेतद् यद् यत्र केवलं स्वरूपवर्णनेनैव किमपि चमत्कारित्वं नास्ति तत्रैव स्वभावोक्तिप्रयुक्तिः, यत्र तु वस्तुनः स्वरूपवर्णने प्रवृत्तेऽपि वचनरचनचातुरी भणितिभङ्गीवैचित्र्यं वा प्रभवति तत्रैव स्थिता वक्रोक्तिः । उक्तञ्च काव्यमीमांसायाम्—'विदग्धभणितिभङ्गीनिवेद्यं वस्तुनो रूपं न नियतस्वभावमिति अवन्तिसुन्दरी' । अन्यत्रापि दृश्यते—'वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणो विचित्रैवाभिधा' । 'वक्रत्वं प्रसिद्ध-प्रस्थानव्यतिरेकि वैचित्रम्' । इति, वैदग्ध्यभङ्गीभणितिरित्येव तावत् कुन्तककृतलक्षणम् ।

किञ्च वक्रोक्तिरियं प्रतिभामपेक्षते । प्रतिभयैव लोकोत्तरचमत्कार-वर्णनारूपं वचनवैचित्र्यं सम्भवति । यत खलु नीरसानामपि वस्तूनां सरसतापादकम्, नियतस्वरूपाणामपि पदार्थानामभिनवत्वसम्पादकम्, तत् सर्वमेव प्रतिभोत्थापितं वाचां वैचित्र्यमित्यत्र कः सन्देहः । वक्रवाचो हि कवयः, कविप्रतिभोत्थापिता च वक्रोक्तिः । यदि वैचित्र्यस्यैवालङ्कारत्व-मुररीकृतं ततोऽलङ्कारसद्भावेनैव सिद्धा वक्रोक्तिरिति प्राचीनानां मतम् । उक्तञ्च—

'वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते ।
वक्रवाचां कवीनां ये प्रयोगं प्रति साधवः ॥'

तत्रापि तु दण्डिकविनाऽलङ्कारवत्त्वेनैव वाङ्मयस्य द्वैविध्यमुपपादितम्—

'भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्।' इति।

तन्मते, यथा वैचित्र्यविहीनं स्वरूपाख्यानं तथा भणितिभङ्गीक्रमेण विचित्राख्यानमप्यलङ्कारतया प्रतिष्ठितम्। आद्यं स्वभावोक्तिरन्यत्र तु वक्रोक्तिर्या तावदुपमादिषु सर्वेष्वेव प्रयुज्यते। दृष्टान्तश्च प्रयुक्तो वक्रोक्तेर्यथा—'आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम्। शेषदण्डसमग्राणां किमेषामस्ति दुष्करम्॥' अत्र श्लेषमूलिका उपमा, कविना तु उपमात्वेनैव दृष्टान्तमिममूरीकृत्य श्लेषश्च शोभाधायक इति कथयता व्याख्यातम्—'श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्" इति। अर्वाचीनैस्तु वैचित्रमलङ्कार इत्यभ्युपेत्यापि प्रतिभोत्थापितं स्वरूपाख्यानमेव स्वभावोक्तिः, एकार्थस्य वाक्यस्यान्यथा योजनरूपं वचनं वक्रोक्तिरिति तयोः पृथगलङ्कारतया कृतः सन्निवेशः।

अलङ्काराणामन्यतमा वक्रोक्तिरित्येके, अलङ्कारसामान्यवचनश्चासौ शब्द इत्यपरे। यथा खलु समासानां 'सुप् सुपा', तथैव तावत् अलङ्काराणां वक्रोक्तिरित्येव सहृदयहृदयसंवेद्यं रहस्यम्। परमिदमप्यवधेयम्—न केवलमलङ्कारवत्तया, ध्वनिमत्तया गुणवत्तयापि वक्रोक्तिः पदं लभते काव्यादिषु। अत्रापि च यदि 'काव्यं ग्राह्यमलङ्कारात्', 'सौन्दर्यमलङ्कारः' इति वामनोक्तिमनुसृत्यैव केवलेनालङ्कारशब्देन गुणादिरपि गृह्यते तर्हि अलङ्कारवत्त्वेनैव गतार्था वक्रोक्तिरित्यास्तामतिविस्तरः। यतो लोकोत्तररूपेणावस्थानमेव वक्रोक्तेर्यथार्थं रूपम्। यथोक्तं सम्यगालोचनपरेण लोचनेन—'शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेणावस्थानम्।

तदस्तु तावद् व्यामोहविधायको दुर्वारप्रस्तारविस्तारव्यासङ्गः, नन्वेषा साधारणी स्थितिः स्वीक्रियतां यत् या खलु भणितिभङ्गीक्रमोद्भिन्ना रचना सैव वक्रोक्तिरितरा च स्वभावोक्तिः। वक्रोक्तिश्च सर्वथैव कवीनामुपजीव्या। तत् प्रति तु प्रथितयशसां कालिदासादीनां महाकवीनां चित्रपदेषु निबन्धेषु प्रयोग एव पुष्कलं प्रमाणं प्रतिभाति।

# महाकविकालिदासविषये यत्किञ्चित्

( पूर्वानुवृत्तिः )

. [ निबन्धकः—श्रीदुर्गादासगोस्वामी, काव्य-व्याकरणतीर्थः बी. ए,]

सनातने वर्णाश्रमधर्मे नितरां निष्ठावान् स्वाभीष्टदेवे शिवे च परमभक्तिमानयं महाकविर्बहुषु स्थलेषु सौगतमतं प्रति कटाक्षान् निचिक्षेप। तत्र विक्रमोर्वशीये "वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी"त्यनेन सामान्यतः प्रतिपादितस्य, तथा मालविकाग्निमित्रे शाकुन्तले च प्रत्यक्षाभिरष्टाभिस्तनुभिः सर्वतः परिव्याप्तस्य गौरीपतेः शङ्करस्य गूढव्यङ्ग्यार्थाभिः प्रशस्तिभिः सौगतानां क्षणिकविज्ञानशून्यवादादयो नूनमाक्रान्ताः कविवरेण। वर्णाश्रमधर्मविधयश्च कालिदासेन बहुमानिताः।

इदानीं कालिदासकाव्यानां सामान्यतः समालोचना क्रियते। यथा खलु भवभूतिना "अये कुमार-लक्ष्मणः प्राप्तः" इत्यादिरूपेण पात्राणां प्रवेशः सूचितः, यथा वा "एषोऽस्मि कार्यवशादायोध्यिकस्तदानीन्तनश्च संवृत्तः" इत्येवमादिना एकभूमिकायामवतीर्णस्य पात्रस्य तत्क्षणादेवान्यभूमिकाग्रहणं प्रदर्शितं, नैवंविधा हास्यकरा अस्वाभाविका व्यापाराः कदाचिदपि महाकविना कालिदासेन निबद्धाः। तत्रभवता कालिदासेन दुष्मन्तानुसृतस्य मृगस्य, व्योमयानेन वियति सञ्चरमाणेन दुष्मन्तेन रामचन्द्रेण च पृथिव्याः, समुद्रस्य, गङ्गायमुनयोः सङ्गमस्थलस्य, हिमालयस्य, वशिष्ठाश्रमस्य, तमभिप्रस्थितयोर्दिलीपसुदक्षिणयोर्मार्गस्य, रघोर्दिग्विजयाभियानस्य च हृद्यं वर्णनं कृतम्। एवमन्यान्यपि भूयांसि रमणीयानि वर्णनानि दर्शयितुं शक्यन्ते, विस्तरभिया तु तेभ्यो निवर्तामहे। अभिज्ञानशकुन्तले दुर्वाससः शापावतरणेन महाकविनाऽमुना तावदाद्यन्तं संयमः, शान्तिः, सौन्दर्यञ्च परमव्याहतान्येव रक्षितानि, स्वस्य च प्रतिभोत्कर्षश्चरमः प्रकटीकृतः। सौन्दर्यविश्लेषणादयो विशेषाः कविगुरुणा रवीन्द्रनाथेन

कृते शाकुन्तलसमालोचने द्रष्टव्याः स्वयमनुसन्धित्सुभिः। "गयठे" इत्याख्यस्य जार्मानदेशीयमहाकवेः शाकुन्तलविषयकं मनोज्ञमभिमतं संस्कृतेनानूदितमुल्लिख्यतेऽस्मिन् प्रसङ्गे—

"वासन्तं मुकुलं फलञ्च युगपद् ग्रीष्मस्य सर्वञ्च यद्
यत् किञ्चिन्मनसो रसायनमथो सन्तर्पणं मोहनम्।
एकीभूतमभूतपूर्वमथवा स्वर्लोक-भूलोकयो-
रैश्वर्यं यदि कोऽपि काङ्क्षति तदा शाकुन्तलं सेवताम्॥"

अभिमतमेतदस्माकं रवीन्द्रनाथेन सुष्ठु विश्लेषितं, रहस्यानि सौन्दर्याणि चास्य विस्पष्टमुद्घाटितानि च। तथा शाकुन्तले, एवं मेघदूतेऽपि महाकविना कालिदासेन कर्तव्यस्य सर्वेषामुपरि स्थानं प्रदत्तं, कर्तव्यभ्रष्टस्य च विधातृनिग्रहः केनचिदिव शापव्यपदेशेन भवतीत्यपि गूढं विज्ञापितम्। कुमारसम्भवे शाकुन्तले च प्रदर्शितमनेन यत् कामकलुषिते नायकनायिकयोश्चित्ते न खलु प्रेम पदं करोति। संयमेन, विच्छेदेन, पश्चात्तापेन च विशदीकृत एव चित्ते प्रेम्णः प्रसरः स्यात्। उभयत्रापि तेन स्वर्गात् प्रच्युतिः, स्वर्गस्य पुनः प्राप्तिश्चामुना महाकविना सुष्ठु निपुणञ्च प्रदर्शिते। तथा च दृश्येषु श्रव्येषु च काव्येषु कालिदासेन घटनानां यथायथं चारुतया च सन्निवेश-परिपोषौ कृतौ। "कविरेव प्रजापति"रिति वाक्योक्त-सत्यस्य सर्वथा सार्थक्यं प्रदर्शितवानयं महाकविः। वस्तुतस्तु, चरित्राणां घटनानाञ्च सृष्टिविषये कालिदासेन न सर्वत्रादर्श एवानुसृतः। परं तेन क्वचित् क्वचित् मूलतो कथांशानां चरित्राणाञ्च स्वच्छन्दमन्यथाभावः कृतः काव्यानां सौन्दर्यं प्रति व्यग्रमनसा महाकविना। एतत्तु शाकुन्तलादौ यथास्थानं द्रष्टव्यं बाहुल्यभिया पुनर्विरम्यते। अद्यापि यथा युवकानां युवतीनाञ्च हृदये प्रथमोऽनुरागः सञ्जायते, ततः क्रमेण शनैः शनैः परिपोषं परिणतिञ्च लभते, तथैव तेन पार्वतीपरमेश्वरयोः, उर्वशी-पुरूरवसोः, शकुन्तलादुष्मन्तयोः, मालविकाग्निमित्रयोश्च प्रणयव्यापारे प्रदर्शितम्। विरहिणामद्यापि यादृश्यो दशाः परिलक्ष्यन्ते तादृश्यः कृतास्ता

एव मेघदूते, विक्रमोर्वशीये, शाकुन्तले, मालविकाग्निमित्रे च प्रदर्शितः। यथाऽद्यापि पत्यौ मृते दयितायाः, दयितायाञ्च विनष्टायां वल्लभस्य भावानुभूतिव्यवहारादयो दृश्यन्ते, तथैव मदने भस्मीभूते रतेः, इन्दुमत्यामुपरतायामजस्य भिन्नप्रकारे विलापे दृश्यन्ते। एवमादयो बहव एव भावानुभवव्यवहारादयो नूनमद्यापि सामग्र्येणोपलभ्यन्ते, यतस्ते हि स्वाभाविकाः, सार्वभौमाः शाश्वतिकाश्च। अहो माधुर्यं सौकुमार्यञ्च महाकविना कालिदासेन स्वकाव्येषु व्यवहृतानामभिधानानाम्। श्रूयन्तां तावत् कानिचित्—रेवा, शिप्रा, निर्विन्ध्या, वेत्रवती, मालिनी, विदिशा, उज्जयिनी, उमा, ऊर्वशी, मालविका, चित्रलेखा, निपुणिका, परभृतिका, मधुकरिका। अभिधानेष्वपि महाकवेराभिजात्यं, सौन्दर्यानुभूतिः, सुरुचिबोधश्च विज्ञापितानि।

अपि च तस्य काव्येषु केचिदाधुनिका भावा व्यवहाराश्चोपलभ्यन्ते। यथा कामिनां प्रियाभिः सार्द्धं मद्यादिपानं, यथा अलकायां यक्षादीनां वल्लभाभिः साकं, "हित्वा हालामभिमतरसां रेवतीलोचनाङ्का"मित्यादिना रेवती-बलभद्रयोर्युगपदेकस्मात् चषकात् सुरापानं यथा वा अन्योन्यधृतकरपल्लवयोः प्रेमिकयोर्भ्रमणम्। यथा मेघदूते—

"हित्वा तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत् पादचारेण गौरी।"

यथा वा विक्रमोर्वशीये गन्धर्वराजचित्रसेन-पृथ्वीपरिबृढपुरूरवसोः परस्परं करमर्दनम्। एवमादयो बहवः खल्वाधुनिका व्यवहाराः कालिदासग्रन्थेषु चेष्टयाऽनुसन्धातुं शक्यन्ते। विस्तरभिया तु दिग्दर्शनमात्रमस्माभिः कृतम्। अपरञ्च, परिश्रमस्य मर्यादापि अनेन महाकविना स्वीक्रियते, तत्प्रमाणं यथा शाकुन्तले—

"सहजं किल यद् विनिन्दितं नहि तत् कर्म विवर्जनीयम्।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरपि श्रोत्रियः॥"

यदि नाम महाकविना कालिदासेन रचितानां ग्रन्थानां पौर्वापर्यमनु-

सन्धीयते तदा तेषां रचनाशैली, रुचिभावादीनां परिणतिः, सूक्ष्मतररसादि-बोध इत्येवमादयो बहवो विषयाः पर्यालोचनीयाः। पौर्वापर्यविचारे तु निःसंशयमस्माभिस्तावदृतुसंहारमेव प्रथमतया निर्दिश्यते। यतोऽस्मिन् काव्ये कालिदासस्य कविप्रतिभायाः परिणामोत्कर्षद्योतकं किञ्चिदपि नोपलभ्यते, किन्तु भाविनो महाकवेः सम्भाव्यताया वीजानि संसूच्यन्ते। मन्ये तत्र नः कविः प्रियया सार्द्धं वर्षव्यापि अविच्छिन्नं मेलनमुपभुङ्क्ते, सर्वे च विभिन्नाः षड्ऋतवः किङ्करा इव तमुपचरन्ति नानाशोभासम्भारैः सर्वतोभावेन। अत्र तु लक्षणीयमेतद् यदृतुसंहारं प्रणयिनोर्वर्षव्यापिनो मेलनस्य चित्रं, मेघदूतं पुनर्वर्षव्यापिनो विप्रलम्भस्येति। काममेतद्वक्तव्यं यत् कालिदासेन मेघदूते वियोगस्य यादृगनन्यसाधारणमननुकरणीयं सान्द्रं करुणं, मर्मस्पर्शि च चित्रमङ्कयितुं समर्थो न तादृगृतुसंहारे सङ्गमस्य। तत्र तु आलेख्यानि अपटुसूपकारपक्वानि व्यञ्जनानीव न तथा सान्द्राणि, सन्तर्पणानि, मधुराणि, लावण्यवन्ति रसज्ञानन्दावहानि चेति व्याहर्तुं न कथमपि जिह्मीमः। अमरं गीतिकाव्यं मेघदूतमपि कालिदासेन यौवनारम्भ एव विरचितमिति मन्यामहे। यतोऽस्मिन् काव्ये भावोच्छ्वासकल्पनानामावेगः पार्वत्यनिर्झरिणीप्रवाह इव निरर्गलं प्रसरति। नवे वयसि विद्यमाना तावदुद्दामा प्रेमाकुलता, क्वचित् क्वचिदपि रुचिमलिनता च सम्यग् दृश्येते। किन्तु यौवनरचितमपि मेघदूतं रसभावादिगहनतया समुच्चकल्पनया च नूनमपूर्वमनवद्यमविनश्वरञ्चेति सर्वैः प्रमुक्तकण्ठं भूयांसः साधुवादाः स्थाने खल्वस्मै प्रदीयन्ते। कुमारसम्भवेऽपि महाकविः—निखिलेभ्यः पदार्थेभ्यः कणशो ललितान् सौकुमार्यसम्भारान् समाहृत्य तैः पार्वतीं मण्डयतिस्म, नखादिकेशपर्यन्तं रूपमप्यस्याः सलेशमवर्णयत्। रतिविलापावसरे, पार्वतीपरमेश्वरयोर्मेलनावसरे च कवेर्लेखनी किञ्चिन्निरङ्कुशेवाऽऽभाति। इत्यादिभिर्हेतुभिरिदमपि महाकाव्यमपरिणतवयस्येव ग्रथितमित्यस्माकमाशयः। तथापि वयमेतदङ्गीकुर्मो यन्मेघदूतात् प्रभृति महाकविप्रतिभा नियतमुन्मेषिता। अस्मिन् खलु महाकाव्ये नारद-

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| April, 1941 | १८६२-शकीये चैत्रे<br>२३श-वर्षस्य १२श-संख्या | Vol. XXIII<br>No. 12 |


## वसन्तः


[ निबन्धकः—अप्पाण्णाचार्यः, बी० ए० ]


उष्णैरुष्णोस्र उस्रैस्तनुवनजवनं केवलं भेदयन्स
व्याप्ताम्भोजाप्तनामा भ्रमति जगति हुं ! सप्तके सप्तसप्तिः ।
इत्याधर्षस्पर्धयेव स्वकिरणसरणेर्द्राक्सपीयूषवर्षै-
र्बिम्बं विश्वस्य नीलं ह्रदभिधमचिरात्स्मापयित्वाऽम्बु जन्म ॥
जिहीर्षल्लघु तामर्ककीर्तिं चुम्बति चन्द्रिरः ।
पूर्णिमापूर्णिमः पूर्वधराधरशिरोऽधुना ॥१॥
कान्तिं क्षणादुपचिनोति निजां नवेन्दुः
पुष्पप्रसाधनविधिं त्वधुना मधुश्रीः ।
स्वीयान्गुणान्मृदुलमालयमारुतश्च
स्वस्य प्रतापमबलाह्ननने स्मरोऽपि ॥२॥
सुकुमारमारसुमनोधनुर्गलत्-सुमसायको व्रजति वज्रतां मधो !
स्वयमेव धैर्यकठिने जनेऽपि च विषलेपवद् बत सहायताऽपि ते ॥३॥

जहिहि मानिनि ! मानमरं त्वया युवतितफलमभ्युपभुज्यताम् ।
रतिपतेरिति शंसति शासनं परभृतः स च पञ्चमकूजितैः ॥४॥
"सद्यो जातो मधुर्धैर्यं नश्यत्यद्यैव यद्यलम् ।
किं किं वा संभवेत्साक्षात्सचापेऽनङ्ग आगते ? ॥५॥
विकसितकमलोच्चयस्य मध्य इह विहरद्वरराजहंसचक्रम् ।
इदमनुकुरुते सितस्मितं ते यदद्‌रति विद्रुमरोहिताधरोष्ठे ॥६॥
कान्ते तवाधररसाख्य-मरन्दबिन्दू-
स्तुन्दारविन्दवरतोऽलिरहं निपीय ।
दूरीकरोमि पयइक्षुगुडादिजन्यान
अन्यान रसान षडपि केवलनामभाजः ॥७॥
कथं स्मरशरैः शीर्णः पूर्वमेवाद्य ते सहे ।
भ्रूलताकार्मुकायायिविलोचनशिलीमुखान ? ॥८॥
इत्यादयः श्रुत्यमृताः श्रृङ्गाररसगर्भिताः ।
सल्लापाः कामसन्तान्तद्वन्द्वानां सन्ति सन्ततम् ॥९॥

---

## कुरुक्षेत्रम्

[ निबन्धकः—अध्यापकः श्रीनरेन्द्रनाथ-चतुर्धुरीणः ]

अस्मिन् खलु पुण्यक्षेत्रे भारतवर्षे श्रीकुरुक्षेत्रमार्याणां सुप्रख्यातं तीर्थमस्ति। तीर्थस्यास्य माहात्म्यं श्रुतावपि सुतरामुपवर्णितं दृश्यते। तथा हि—"इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमि"ति जावालोपनिषदि समाम्नातम्। कुरुक्षेत्रं खलु प्रजापतेरुत्तरवेदिरित्युच्यते, अत्र पुरा देवा यज्ञं कृतवन्तः। समन्तपञ्चकमित्यस्य नामधेयान्तरमपि विद्यते। तथा चोक्तं श्रीमहाभारते शल्यपर्वणि—

प्रजापतेरुत्तरवेदिरुच्यते सनातनी राम समन्तपञ्चकम् ।
समीजिरे यत्र पुरा दिवौकसो वरेण सत्रेण महावरप्रदाः ॥"

समन्तपञ्चके यज्ञभूमिकर्षणनिरतस्य प्रथितयशसस्तत्रभवतः कुरुमहीपस्य नाम्ना स्थानमेतत् कुरुक्षेत्रमिति गीयते। तथा चोक्तं तत्रैव—

पुरा च राजर्षिवरेण धीमता बहूनि वर्षाण्यमितेन तेजसा।
प्रकृष्टमेतत् कुरुणा महात्मना ततः कुरुक्षेत्रमितीह पप्रथे॥

पुरा परशुरामस्त्रिः सप्तकृत्वः पृथिवीं निःक्षत्रियां कृत्वा क्षत्रियरुधिरेण समन्तपञ्चके पञ्च ह्रदान् पूरयामास। ते च ह्रदाः पितृवरप्रसादेन तीर्थत्वं गता भुवि विश्रुताश्च जाताः। तेषां रुधिराम्भसां ह्रदानां सविधे ये प्रदेशाः सन्ति तेऽपि समन्तपञ्चकमिति नाम्ना परिकीर्त्यन्ते। तथा चोक्तं श्रीमहाभारते आदिपर्वणि—

त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृतां वरः
असकृत् पार्थिवं क्षत्रं जघानामर्षचोदितः॥
स सर्वं क्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः।
समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान्॥ इति।
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः॥ इति।
तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम्।
समन्तपञ्चकमिति पुरायं तत् प्रकीर्तितम्॥ इति च।

श्रीपद्मपुराणे श्रीमद्भागवतेऽपि समीरितम्—

त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुरि"त्यादि।

अस्मिन्नेव समन्तपञ्चके पुरा कुरुपाण्डवानां घोरं युद्धं समजनि। तथा चोक्तं श्रीमहाभारते आदिपर्वण्येव—

अन्तरे चैव सम्प्राप्ते कलिद्वापरयोरभूत्।
समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः॥ इति।

अस्य सीमामधिकृत्योक्तं श्रीमहाभारते वनपर्वणि शल्यपर्वणि च—

तरुन्तु-कारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च।
एतत् कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते॥ इति।

सरस्वतीं नदीं दक्षिणेन दृषद्वत्या नद्याश्चोत्तरेण 'परम-धर्मिष्ठं भूदोष-

वर्जितं' कुरुक्षेत्रं खलु त्रिदिवोपममिति समामनन्ति मुनयः। अयमेव देशो ब्रह्मावर्त्त इत्याह भगवान मनुः। ब्रह्मावर्त्ते पारम्पर्य-क्रमागतः सान्तरालानां वर्णानामाचार एव सदाचार इति शास्त्रविदः परिभाषन्ते। कुरुक्षेत्रमाहात्म्यमधिकृत्योक्तं श्रीमहाभारते वनपर्वणि शल्यपर्वणि च—

पांशवोऽपि कुरुक्षेत्राद् वायुना समुदीरिताः।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ॥ इति।

कुरुक्षेत्रभूमौ समरनिहताः खलु जनाः स्वर्गलोकमवाप्नुवन्ति। कुरुक्षेत्रमुत्तरेण नदी सरस्वती विराजते। परन्तु सा कालप्रभावेण साम्प्रतमन्तःसलिला एव संजाता। सरस्वत्या वर्णनमृग्वेदेऽप्युपलभ्यते। अस्या जलं नितरां मनोरममासीत्। कविकुलललामभूतेन श्रीमता कालिदासेनापि स्वकृतौ मेघदूते वणितमेतत्। सरस्वतीमाहात्म्यमधिकृत्योक्तं श्रीमहाभारते शल्यपर्णणि—

"सरस्वती सर्वनदीषु पुण्या, सरस्वती लोकसुखावहा सदा।
सरस्वतीं प्राप्य जनाः सुदुष्कृतं, सदा न शोचन्ति परत्र चेह च॥"

अस्मिन कुरुक्षेत्रे बहूनि तीर्थानि विराजन्ते। तेषु 'सन्निहत्ती'—('सन्निहत्या')—महातीर्थमेव नितरां प्रसिद्धिमुपगतम्। पृथिव्याः सर्वाणि तीर्थान्यत्र सन्निहती-महातीर्थं समुपागतानीति तीर्थराजस्यास्य सन्निहतीति नाम जातम्। तथा चोक्तं श्रीमहाभारते वनपर्वणि—

"तीर्थसन्निहनादेव सन्निहत्येति विश्रुता"॥

अमावास्यायामत्र स्नानस्य महत् फलं श्रीमहाभारते वर्णितम्। राहुग्रस्ते दिवाकरे सन्निहत्यायां कृतस्नानो जनः खल्वश्वमेधशतस्य फलमवाप्नोति। सूर्यग्रहणावसरे सन्निहत्यायां स्नात्वा यः श्राद्धं कुरुते स ह्यश्वमेधसहस्रस्य फलं लभते, पापविमुक्तश्च ब्रह्मलोकमवाप्नोति। तथा चोक्तं श्रीमहाभारते वनपर्वण्येव—

सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे।
अश्वमेधशतं तेन तत्रेष्टं शाश्वतं भवेत्॥

अमावस्यान्तु तत्रैव राहुग्रस्ते दिवाकरे।
यः श्राद्धं कुरुते मर्त्यस्तस्य पुण्यफलं शृणु॥
अश्वमेधसहस्रस्य सम्यगिष्टस्य यत्फलम्।
स्नात एव समाप्नोति कृत्वा श्राद्धं च मानवः॥
यत्किञ्चिद् दुष्कृतं कर्म स्त्रिया वा पुरुषेण वा।
स्नातमात्रस्य तत्सर्वं नश्यते नात्र संशयः।
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते॥ इति।

श्रीमहाभारते समुपवर्णितेनानेन तावद् विधिना श्रद्दधानाः पराध्याः खलु मानवा नानादिग्देशादागत्य सूर्यग्रहणावच्छिन्नसमये सन्निहत्या-महातीर्थे स्नानं विदधति, परमानन्दममन्दं च लभन्ते। कुरुक्षेत्रतीर्थवासस्तु महतः पुण्यस्य फलमित्यत्र नास्ति विदुषां काचिद् विचिकित्सा। तथा चोक्तम् वन-पर्वणि

"ब्रह्मवेदी कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम्।
तस्मिन् वसन्ति ये मर्त्या न ते शोच्याः कथञ्चन"॥

---

# महाकविकालिदासविषये यत् किञ्चित्

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीदुर्गादासगोस्वामी, काव्य-व्याकरणतीर्थः, बी. ए.

पूर्वमेवोक्तमस्माभिर्यत् कालिदासः प्राधान्येन प्रेम्णः कविः, विशेषतश्च विरहस्य। मेघदूते, शाकुन्तले, विक्रमोर्वशीये, एवमन्यत्रापि यत्र कुत्रचित् तेन विरहस्य वर्णनं कृतं तत्रैव स सहृदयानां चेतांसि नेत्रपक्ष्मभिः सममार्द्रीकरोति। मेघदूतात् प्रभृत्येव कालिदासस्य काव्येषु सर्वत्र कर्तव्यं सर्वेषामुपरि वरीवर्तितराम्। यक्षो वा शकुन्तला वा य एव कर्तव्यात् प्रच्युतो भविष्यति, तस्यैव विधातृनिग्रहो नूनमवश्यम्भावी। निर्मलनिकषशिलालेख

इव, कामकालुष्यरहिते विरहपश्चात्तापादिभिर्विशदीकृते प्रेमिकयोश्चित्ते प्रेम विगाढमङ्कितं भवति—इत्येवमादयो बहवः समुच्चा आदर्शाः, प्रौढ-प्रगाढोदाराः स्वाभाविकाः सार्वभौमाः शाश्वतिकाश्च भावाः, प्रमार्जिता रुचयः, सूक्ष्मतरो रसभावसौन्दर्यादिबोधः, शोभनमौचित्यज्ञानं, मनुष्यादि-चरित्रेषु प्रसारि मर्मभेदि दृष्टिपातनं, कलाकौशलेषु वैचक्षण्यं, अपूर्वा अनवद्या अनन्यसाधारणी दृष्टिभङ्गी वचनभङ्गी, स्थानकालपात्रानुयायिन्यो मधुरा उपमाः,—इत्येवमादयो बहवः परिणतिसूचका विषयाः सहृदयानां दृष्टिपथमापतन्ति। काव्येषु पौर्व्वापर्यविचारे तु रघुवंशमेव अन्तिमा रचनेति ब्रूमः। यतोऽस्मिन् लेखनी संयता, नायकनायिकानां रूपप्रणय-व्यापारादिवर्णनमपि समासेन व्यञ्जनामुखेन च, न पुनर्मेघदूतकुमारसम्भव-मालविकाग्निमित्रेष्विव सप्रपञ्चं सोच्छ्वासञ्च। रघुवंशविषये तु, समासतो वक्तव्यमेतद् यन्महाकविः कालिदासः प्राक्तनस्य तत्रभवतः कविमुनेर्भासस्य सरणिमनुसृत्यैव नाम महाराजं दिलीपं रघुमजं, दशरथं, रामचन्द्रञ्च वर्णयामास। ततो लवकुशादीनन्यानपि परवर्तिनो नृपतीन् कीर्तयामास। रघुवंशीयानां क्षितीशानां मध्ये आ दिलीपाच्छ्रीरामचन्द्रं यावत् सर्वे राजर्षयो महाकविना भासेन प्रतिमानाटिकायां वर्णिताः। सत्यसन्धस्य प्रकृतिरञ्जनस्य श्रीरामचन्द्रस्य सीतानिर्वासनावसरेऽपि कठोरकर्तव्यबुद्धिरेव सर्वेषां स्वार्थानुध्यानानामुपरि प्रतिष्ठापिता। देवयजनसम्भवाया जनका-त्मजायाश्चारमुखादलीक-लोकापवादं श्रुत्वा—

"अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे"

तथाप्यनेन राज्ञा तस्यै वह्निविशुद्धायै सीतायै स्वस्य गरीयसो यशसो रक्षणार्थं निर्वासनदण्डः प्रदत्तः।

"अपि स्वदेहात् किमुतेन्द्रियार्थाद् यशोधनानां हि यशो गरीयः।"

रामः प्रजारञ्जनार्थं सीतां निर्वासयामासेति तत्रभवान् भवभूति-र्वर्णितवान्। परमस्माकं कालिदासस्य मतेन यशोरक्षणार्थमेवेति। अत्र भवभूतेर्युक्तिरेव ज्यायसी सहृदयानामनुमोदनार्हा चेति ब्रूमः। कालि-

दासस्य युक्तिरत्र स्वार्थपरैवाऽऽभाति। यद्यपि कालिदासेन "वाच्यस्त्वया मद्वचनात् स राजा" इत्यत्र राजपदेन रामस्य कर्तव्यबुद्धिः कटाक्षीकृता, तथापि न तावत् स्फुटः सोऽर्थः, विस्पष्टन्तु यशोरक्षणमेव सीतानिर्वासने कारणत्वेन निर्दिष्टम्। तत्तु न श्लाघ्यं, नाप्यभिनन्दनीयं, नो वा श्रद्धेयम्। विशेषतस्तु प्रकृत्योदारे चारुणि च रामचरित्रे। तत्र पुनर्य एव कालिदासः सीताया निर्वासनादूर्ध्वं तावदादर्शप्रेमिकस्य रामचन्द्रस्य दशावर्णनावसरे "बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः", "कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः", "सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां तस्या एव प्रतिकृतिसखो यत् क्रतूनाजहार। वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः सा दुर्वारं कथमपि परित्यागदुःखं विषेहे"—इत्याद्यवोचत् स एव सहृदयो महाकविः कालिदासो यत् प्रेमप्रतिमां जनकनन्दिनीं केवलमिन्द्रियार्थेत्याचष्ट तत्तु दुनोत्येव विगाढमस्मानिति। न खलु वयमत्र कालिदासं क्षन्तुमर्हामो यथा वा तावदन्ये विमृशन्तु। जनकदुहितुर्निर्वासनवैशसे यः कोऽपि वा हेतुर्भवतु, सहृदयेन कालिदासेन न जात्वयं व्यापारोऽभिनन्दितः। महाकविः कालिदासो यदादिकविगुरोर्वाल्मीकेर्मुखे "उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि। त्वां प्रत्यकस्मात् कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे॥" इत्यादि वाक्यमयोजयत् तत्तु तस्यात्मन एव सीताशोकविदीर्यमाणहृदयस्य निभृतमर्मकन्दरोत्थमतिकरुणसुन्दरमाक्रन्दवचनमिति हि विजानीमः। नाटकेषु पुनरस्य महाकवेर्मालविकाग्निमित्रमेव प्रथममित्याचक्ष्महे। अतोऽस्मिन्नपि मालविकायाः प्रगल्भं रूपवर्णनं दृश्यते। ततो विक्रमोर्वशीयमर्वाचीनम्। अत्र न तादृशी कविप्रतिभा लब्धावकाशा, किन्तु लताभावप्राप्तोर्वशीकस्य पुरूरवसो वियोगेनोन्मादावस्था सर्वथा स्पृशति नश्चेतांसि। नाटकेषु पुनरभिज्ञानशाकुन्तलमन्तिममनवद्यमविनश्वरञ्चेति सर्ववादिसम्मतं वचनम्। भारतीयेषु संस्कृतसाहित्येषु श्रेष्ठतया विचारे तु महाकवेः कालिदासस्य शाकुन्तलं श्रेष्ठं नाटकं, रघुवंशं श्रेष्ठं महाकाव्यं, मेघदूतञ्च श्रेष्ठं गीतिकाव्यमित्यव्यभिचारि

वचः। अस्य पुनर्महाकवेः काव्यानामालोचनप्रसङ्गे तावदेतदपि लक्षणीयं यदस्य काव्येषु न कुत्रचिदपि जीवनसंग्रामस्य विचित्रा घातप्रतिघातादयो वर्णिताः। सर्वत्रैवामुना परिपूर्णः संयमः, अव्याहता शान्तिः, अनवद्य सौन्दर्यञ्च परिरक्षितानि। यथा किल भगवता नीलकण्ठेन देवेष्वमृतादिं विभज्य स्वयं हालाहलं चुलुकायितं तथाऽनेनापि कविना दुःखदैन्यपीडावहेलादयो जीवनस्य रुजावहा विषयाः सम्यगात्मसात्कृत्य परमानन्दसन्दोहरूपं काव्यस्य जीवनस्य च यत्किञ्च स्वादु हृद्यं परमं चरमञ्च फलं तदेव नूनमुपायनीकृतमात्मनः काव्यानां पाठकेभ्यः। इतीदमपि वैशिष्ट्यमपरं कालिदासस्य अन्यकविजनापेक्षया। अयमस्माकं कालिदासः खलु सर्वांशेन कविः। अस्य भणितिषु सर्वत्रैव वस्तुतः कविजनोचिते दृष्टिपद्धतिर्वचनपद्धतिश्च दृश्येते। सर्वाभ्य एवास्य रचनाभ्यः समन्तात् स्फुरति सान्द्रस्तावन्मधुरः कवित्वामोदः। महाकवेः कालिदासस्य तावदाभिजात्यं कल्पनासु, भावेषु, गुणालङ्कारवृत्तादिषु, पात्रादीनामुक्तिप्रत्युक्तिषु किं बहुना, सर्वत्रैव सुस्पष्टमेव विद्यते। न हि खलु तत्रभवता स्वपाण्डित्यं सपटहनादमुद्घोषितम्, किन्तु कुसुमेषु सौरभमिव तत् सर्वत्रैव गूढं वर्त्तते, सचेतसां मानसानि झटिति हरति च। कवित्वमेव तेन सर्वत्र ऊर्ध्वं प्रतिष्ठापितं, न तु पाण्डित्यं, न वा नीतिवचनं, न वा किञ्चिदपरं तत्त्वं प्रयोजनं वा। अस्य खलु महाकवेः काव्येषु कष्टकल्पना, औचित्यबोधविरहः, दीर्घसमासबद्धग्रन्थिलवाक्यपरम्पराः, निरर्थकपदादिप्रयोगः, कृत्रिमकौशलानि, राजनीतिव्याकरणाभिधानादिप्रसङ्गक्रमेण स्वपाण्डित्यकण्डूयनम् —इत्येवमादीनि सहृदयोद्वेजकानि वस्तूनि कुत्रापि प्रमादादपि नापतितानि। नायं महाकविः सुलभैर्कविरिव वर्वरचमत्कारिभिर्वागाडम्बरैर्बुद्धिं विश्रामयति, परं स मुग्धवधूजनपरिवादित-मधुरवीणानिक्वणैरिव रसभावगहनैर्ललितोदारपटुभिर्वाग्विलासैः सहृदयानां चेतांसि प्रह्लादयन्निव, विस्मापयन्निव, विह्वलयन्निव, विकलयन्निव, सम्मोहयन्निव अवष्टम्भयन्निव, लघयन्निव, स्थगयन्निव, विस्फारयन्निव झटित्यावर्जयति। एतत्तु गुप्तनृपतीनां

राज्यशासनपाटवात् शान्तिसमृद्धिमत्ताच्च देशस्येत्यनुमीयते। महाकवेः पाण्डित्यं विसारि शास्त्राध्ययनञ्च सर्वेषां पाठकानां विस्मयमावहतः। तत्र मेघस्योत्पत्तिवर्णने मेघदूते रघुवंशे च अन्यत्रापि बहुषु स्थानेषु ज्योतिषादि-विविधविज्ञानपाण्डित्यमुद्भावितं तेन महाकविना। मेघसन्देशे मेघस्य गन्तव्यत्वेन निर्धारितानां स्थानानां वर्णनावसरे रघुवंशे महाराजस्य रघोर्दिग्विजयायाभियातप्रदेशानां भाषणावकाशे तथा रामचन्द्रस्य लङ्कातो विमानेन प्रत्यावर्त्तनकाले प्रदेशवर्णनसमये च महाकविना पुष्कलं भौगोलिकैतिहासिकज्ञानमाविष्कृतम्। एवमसौ प्रसङ्गतस्तावदन्येष्वपि श्रुति-स्मृतिपुराणेतिहास-शाकुन-रतिशास्त्रादिष्वपि परं प्रावीण्यं दर्शयामास। न कुत्राप्यस्य काव्येष्वौचित्यबोधविरहः, नैरस्यं वैरस्यञ्च दृश्यन्ते।

यच्चामुं महाकविं समालोचकाः केचिदन्यच्छायाजीविनं, च्युतसंस्कार-त्वादिदोषान्वितं, साहङ्कारञ्चाहुस्तन्न समीचीनमिति मन्यामहे। सर्वैरेव कविभी रामायण-महाभारत-बृहत्कथादिभ्यो वस्तु संगृह्य तत्र स्वेषां शक्ति-नैपुण्यादिकं प्रदर्शितम्। पाश्चात्त्यैश्च महाकविभिः सेक्सपीयर-मिल्टन-प्रभृतिभिश्च स्थानान्तराद्वस्तूनि समाकलय्य काव्यानि विरचय्य कल्पान्तस्थायि यशः संलब्धम्। तथाऽस्माकमपि महाकविः कालिदासो रामायण-पद्मपुराण-शिव-पुराणाश्वघोष-भाषादिभिर्बहुषु स्थानेषु प्रभावित इति सुकरमनुसन्धातुम्। न पुनरेतेन तस्य प्रतिभाया मलीमसत्वमापादितम्। नैतद्दूषणं कवीनाम्। कृतित्वञ्च तेषां तत्र तत्र स्वकल्पिते वा स्थानान्तरगृहीते वा वस्तुनि सप्रतिभोत्थशक्तिकलाकौशलसौन्दर्यादिदर्शनं, चरित्र-चित्रणं, पात्राणां मनस्तत्त्वविश्लेषणं, घटनानामानुपूर्व्येण चारुतया च सन्निवेशपरिपोषौ, लोकचरित्रज्ञानं, विविधशास्त्रज्ञानं ललितोचितवाक्यविन्यासचातुरी, रीति-गुणालङ्कारप्रभृतिवाह्यकाव्याङ्गानां रसानुकूलतया प्रयोगः, चिरन्तनानां भावानामनुभावानां व्यवहाराणाञ्च निपुणतया प्रदर्शनं, अङ्गिनं रसं प्रति रसभावादीनां सर्वेषां परिपोषकता, समुच्चा कल्पना, पदपदांशवाक्य-निपातादीनां व्यञ्जकता, यथावद् वस्तूनां लोकादिव्यवहाराणां वर्णनमित्येव-

मादिषु बहुषु काव्यसम्पद्भूतेषु गुणेषु। एते पुनर्गुणाः प्रकामं महाकवौ कालिदासे अन्यापेक्षया लक्ष्यन्ते इति कृत्वा तस्य कथावस्तूनामन्ययोनित्व-निन्दा प्रत्युक्ता। यच्च केचित् कालिदासं च्युतसंस्कारादिदोषभाजं मन्यन्ते, तत्तु पाणिन्यादि-व्याकरणापेक्षयैवेति ब्रूमः, न पुनस्तत्त्वान्वेषिण्या दृष्ट्या। यत्तु महाकविरयं त्रियम्बकादिपदानि प्रायुङ्क्त, तन्न वालिश्यात्। यतोऽनेनैव स्थानान्तरे त्रिलोचनादिपदान्यपि व्यवहृतानि, तानि च वृत्तान्यपि रक्षेयुः। परमनेन महाकविना वैदिकमैतिह्यमनुस्मृत्यैवमादीनि निबद्धानि। अपि च "प्रभ्रंशयां यो नहुषं चकार" इत्यादयः प्रयोगा अपि वेदपाठप्रभावादेव, यतो वेदेष्वपि एतादृशाः क्रियोपसर्गाणां व्यस्तप्रयोगाः प्राज्यं लभ्यन्ते, अथवा अश्वघोष-भासार्यशूर-प्रभृति-प्राचीनकविप्रभावेण तस्येदृशी रचना स्यात्। पश्यन्तु भवन्तः, अनेन महाकविना शाकुन्तले "अमी वेदीं परितः क्लृप्तधिष्ण्याः" इति वैदिकं छन्दोऽपि व्यवहृतम्। तत् सर्वथाऽनेन वेदाध्ययनप्रभावात् प्राचीन-कविप्रभावाद्वा तादृशाः प्रयोगाः कृता इत्येवं प्रतीमः, यथा वा तावदन्ये समालोचकाः समामनन्तु।

प्रथमं ग्रन्थरचने समुद्युक्तस्य कालिदासस्य "पुराणमित्येव न साधु सर्वमि"त्यादि वचनं स्वाभाविकं, न तत्र कमप्यहङ्कारं जानीमः। अमुनैव लब्धप्रतिष्ठेन परिणतवयस्केन च महाकविना रघुवंशे

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥

इत्यादिना यौवनचापलं परिहृतं स्वयमेव। विनयस्य परा काष्ठा च प्रदर्शिता।

उपसंहारे त्वेतदेव विज्ञापयामो यद् व्यायतेऽस्मिन् संस्कृतसाहित्ये नाद्यापि कोऽपि कालिदासस्य प्रतिस्पर्धी समजनि। उत्पत्स्यते च यत् तत्रापि महानस्माकं विशयः। अस्मिन् खलु विचित्रकविपरम्परावाहिनि संसारे कालिदास एव यथार्थं कविकुलशिरोमणिपदवाच्यः सर्वेषां धौरेयश्च। सरस्वती किलैनं पतित्वेन वरयामसेति या किंवदन्ती प्रचलति, तत्रेदमेव

सत्यं निहितं यद् वश्यवागयं महाकविर्लोकोत्तरकवित्वशक्त्या सर्वान् कवीनतिशय्य नूनमम्लानमनोहरयौवनामाकल्पान्तस्थायिनीं कीर्त्तिमुपभुञ्जानः स्वमहिम्ना सहृदयचेतःसु विराजतेतराम् ।

---

# संस्कृत-साहित्ये-भासस्य स्थानम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—शङ्कर-शर्मा महोपाध्यायः ]

अत्र चेदं विचारणीयम्, यदस्य रूपकचक्रस्य स्वकपोलकल्पितत्वम् उत शास्त्रानुसारित्वं वेति। अत्र प्रथमः कल्पो नैव भवितुमर्हति। अनुमीयते चास्य मूलभूतं किञ्चिन्नाट्यशास्त्रमासीदस्य काले, तदनुसारमेव कृतमनेन रूपकम्, तस्य च शाकटायन-काशकृत्स्नादि-व्याकरणवत्कालान्तरे लुप्तप्रचारता समभूदिति। तत्रभवतो भरतमुनेः स्वकीयनाट्यशास्त्रेऽप्या-ङ्गिकाभिनयप्रस्तावे, 'अन्ये,' 'केचित्,' 'अपरे' इत्यादि-मतान्तरप्रस्तावाश्चोपोद्ब-लयन्त्यस्माकममुमूहम्। पाणिनिश्च

"पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः"

"कर्मन्दकृशाश्वादिनिः"

इत्युभाभ्यां सूत्राभ्यां स्मरति नटसूत्रं शिलालिमुनिप्रणीतं कृशाश्वमुनि-प्रणीतं च। किञ्च नटानामाम्नाय इत्यर्थे नाट्यशब्दं व्युत्पादयता "छन्दो-गौक्थिकयाज्ञिक-बह्वृच-नटाञ्यः"—इति प्रस्तुतं सूत्रं पाणिनिना। ततश्च ज्ञायते पाणिनिकाल एव नाट्यशास्त्रस्य प्रचार आसीदिति।

पूर्वोक्तयोरेकतरस्य द्वयोर्वा मतमवलंबैवाऽऽरचितं भासरूपकचक्रमित्यनु-माने न मन्ये कस्यापि विप्रतिपत्तिरस्तीति। नाट्यशास्त्रकालः क्रिस्तोः प्राचीन-द्वितीय-शाकाब्द एवेति निश्चितमेव समालोचकैः।

भासस्य ऋषित्वम्—पाणिनिव्याकरणविरुद्धानां रामायण-भारतादि-काव्येषु सर्वसाधारणानामार्षप्रयोगाणां बहूनामुपलंभादस्य कृतिषु अयमपि कश्चनार्ष-कविर्वाल्मीकि-व्यासवदिति प्रतिभाति। जयाणकप्रणीतस्य-पृथ्वीराज-चरित-काव्यस्य—

"सत्काव्यसंहारविधौ खलानां दीप्तानि वह्नेरपि मानसानि।
भासस्य काव्यं खलु विष्णुधर्मान् सोऽप्याननात्पारतवन्मुमोच" ॥

इति पद्यव्याख्याने जोनराजो भासस्य मुनित्वव्यपदेशं कृतवान्। तद्यथा—"सतां काव्यं तद्विषये संहारविधौ दाहे दोषारोपणेऽग्नेरपि सकाशाद्दुर्जनानां चित्तानि दीप्तान्यजडानि भवन्ति। अत्र साधनमाह—सोऽग्निरपि भासमुनेः" काव्यं विष्णुधर्मान् मुखात् त्यक्तवान् नादहदित्यर्थः।" अतः सार्थको भवत्ययं श्लोकः—

भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥

अनेनास्य "भासमुनि"रिति व्यपदेश आसीदिति लभ्यते।

अर्थशास्त्रकारेण चाणक्येन कालिदास-भट्टबाणादिभिर्महाकविभिराल-ङ्कारिकैश्च प्राचीनैर्दण्डिवामनभामहादिभिर्बहुधा प्रपञ्चितत्वादस्य कृतीनां, रामायण-भारतादि साधारणार्षप्रयोगबाहुल्याच्चायं भासो वाल्मीकिव्यासवदृषिः कविरिति निश्चीयते। अस्य जीवितकालस्तु क्रिस्तोः पूर्वतनपञ्चमशताब्द इति भासनाटक-सम्पादकानां यशःशरीराणां महामहोपाध्यायादिबिरुदभाजां गण-पतिशास्त्रिणां मतम्। हरप्रसादशास्त्रिणश्च भासनाटकगत-प्राकृतपर्यालोच-नयैतन्मतमङ्गीकृतवन्तः।

शास्त्रिमहोदय-प्रभृतयोऽन्ये च केचन विद्वांसो बुद्धचरितकर्त्तुरश्व-घोषस्य, कलिदासस्य, भासकवेश्च प्राकृतपरीक्षयास्य कालः क्रिस्तोः पूर्व-तृतीयशताब्दमङ्गीकुर्वन्ति। सर्वथा क्रिस्तोः प्राचीन एवायमिति निर्विवाद-मेव सर्वेषाम्। केचन

सञ्चितपक्ष्मकपाटं नयनद्वारं स्वरूपतडनेन ।
उद्घाट्य सा प्रविष्टा हृदयगृहं मे नृपतनूजा ॥

इति श्लोकस्य स्वप्नवासवदत्तादुद्धृतत्वेन स्मृतस्य मुद्रितपुस्तकेऽनुपलंभाद्विप्रवदन्तेऽस्य रूपकचक्रस्य कर्त्तृताविषये ।

शाकुन्तलादीनामपि मुद्रितपुस्तकानामेकत्रैव संस्कृतानां परिशीलनेन ज्ञायते महान्तरं भवति प्रतिसंस्करणमिति । एकत्रोद्धृतस्य श्लोकस्यापरत्रादर्शनं यदि कर्तृविसंवादितायां गमकं भवति तर्हि सर्वेषामपि प्राचीनग्रन्थानामियमेव दशा स्यादित्यत्र नास्ति सन्देहलेशोऽपि ।

कविता—रसास्वादमेव सहृदयानां काव्यस्य परमं प्रयोजनमामनन्ति शास्त्रकाराः । सोऽपि रसः श्रव्यकाव्यापेक्षया नितरामर्हति परिपोषं दृश्यकाव्येषु । शब्दार्थयोर्नैसर्गिकं परमं लावण्यमेव रसोत्पत्तावपरिहार्यं साधनम् । ततश्च अपृथग्यत्ननिर्वर्त्यैरलङ्कारैर्ललितपदसन्निवेशैश्च रसभावादिसम्पूर्णैर्भूषयितव्या कविता कविना रसस्फुरणैकदीक्षितेन । सोऽयं नियमस्सुष्ठ्वादृतस्तत्रभवता भासेन । तेन चास्य कृतिषु सर्वासु निसर्गसुकुमारा, ललितपदविन्यासा, सुयुक्तायत्नघटितालङ्कारमण्डिता, सुमाधुर्यप्रसादा (सुप्रसन्ना) सुव्यङ्ग्यरसभावप्रकाशिका सर्वगुणसम्पन्ना च हठादेव प्रेक्षकजनानामावर्जयन्ती स्वान्तानि नटीव विराजतेऽनवद्यं भासकविताकामिनी । अस्य सूक्तान्यनलङ्कृतसुन्दराणि, इतरेषां कालिदासादीनां त्वलङ्कृतसुन्दराणीति भेदः । दृष्टान्तार्थान्तरन्यासोपमादयो द्वित्रा एवालङ्काराः सर्वसाधारणा अस्य कवितासु । विस्तरभयान्नोदाह्रियते । पश्यन्तु च सावधानं पाठकमहाशयाः ।

नाटकेषु तावत्कथावस्तु, तस्यानुरूपा घटना सुपात्राणां संविधानं पञ्चसन्धीनां मुखादीनां सुनिरूपणमित्येते अवश्यानुष्ठेया नियमाः ।

कविनाऽनेन स्वकृतीनां सर्वासां स्वप्नवासवदत्तं, चारुदत्तम् अविमारकं प्रतिज्ञानाटिकां, च वर्जयित्वा रामायण-भारत-भागवत-गतान्येवेतिवृत्तानि स्वीकृतानि । तत्र प्रतिमानाटकाभिषेकनाटके रामायणीयायोध्यारण्य-

किष्किन्धा-सुन्दरयुद्धकाण्डगतां कथामाश्रित्यारचिते, बालचरितं भागवत-दशमस्कन्धीयां कथामाश्रित्य रचितम्। इतराणि भारत-गतकथावस्तुभिर्विरचितानि। कथाघटनायां पात्रनिर्माणे चानुपमेयमस्य सामर्थ्यम्। एकमप्यस्य कथापात्रमूनं वर्त्तत इति न पार्यते वक्तुम्। मुखादीनां पञ्चसन्धीनां तु निवेशनमेकस्य संगृह्यते स्वप्नवासवदत्तस्य।

अत्र नायको वत्सराज उदयनो धीरललितः सचिवायत्तसिद्धिः। तस्य शत्रुजयेन राज्यप्राप्तिः परमं प्रयोजनम्। शत्रुजयेऽपेक्षितदर्शकसाहाय्य-हेतुः पद्मावतीपरिणयः। तस्य "श्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः" इति यौगन्धरायणकृतवासवदत्तासमाश्वासनं। पद्मावती-दर्शने च "भर्तृ-दाराभिलाषित्वादस्यां मे महती स्वता" पद्मावती-परिणये यौगन्धरायणेन सूचितमौत्सुक्यम् आरंभावस्था। पद्मावत्यन्तिके प्रच्छन्नवेषाया वासव-दत्ताया अज्ञातवासः प्रयत्नावस्था, तत्र तत्र उदयनस्य रूपगुणादीनां वासव-दत्तामुखादाविष्करणं पद्मावत्या नायकानुरागे कारणभूतत्वात्। सा च वासदत्तायाः पद्मावतीसमीपे न्यासानन्तरं "हन्त भोः अर्धमवसितं भारस्य" इत्यनेन यौगन्धरायणवाक्येन व्यज्यते। "भर्तृदारिके, दत्तासि वत्स-राजस्योदयनस्ये"ति पद्मावतीधात्रीवाक्येन नियताप्तिस्सूचिता। पद्मावत्याः स्वभ्रातृदर्शकप्रयत्नविज्ञानात्स्वस्योदयनपरिणये "दिष्ट्या तत्रभवतो वत्स-राजस्य अभिप्रेतविवाहमङ्गलरमणीयः कालो दृष्टः" इति विदूषकोक्तथा फलागम उक्तः, "दिष्ट्या परैरपहृतं राज्यं पुनः प्रत्यानीतं" इति महासेनसन्देशेन समग्रफलसम्पत्तिर्निरूपिता। तदुक्तं दशरूपके—

अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः।
प्रारम्भ-यत्न-प्राप्त्याशा-नियताप्ति-फलागमाः॥
अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः।
यथासंख्येन जायन्ते मुखाद्याः पञ्च सन्धयः॥

अत्रानन्यसुलभदर्शनं करुण-शृङ्गारयोरङ्गाङ्गिभावः सुनिवेशितः कविना। वासवदत्ताया अज्ञातवासः त्या प्राप्तेश्च नायकस्य तद्विषयरतिवर्णनं

नायिकायां प्रवासविप्रलंभः नायके वासवदत्ताया नाशविज्ञानात्करुणं च प्रयोजयन्ति। नायिकागुणानां तद्योग्यदर्शनानां च स्मरणम् "इह तया हसितं, कथितं" इत्यादि-ब्रह्मचारिसंवादेन, वासवदत्ताप्रतिकृतिदर्शनावसरे "इदं च मुखमाधुर्यं कथं दूषितमग्निना" इत्यादौ च स्फुटम्।

नायिकायाश्च वासवदत्तायाः— प्रवासविप्रलंभः "का गतिरेषा गच्छामि मन्दभाग्या" प्रभृतिब्रह्मचारिसंवादेन "तर्कयाम्यार्याया गुणान् स्मृत्वा दाक्षिण्यभयान्ममाग्रतो न रोदिती"ति पद्मावतीवाक्येन नायक-विदूषक-संवादाच्छ्रुतैः स्वयं षष्ठाङ्के उत्स्वप्रायमानस्य राज्ञो दर्शनेन प्रत्यक्षीकृतैश्च नायकगत-शोकादिभिरनुभावैरुद्दीपितः, रोदनानलङ्कारादिभिरनुभावितः, निर्वेदचिन्तादिभिर्व्यभिचारिसहितः "दिष्ट्येदानीमपि स्मरति" इत्यत्र परां काष्ठां प्राप्तः। अनयोश्च विप्रलम्भ-करुणयोर्भिन्नविषयतया नैव मिथो वैरुद्ध्यं प्रत्युत तदुपकारकतयाऽङ्गत्वमेवेति प्रपञ्चितमनेन।

पद्मावती-नायकयोरन्यः शृङ्गारः, सोऽपि "आर्ये न जानाम्यार्यपुत्रेण विरहिता उत्कण्ठिता भवामि" इति पद्मावतीवाक्येन "पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः" "लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः" इति नायकवाक्यैश्च प्रगल्भते विवाहकालोत्तयभिव्यज्यमानः।

( क्रमशः )

# नैषधं विद्वदौषधम्

[ निबन्धकः—जोश्युल-सूर्यनारायण-मूर्तीः ]

प्रायशो लोके यद्रविणाऽप्यज्ञातं तत्कविर्जानातीति प्रतीतिः। एतां प्रतीतिमाश्रित्य कवेरविदितो विषयो नास्तीति प्रतीमः। तस्मात्कविस्सर्वविषयवेत्त्व, तथापि एकः कविरेकस्मिन्विषयकथने निपुणो भवति, रसनिरूपणे एको निपुणतरः कश्चिदलंकाररचनायां प्रतिभामाप्नोति, प्राक्तने कविसमाजे कालिदासः शृंगाररसनिरूपणेऽतीव प्रतिभावानासीत्, भारवेः कवित्वं त्वत्यधिकेनार्थगांभीर्येण वर्तते।

इत्थमनेके कवयस्तावदनेकानरचयन् ग्रंथान। किन्तु श्रीहर्षकृतं नैषधम् अधिकार्थगम्भीरतया समंजसै रचनाविशेषैश्च पाठकानां चित्तस्याप्यानन्दकारि प्रसिद्धं विजयते। अस्मिन ग्रन्थे कविना सयुक्तिकं वर्णितमासीत्सर्वमपि, एतस्मिन ग्रंथे दृष्टे कविरस्य महाप्रौढिमशालीति सर्वेषामपि विषयाणां रचनायाम् अतिनैपुण्यवानिति च ज्ञायते।

अपि चास्मिन ग्रंथे सर्वत्रापि उदारभावगुम्भिताः कविना दृश्यन्ते। ग्रन्थोऽयं विदुषामपि सुलभग्राह्यो नासीत, यथा रोगिण औषधसेवा आरोग्यकरी तथैतन्नैषधग्रंथस्य पठनमपि विदुषां ज्ञानरूपारोग्यकारि। तस्मात्सर्वैरपि विद्वद्भिरयं ग्रंथः सविमर्शं पठनीय एव। विदुषामप्यधिकज्ञानप्रदाताऽयं कविः सर्वज्ञः समधिकरचनानैपुण्यवानिति वक्तुं को वा संशयः।

"पवित्रमत्रातनुते जगद्युगे स्मृता रसक्षालनयेव यत्कथा।
कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति॥

कविरयं सर्वविषयज्ञोऽपि, अत्यधिकप्रतिभाशाल्यपि महाविनयसंपन्न इत्ययं श्लोकः कथयति, तथा चास्मिन ग्रंथे विषया रचनाविशेषाश्च पाठकानामत्याश्चर्यविधायिनः शोभंते। उत्प्रेक्षा दृश्यते सयुक्तिका विस्मयकरी चास्मिन काव्ये।

यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममंजिम
तदेव गत्वा पतितं सुधांबुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥"

अत्र चन्द्रस्य कलंकं प्रत्युत्प्रेक्षा, नलस्य जैत्रयात्रोद्धतमेव रजः समुद्रे पतित्वा तज्जस्य शशाङ्कस्य कलङ्कं चकारेति, एतदुत्प्रेक्षापि सयुक्तिका आश्चर्यकरी च पाठकहृदयानन्दिनो च भवति। इत्थमेवानेकत्रास्मिन् ग्रंथे उत्प्रेक्षादयोऽनेके अलंकाराः समञ्जसम् वर्णिताः, अत एवास्य ग्रंथस्य पठनेनालंकारेष्वपि ज्ञानं महदेव भवति।

भावरचनायामप्यस्मिन्नैषधे अधिकः प्रौढिमा दृश्यते।

"अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम्।
मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नलः॥"

अस्मिन् श्लोके धातृलिपेरपि व्यर्थत्वकरणे समर्थो नल इति कविः कथयति। अत्र "अयं दरिद्रो भविते"त्यस्या ब्रह्मलिपेः दारिद्र्यं दरिद्रं भवतीत्यर्थं संपाद्य याचकान् सर्वानपि धनिकांश्चकारेति ज्ञायते। एतद्विधस्य भावस्यात्र कथनेऽतिनैपुण्यमासीत् कवेः।

एवमेवात्र कवेर्बहुमुखानि बहूनि नैपुणानि वर्तन्ते, तानि च प्रौढबुद्धिभिरुद्भावनीयानि। स्वल्पज्ञेन तथा साम्प्रतमेव नैषधेऽधीतिना मया केवलमत्रात्मनोऽतिभूमिं गतस्तोषः प्रकाश्यते बालचापल्यादिति क्षन्तव्योऽहं सद्भिः।

प्रकृतिविलास-काव्ये

# द्विजराजसाम्राज्यम्

[ निबन्धकः—कृष्णमूर्त्ति-शास्त्री साहित्यभूषणः ]

कलयतु कुशलं नः कालकालावतंसः
कुवलयदलनेत्रानन्दसन्दानशीलः ।
सुमशरसुहृदिन्दुस्सूर्यवत्कालमाता
भुवनहृदयहारी व्योम्नि रात्रौ विहारी ॥१॥
चरितुमिदमसीम-व्योम ते सोम सिद्धं
श्रितमधिकमनोज्ञैः किङ्करैर्ऋक्षवर्गैः ।
तव सहमृगदृग्भिः सन्निधत्ते च रोहि-
ण्यतिशयितुमलं त्वां भाग्यवन्तं न कोऽपि ॥२॥
तुहिनरुगजनिष्ठाश्वेतसस्त्वं विराजः
स्फुरसि रविरिव श्रीवासुदेवस्य नेत्रम् ।
अविरतमपि मूर्ध्ना लाल्यसे शूलिना त्वां
निरुपममहिमानं स्तोतुमीशः कथं स्याम् ॥३॥
प्रकृतिशिशिरमूर्तिर्दृष्टमात्रः क्षणेन
व्यपनयसि समस्तं तापमिन्दो मयूखैः ।
परिहरसि सुदूरं शार्वरञ्चान्धकारं
किमपि हृदि विधत्से कौतुकं नः समेषाम् ॥४॥
फलमनुपममिन्दो नेत्रभाजां विराज-
स्यधिवहसि विशङ्कं व्योम्नि सम्राट्पदं त्वम् ।
अपि लसति समन्तादृक्षसंघेऽतिसंख्ये
श्रयति रमणमेव त्वां हि सौभाग्यलक्ष्मीः ॥५॥

अमृतकर गिरां त्वं वर्तमानः सुदूरं
मधुरिमनिधिदेवः प्रेमपात्रं प्रजानाम् ।
भुवि कतिपयशब्दैर्वर्ण्यमानः कथं स्याः
प्रकृतिगुणकथायां क्लेशभाजां कवीनाम् ॥६॥
स्फुरसि निशि शशाङ्कश्शङ्खवत्त्वं नभोऽब्धौ
विहरसि च विहायःपल्वले मल्लिकाक्षः ।
गगननलिनपत्रे भासि दुग्धान्नराशि-
र्लसति मधुरहासो व्योम्नि तन्व्याः प्रकृत्याः ॥७॥
अमृतकिरणजालैर्लोचनासेचनोत्कं-
श्चिरतरमवगाढं सान्द्रमानन्दकन्दम् ।
सहृदयहृदयेऽब्ज स्वैरमंकूरयन द्रा-
गुदयशिखरिशृङ्गं तुङ्गमारोहसि त्वम् ॥८॥
अहिमकरमयूखालोक एवाश्रितस्त्वां
हिमकरमनवद्यं हृद्यमत्यन्तशीतः ।
परिमृशति वितन्वन्सौख्यमङ्गानि भूयः
प्रकृतिरपि विपर्यैत्याश्रयस्य प्रभेदात ॥९॥
गगनसुममसिद्धं सङ्गिरन्तां विमूढा
वियदतुलसरस्यां श्वेतमब्जं सुजातम् ।
प्रकृतिवरपुरन्ध्यास्सर्वसौन्दर्यसारं
रसिकमधुपगर्भं मूर्तमाचक्ष्महे त्वाम् ॥१०॥
अपथि चरितुकामान्द्वीपिकल्पान्खलौघान
सुजनहृदयतापे सन्ततं श्रद्दधानान् ।
रजनिकर धरण्यां लोकमान्यांश्च साधून्
अवसि सममरम्यं तारतम्यं निरस्यन ॥११॥
अहमिह नु पिबेयं त्वां विनिष्पीड्य चन्द्र
द्रुतमिति मतिमेति प्रेमतो मर्त्यलोकः ।

दिवसकृति तु नैवं तत्र किं स्यान्निदानं
हृदयहरणदक्षात्स्निग्ध लालित्यतोऽन्यत् ॥१२॥
अमृतकर मनोज्ञं दर्शनं तावकन्नः
स्थगयति मुदितानां मर्त्यतां जन्मसिद्धाम् ।
अविभरुरमरत्वं त्वामभीक्ष्णं निगीर्य
त्रिदिवमधिवसन्तो नैव चित्रं ह्यमुत्र ॥१३॥
वहसि समधिकं त्वं साह्यमिन्दीवरिण्या
रमण सुमशरस्य स्वान्तजत्वाविशेषात् ।
स कथमितरथोच्चैस्साधयेदात्मलाभं
स्वयमभिनिविशन्ते मित्रकृत्यं हि सर्वे ॥१४॥
निरवधिकरुणाब्धे रक्षितुं जीवलोकान्-
शशधर परिपुष्णास्योषधी रश्मिजालैः ।
भुवि न कतिपये सञ्जानते ते महिम्ना
भवति यदकृतज्ञा दोषमारोपयन्ति ॥१५॥
मधुरिमपरिपोषाधायकं नीलिमानं
प्रकृतिविहितमेतं तावकं श्रीसमेतम् ।
अभिदधति कलङ्कं युक्तिमुत्सृज्य केचित्
किमिव न विवदेरन्कुन्तलेऽपि स्त्रियस्ते ॥१६॥
शमयसि सुमनोभ्यः सादरं स्वं शरीरं
स्वसुखविमुख एष त्वं वितीर्याशनायाम् ।
दिवि भुवि न हि कोऽपि त्वादृगास्ते वदान्यो
गुणनिधिमपि लोको वक्ति दोषाकरं त्वाम् ॥१७॥
भुवि गतमनुगच्छन्नेष लोकः स्वभावात्
प्रलपतु च यथेच्छं चन्द्र मा गा विषादम् ।
गुणगणपरिपूर्णं शङ्करस्त्वां स्वमूर्ध्नां
वहति सततमेतच्छ्रेयसे भूयसेऽलम् ॥१८॥

रघुपरिवृढदारानप्यहो दोषभाजः
कतिचिदचकथंश्चेन्निर्विशङ्कं स्वदर्पात् ।
मृदुतरहृदमीषां त्वं कियान्दुर्जनानां
कथमपि नहि जह्याद् दुर्हृदोऽब्ज स्वभावम् ॥१६॥
कतिपयकृतमिथ्यापोदितात्यन्ततप्तं
हृदयममृतमूर्तेः प्रापदिङ्गालतां द्राक् ।
भवति न च कलङ्को वस्तुतः शीतभानौ
कविरहमभिदध्यां जानतां संशयानान् ॥२०॥
रजनिरमणलक्ष्म प्रेक्ष्य संशेरते ये
स्वयमिह बहुधा ते जानते नैव तत्त्वम् ।
प्रतिफलति सशैलं गोलमुर्व्या विधावि-
त्यभिदधति हि तत्त्वज्ञानिनो निर्विकल्पम् ॥२१॥
विशदजलदखण्डान्मन्दमन्दं विलङ्घ्य
स्फुरसि गगनभागे चन्द्र गच्छन्सलीलम् ।
तदिदमनुकरोति स्वर्णदी-वीचिपुञ्जो-
द्वजनममितदर्पाद्राजहंसस्य रम्यम् ॥२२॥
मलिनजलमुचस्त्वामावरीतुं यतेरन्
श्रुतिपुटकटुशब्दैरस्थिरद्योतभाजः ।
विजयिन इव कामं डंबरञ्चापि कुर्यु-
स्त्यज हृदि भयमेभ्यो वस्तुतोऽधस्तनेभ्यः ॥२३॥
प्रियरमण ! हि रोहिण्यादिवामेक्षणानां
विलसति भवतेन्दो ! हन्त राजन्वदेतत् ।
उडुसमुदयरम्यं व्योमराज्यं सुराज्ञा
प्रकृतिविहितमुच्चैर्बिभ्रता स्वाधिकारम् ॥१४॥
कलयति खलु लेखैः कल्प्यमानः कलानां
मुदमधिकदयां ते व्यञ्जयन्संक्षयोऽपि ।

त्वमिव वद वदान्यः कोऽर्पयेदात्मदेहं
प्रतिदिनमितरार्थे निर्विशङ्कं शशाङ्क ॥२५॥
वितरसि फलमक्ष्णां श्लक्ष्णमूर्तिस्समेषाम्
अधिचिकुरभरं प्राग्दिक्पुरन्ध्याः स्फुरंस्त्वम् ।
भ्रमरनिकरगर्भोन्निद्रमल्लीप्रसून-
प्रकर इव समग्राकल्पकल्पः प्रकामम् ॥२६॥
तिमिरमपि च कृत्स्नं ज्योत्स्नयोत्सारयन्तं
सह निशिमलिनिम्ना हृद्गतेनाखिलानाम् ।
निदधतमुरुलक्ष्मीं स्त्रीदृगिन्दीवराल्यां
कतिचन बत नेत्रैस्त्वामपीत्वा स्वपन्ति ॥२७॥

( क्रमशः )

# काफीपानीयम्

[ निबन्धकः—यं० वि० सम्पत्कुमाराचार्यः ]

अहो ! अतिचित्रं खल्विदम् । यतः परमात्मनोऽप्येतद्भुवि सुविश्रुतं काफीति नाम्ना । यतः परमात्मन एकैकस्यां भाषायामन्यन्नाम प्रसिद्धम् । ( भगवान । पेरुमाळ् । देवरू । Good इत्यादि ) अपि त्वस्य सर्वास्वपि भाषासु "काफी"त्येव नामधेयम् । विश्वसृजैव सृष्टमपीदं तमप्यतिशेते स्वमहिम्ना । किमितः परमाश्चर्यमस्ति !

प्रथमतः, अस्य च पानं भारतीयानामावश्यकं वेति विचिकित्सायां, तन्नावश्यकमेवेति घण्टाघोषं वक्तुमपि प्रभवन्ति केचन । पानविशेषस्यास्य नामापि, प्रायः पञ्चाशद्वर्षेभ्यः प्राक्केनापि भारतीयेन न श्रुतमिति संभावयामि । किन्त्वेतत्पानीयमांग्लैराद्रियते स्म । तेषां भारतदेशं प्रत्यागमनसमये पानविशेषोऽप्ययं तैस्सहैवाजगाम भारतदेशं प्रति । ते तु पाश्चात्याः शीतले देशविशेषे प्रतिवसन्ति । औष्ण्यसंपादनार्थमेतत्पिबन्ति च ।

तेषां त्वेतत्पानीयमावश्यकम्, न परं भारतीयानाम्। यत एते समशीते देशविशेषे प्रतिवसन्ति। ततश्चास्य पानीयस्यावश्यकं भारतीयानां नाधिकतया दृश्यते। अनुपयुक्तेऽप्येतस्मिन्विषये भारतीयास्तानन्वगच्छन्। एतच्चास्मद्देशदौर्भाग्यम्। यतो भारतीयाः सर्वेष्वपि व्यवहारेषु वेषभूषणादिषु च तानेवानुकुर्वन्ति। तत्र चास्माकमनुपयुक्तं, निषिद्धं च आचारादि, तदनुकरणैकमनीषया भारतीयैराद्रियते। भारतीयास्तु, आंग्लादिभिरेव बहुधा बोधिता अपि तदनुकरणं न विमुञ्चन्ति। एते तावत्तद्देशं प्रति न जग्मुः। अत्रैव स्थित्वा तान्नैकस्मिन्विषयेऽनुधावन्ति। ते तु अस्मद्देशं प्रत्यागताः। अत्रैव स्थितिमप्यलभन्त। तथापि तेषां व्यवहारादिकं वा, आचारादिकं वा न तत्यजुः। अस्माकं व्यवहारमाचारादिकं वा ते न किमपि जगृहुः, न गृह्णन्ति ग्रहीष्यन्ति च। तदपेक्षया वयमेव सर्वेषां दृष्टान्तप्राया भवितुमर्हाः स्मः। एतादृशश्च भाग्यविशेषो भगवतैवास्माकं प्रदत्तपूर्वः। किन्तु तद्भाग्यमफलीकुर्वन्तो वयं तदनुकरणविषय एवास्माकमशेषामपि मतिं व्ययीकुर्मः। को वा परमार्थस्तेषामनुकरणस्येति ब्रह्मापि न विजानाति। अस्मत्सकाशादेव तैर्ज्ञातव्यं बह्वस्ति। तत्र न कापि विचिकित्सा। तत्सकाशादप्यस्माभिर्ज्ञातव्यं बहु स्यात्। तथा सति दोषभागमुत्सृज्य उपयुक्तं गुणभागमेव गृह्णीमः। तदात्वे समीचीनतरं स्यात्। केवलं तेषामनुकरणेनास्माकं न कोऽपि लाभो धनव्ययमन्तरा।

आधुनिकास्तु केचन, काफीपायिन एव सुकृतिनः। अन्येषां जन्मापि व्यर्थमिति कथयन्ति। स्वानुष्ठानैस्तत्प्रकटयन्ति च। सामान्यतः, एतत्सेविनां स्नानादिकं नावश्यकम्। किमुत सन्ध्योपासनादिकम्। यदि प्रातः, उषः काल एव वा पिबन्ति पानीयं, तथा कृतकृत्यमात्मानं मन्वते। केचन दन्तधावनादिकमपि वर्जयित्वा, शय्यायामेव पिबन्ति पानीयम्। केचित्तु यदि गृहे भर्जितानि बीजानि नोपलभ्यन्ते, तदाऽन्यगृहादापणाद्वा, भर्जितानि बीजान्याहृत्य, संचूर्ण्य च, पानीयं निर्माय पिबन्ति। तच्छुद्धं वा भवत्वशुद्धं वापि भवतु, शूद्रादिभिरेव भर्जितमपि भवतु, तदेव चूर्णमादाय पानीयं

विरचयन्ति। अस्य सेवनारम्भानन्तरं, अनेके आचारादिका अपि त्यक्ता भवेयुरस्माभिः। यतः केचन महाजना ब्राह्मणादितरैः प्रदत्तमपि काफी-पानीयं पिबन्ति। क्षीरसम्मिश्रितत्वान्न दोष इति समादधते च। किं बहुना, अनेके महनीयाः श्राद्धदिवसेऽपि, पिबन्त्येव काफीपानम्। तदनन्तर-मेवाऽऽचरन्ति श्राद्धादिकम्। काफीसन्त्यागिनो वा, तदनभ्यासिनो वा, त एव सुकृतिन इति मन्ये। इदन्तु पानीयं धनिकमपि निर्धनम्, आतनोति स्वप्रभावात्।

इदं परं चित्रम्। काफीपानेन सन्ति बहवो दोषा इति बहवो विजानन्ति। तथापि तन्न जहति। 'परोपदेशे पाण्डित्य'मितिवत्परानुपदिशन्ति तद्धातुम्। ते परमनुदिनं पिबन्त्येव। आंग्लेया अपि तत्पानाद्बहवस्सन्ति दोषा इत्यभ्युपगच्छन्ति। तथाचोक्तमारोग्यशास्त्रे "काफीपानीयन्तु तत्क्षण-मात्रमाह्लादयति मनांसि। किंतु तत्र "क्याफीन" इत्याख्यो विषपदार्थोऽपि वर्तते। तदर्थमस्य पानीयस्य सेवनात्क्रमशः, अनारोग्यमपि संभवेत्। अपि च काफ्यादि-पानबाहुल्यान्मूत्रादिघटितव्याधयोऽपि संभवन्ति। किंतु, अभ्यासानन्तरं तत्त्यागो बहुकृच्छ्रतरः। पानीयेनानेन द्रविणव्यय-श्चापरिमितः। तत्पानमन्तरा न कापि क्षतिः। तदनभ्यासिनामधिकतरा बुभुक्षापि संजायते।" इति।

विशालेऽस्मिन्भूभागे, भगवन्नामानभिज्ञाश्च लभ्येरन्। न परमस्य पानीयस्य नामानभिज्ञा माणवका अपि।

इत्थं च काफीपानेन धनव्ययमन्तरा न कोऽपि लाभः। अस्ति चेद् रोगादिसंपादनमेव। अस्य तावत्त्यागस्सर्वोत्तमः, तदनभ्यासस्तूत्कृष्टतमः।

# आनन्दलतिका



ॐ नमो गणेशाय

सम्भ्रान्तं नमदुन्नमत्क्षितिलुठद्गीर्व्वाणमूर्द्धावली—
चञ्चच्चामरचारुकुन्तलचयध्वान्तालि-संवर्द्धिनी ।
तेषां फुल्लविलोचनाम्बुजदलान्युल्लासयन्ती परम् (१)
चित्रा तन्नखचन्द्रिकावलिरियं चेतो ममालम्बताम् ॥ १ ॥

सानन्दं वन्दनाय क्षितितलविलसन्मौलिचन्द्रार्द्धमौले-
र्व्यालश्वासप्रदीप्तोद्भटनयनशिखिज्वालया दग्धमर्म्मा ।
शीतांशुः पादपद्मं हिमगिरिदुहितुः शीतलं यो निषण्णः
पीयूषस्निग्धदेहो विलसति नखरः सोऽयमव्याच्चिरं वः ॥ २ ॥

---

नवदूर्व्वादलश्यामं सच्चिदानन्दविग्रहम् ।
कृष्णं जगद्गुरुं वन्दे मोहध्वान्तौघनाशनम् ॥

१। अन्या खलु चन्द्रिका ध्वान्तविध्वंसिनी अम्बुजसङ्कोचकारिणी च, इयं पुनस्तदीय-नखचन्द्रिका उपशुक्लं कृष्णस्य गाढ़ताप्रतीतेः कुन्तलचयध्वान्तवर्द्धिनी नेत्राम्बुजविकाशिनी चेति वैचित्र्याद्व्यतिरेकश्चित्रेतिविशेषणद्योत्यः। विरोधस्तु रूपकवशात् समाधेयः।

२। स्वीयशिशिरकरैः सकलजगन्निर्वाणकारी शीतांशुरपि तत्तापशान्त्यै यत्पाद-माश्रिश्राय तत्पादसमाश्रयणेन युष्माकं सर्व्वे तापा अपगच्छेयुरित्यर्थादापन्नमेव, एतेन हिम-गिरिदुहितुर्नखरस्य सामाजिकावनसामर्थ्यमभिव्यज्यते ।

---

(१) परा इति च

एणीलोचनमिन्दुबिम्बविलसज्ज्योत्स्नां पिकीकूजितं
हंसीमञ्जुगतिं जहार भवती व्यक्तं जगन्मण्डले ।
मच्चित्तं बत कुत्र गोपितमिति व्याहृत्य गोपीस्तना-
न्मुञ्चन् कञ्चुलिकां विचारचतुरो मुग्धो हरिः पातु वः ॥ ३ ॥

अम्भोर्नर्त्तनधूतमञ्जुलजटाश्लेषेण सम्पातितै-
र्गाङ्गैर्वारिभिराशु मुण्डनिवहे ग्रैवीं तनुमाश्रितः । (१)
गौरीमुत्सुकयन् गणांश्च सुखयन् सुस्मेरलम्बोदरो
मातेयं तव जाह्नवीति पितरं संव्रीड़यन् पातु वः ॥ ४ ॥

आकर्ण्य सभ्याः—भोः आनन्दक, साधु, साधु, नान्दीभिर्नन्दिता वयं, किन्तु देवस्य चिन्तामणेः परिणेतृनीततनयानिमित्तमन्याहृद्यं(२) मानसं(३) तदस्य मनोनिर्व्वेदजनकं (क) कमपि(४) प्रबन्धं प्रस्तावय ।

आनन्दकः—आर्य्याः, श्रीमन्नन्दनन्दनचरणसरसीरुहमननपरितुच्छितविषयरस-श्रीदुर्गादासचक्रवर्त्ति-तनयेन पत्नीसहायेन श्रीकृष्णनाथ-(ख) कविना विरचितमानन्दलतिकाग्रन्थमधीतवानस्मि । तद्द यदि देवरुचये भवति ; अथवा श्रीपुरुषोत्तमदेवचरितेन तावदात्मानमपि पवित्रयामि ।

---

३। यद्यपि विचारचतुरस्य भगवतो मुग्धत्वं विरुद्धं, तथापि लीलाविग्रहमाश्रित्य तथाभिनयो न दोषाय । मुग्ध इति तदानीं मुग्धत्वमभिनयन् इत्यर्थः । अथवा मुग्धः सुन्दरः तथाभूतावस्थाभिनयेनातिरमणीय इत्यर्थः ।

(क) मनोनिर्व्वेदजनकं मनसो वैराग्यसमुत्पादकं चित्तस्य विषयान्तराभिनिवेशेन तनयावियोगकष्टोपशमकारिणमित्यर्थः ।

तथाहि—

दीर्घाऽसदालपनगाढ़जड़ां रसज्ञां
शुद्धां करोमि गुणवारिनिधौ विभूनाम् ।
स्वर्वाहिणीपयसि भूरिविधूततुण्डः
काकोऽपि चञ्चुपुटकं विमलीकरोति ॥ ५ ॥

इति सभ्येषु विनिवेद्य नृपतिपुरत उपसृत्य प्रकटितकरपुटकः प्रचलदधरदलः सविनयनमितकन्धरः क्षितिपतिपदनिहितनयनस्तिष्ठति ।

राजा अवलोक्य—अये आनन्दक ! किमपि विवक्षुरिव वीक्ष्यसे, तत् किमिति मौनमास्थितं भवता ।

आनन्दः—महाराज, सम्यगवकलितं देवैः । तथाहि—

अभिनवकविकवितेयं भवति न वा रुचये तदभिज्ञानाम् ।
मुहुरिति वारितचित्तं चटुलयति मां हरेर्गुणानुवादः ॥ ६ ॥

राजा—भो आनन्दक, प्रभुगुणविललितप्रबन्धमधीतवान् भवान्, तदलमेतावता विनयप्रबन्धेन विलम्बालम्बनेनापि ।

आनन्दः—'यथाज्ञापयति देव' इति प्रस्तौति । (१)—

कुरुक्षेत्रं यातैः क्षितिपनिवहैर्भूरिविभवै
र्महारत्नौघानां वितरणभरैर्दीननिकरान् ।

५ । चञ्चुपुटकमिति पुरीषादिभिरपवित्रतां नीतं चञ्चुपुटकमित्यर्थः । विमलीकरणस्य मलक्षापेक्षतया सामान्यवाचकशब्दस्य विशेषलक्षणायाः प्रकृते अवश्यमभ्युपगन्तव्यत्वात् ।

६ । तदभिज्ञानामिति—कवितेयमभिनवकवेरिति जानतामित्यर्थः । तथाहि प्रायेण जना अविविच्यैव हेयतामुपादेयतां वा कवितायाः अभिनवकविकृतत्वविज्ञानात् आदित एव तां परित्यजन्तीति महानयं दैवव्याकोपः ।

(१) तदेव

मह्वाल्यान् कुर्व्वद्भिः क्षुभितकनकाद्रिप्रभृतिभि-
र्म्महेष्वासैरासीत् क्षितिरपि तदा देवभवनम् ॥ ७ ॥

कृतार्थयन् साधुजनेक्षणानि
वित्रासयन् दुर्ज्जनमानसानि ।
आनन्दयन्नागतनन्दमुख्यां-
स्तस्मिन् प्रभुः पौरजनैर्ज्जगाम ॥ ८ ॥

निशम्य लोकैरिह लोकनाथं
स्नेहस्रवत्पीनपयोधराग्रा ।
तदा यशोदा सुतधीविमुग्धा
तद्दर्शनव्यग्रमना रुरोद ॥ ९ ॥

देवोऽपि सद्भावगृहीतमानस (१)
श्चिरेण पित्रोरवलोकलालसः ।
पुरेव बालोचितवेशपेशलो
गोपाकृतिः पादगतिः प्रतस्थे ॥ १० ॥

---

७। क्षुभितेत्यादि—क्षुभिताः तत्तत्प्रदेशेभ्यः रत्नाद्याहरणविक्षोभेण विपर्य्यासं नीताः कनका-द्रिप्रभृतयो यैस्तथाभूतैः अथवा प्रभूतरत्नादिदानेन कनकाद्रिप्रभृतीनामपि दानकीर्त्तिपराभवात् क्षोभं नीताः कनकाद्रिप्रभृतयो यैस्तथाभूताः। देवभवनमिति—धनादिप्रभूतसुखोपायसम्बलनेन सुखेच्छानभिघातात् सुखमात्रोपभोगस्यैव सम्भवेन निरवच्छिन्नसुखात्मकस्वर्गभूमितुल्यता क्षितेरिति भावः।

सुतधीविमुग्धेति—निरञ्जनस्य परब्रह्मरूपस्य भगवतः सुतत्वज्ञानस्य मोहविजृम्भितत्वाद् विमुग्धेति। इदं हेतुगर्भविशेषणम्।

१०। सद्भावेति—सद्भावः पूर्व्वनिरूढप्रणयः तेन गृहीतं मानसं यस्य स इत्यर्थः। अथवा सतः स्वेन अवलम्बितस्य तदा वर्त्तमानस्य मानुषदेहस्य भावः अवस्था तया गृहीतं मानसं यस्य सः मानुषभावानुरूपं व्यवहर्त्तुकाम इत्यर्थः। एतेन भगवतः कथं पित्रोः प्रणय इति चोद्यमपास्तम्। अवेन्द्रवंशावंशस्थविलेन्द्रवज्राभिरूपजातिवृत्तम्।

पुरा वयस्यैर्व्रजबालसंघै-
रालोकितो वर्त्मनि तैर्मुकुन्दः ।
निवेदितोऽथ व्रजनाथपत्न्या
अन्तःपुरन्तूर्णमथाविवेश ॥ ११ ॥

आलोक्य दूरादथ नन्दपत्नी
चिरेण तस्यामलपद्मवक्त्रम् ।
विस्रस्तकेशी श्लथदेहभूषा
स्खलद्गतिस्तत्सविधं जगाम ॥ १२ ॥

तथाकुलां मातरमीक्षमाणो
दयानिधिः कल्पितपादवेगः ।
स्रवद्दृगम्भोजजलन्तदीयं (१)
पदं क्षमामौलिरयं ननाम ॥ १३ ॥

आघ्राय मूर्द्धानममुष्य दोर्भ्या-
मालिङ्ग्य देहं परिपीय रूपम् ।
दृग्भ्यां यशोदा स्रवदश्रुनेत्रा
संरुद्धकण्ठा क्षणमास तूष्णीम् ॥ १४ ॥

वक्तुं समीहाकुलमानसापि
कण्ठातिरोधान्न शशाक मुग्धा ।
कृच्छ्रेण नेत्रे परिमृज्य गोपी
जगद्गुरुं बालमिवावभाषे ॥ १५ ॥

त्वां दुर्लभं निधिमवाप्य चिराभिलाषै-
रालोकनेऽपि विधिना तव वञ्चितास्मि ।
कारुण्यसिन्धुरपि वत्स चिरेण दीनां
मां तापिनीं स्मरसि नैव कथं मुकुन्द ॥ १६ ॥

कौमारनर्मरुचिरामलमन्दहास-
सन्दृश्यमानदशने वदनारविन्दे ।
हैयङ्गवीननवनीतदधीनि तात
विन्यस्य वीक्ष्य यदवापि सुखं क्व तन्मे ॥ १७ ॥

नालोकयामि नवनीरदनीलमङ्गं
नाकर्णयामि जननीत्यमृतं वचस्ते ।
नास्वादयामि नवनीतदधीनि वत्स
जीवस्तथापि कठिनां नहि मुञ्चतीमाम् ॥ १८ ॥

सव्यं प्रसार्य्य करपङ्कजमम्ब देही-
त्युच्चैश्चरं कथयतस्तव बालमूर्त्तेः ।
लोलालकस्फुरितमौक्तिकमिन्दुनिन्दि
वक्त्राम्बुजं हृदि सदैव विलग्नमास्ते ॥ १९ ॥

क्रीडाङ्गनं सहचरास्तव भूषणानि
लीलाविहारनिलयस्तरुणः कदम्बः ।
वृन्दावनं मिहिरजा-पुलिनं प्रियाणि
वस्तूनि वत्स हृदयं सततं दहन्ति ॥ २० ॥

---

१६। दीनामिति कातरभावं गता, न तु सत्यपि तापे मध्यस्था, परं तापापनोदनाय याचमानामित्यर्थः। अथ केषाञ्चिदयं स्वभावो यदसत्यपि तापादौ तदपनोदनं याचन्ते अत आह तापिनीं सत्यमेव तापदःस्थामित्यर्थः। मामिति मातरं मामित्यभिव्यङ्ग्यम्। तादृशार्थे कृते एव स्मृतिरौदार्थ्यात् ।

१७। हैयङ्गवीनं ह्योगोदोहोद्भवं घृतं सद्योजातं घृतमित्यर्थः।

२०। दहन्तीति—सर्व्वेषां तेषां त्वत्सम्बन्धितया त्वदीयस्मृतिमुत्पादयन्तस्ते तवानुपलम्भमानत्वान्मनोवेदनां जनयन्तीत्यर्थः।

तद्वक्त्रविन्यस्तमुखी चिरं सा
नेत्राम्बुनिर्धौततनुं मुरारिम्। (१)
संमृज्य संमृज्य करेण मन्द-
मङ्के निधायैतदुवाच गोपी ॥ २१ ॥

कर्णौ वचोऽमृतरसैर्नयने नवीन-
धाराधरोत्तमरुचा हृदयं नयेन।
आनन्दयन्निह निवत्स्यसि कालमल्पं
किं वा प्रयास्यसि पुरैव विहाय दीनाम् ॥ २२ ॥

इति बहुविधकाकुव्याकुला नन्दपत्नी
यदुपतिमुखपद्मन्यस्तदृष्टिः क्षणेन।
हृदयनिहितशोकज्वालया दग्धदेहा
चकितचकितमङ्गं कम्पयन्ती मुमोह ॥ २३ ॥

मधुरमधुरवाग्भिः पादसंवाहनाद्यै-
र्मृदु मृदु पवमानव्यग्रपाणिद्वयेन।
विषयरसवितृष्णोद्गारिधर्म्मोपदेशै-
र्हरिरिक्षतपरिचर्य्या बोधयामास गोपीम् ॥ २४ ॥

---

२२। नवीनेति—अनुत्सृष्टतोयस्तोयवर्षणोन्मुखमेघो नवीनधाराधरः, तद्वत् उत्तमरुचा लसत्श्यामशोभयेत्यर्थः।

२३। मुखपद्मन्यस्तदृष्टिः मुमोहेत्यनेन पुष्पासवस्य मोहजनकतया कृष्णमुखपद्मासवपानादेव प्रकृते मोहो व्यज्यते इति निपुणाः।

२४। विषयेत्यादि—प्रकृते शोकस्य स्नेहमूलकतया वैराग्यजनकसमुपदेशस्तदपनोदनोपयुक्त इति तथोपदेशदानं सङ्गच्छत इति भावः। गोपीं यशोदामित्यर्थः।

---

(१) नेत्राम्बुधौतवपुं मुरारिं

चिरं प्रियालापकलापकौशलै-
र्वितत्य तेषां हृदयेषु मोदम्।
विधाय तीर्थोचितमाशु देवः
सहैव तैर्द्वारवतीं प्रयातः॥ २५ ॥

आगत्य ते द्वारवतीं निरीक्ष्य
भुक्त्वाऽपि नानारसनिर्म्मितानि।
विनोद्य हृष्टैः स्थिरकौतुकौघैः
प्रसाद्य चेतांसि रहःकथाभिः॥ २६ ॥

विलोप्य धैर्य्यं प्रणयैर्यदूनां
विस्मृत्य विच्छेदजभूरितापम्। (१)
आलम्ब्य बन्धूचितचेष्टितानि
स्वम् ययुः स्वानि पुराणि गोपाः॥ २७ ॥

अथ प्रभाते करिमर्द्दितानां
सरोजिनीनामिव गोपिकानाम्।

---

२५। अत्र प्रथमपादे वंशस्थविललक्षणस्य शेषपादत्रये च उपेन्द्रवज्रालक्षणस्य समन्वयात् उभयसाङ्कर्य्येणोपजातिभेद इति मतम्। तीर्थोचितमिति तीर्थे यथा कर्त्तव्यं तथेत्यर्थः। एतेन नारायणस्य तत्र समधिका श्रद्धा व्यज्यते। तैरिति गोपीभिः गोपैश्च इत्यर्थं एकशेषलभ्यः।

२६। ते गोपाः ययुरिति अनन्तरश्लोकेनान्वय-समाप्तेर्युग्मकम्।

२७। स्वानीति स्वीयत्वेन कल्पितानि तदावासरूपेण कल्पितानीत्यर्थः। आलम्ब्येति-आङ्पूर्व्वस्य लभतेर्हिंसार्थकत्वप्रसिद्धावपि लाभार्थकत्वमनुगृहीतं कविना। अथवा बन्धूचित-चेष्टितानि आलभ्य समाप्येत्यर्थः। तथार्थत्वे चेष्टितानां समाप्तिरेवालम्भनमिति न क्षतिः।

२८। अथेत्यादिश्लोकस्य यथाश्रुतार्थस्तु स्पष्टः। गूढार्थस्तु प्रभातः उद्दीप्तः कः कामः यस्य तेन करिणा मर्द्दितानामिति। एतेन कामातिशय-प्रयुक्त-सम्भोगरसेन गोपिकानामङ्गेषु पर्य्यस्तभावः प्रतीयते। अथच करिपदेन विशेषणलक्षणया हिमकरलाभात् तेन मर्द्दितानां

---

(१) भूरि—विभूरि।

चिरेण गोविन्दसमागमोत्थ-
सुखानि जिज्ञासुरभूत् समाजः ॥ २८ ॥

विमुक्तकेशैर्दरशोणनेत्रै-
र्विमृष्टरागाधरपल्लवौघैः ।
श्लथाङ्गवल्लीनिवहैः सखीषु
निवेदितं ताः पुनरुक्तमूचुः ॥ २९ ॥

कापि—

मामङ्के विनिधाय वीक्ष्य वदनं सास्रं नमन्मौलिना
स्वेनानीतमहार्घरत्ननिवहानङ्गे निवेश्यादरात् ।
आलिप्यानुनयेन चन्द्रघुसृणैः पादद्वये नूपुरा-
रोपेणैव विदूरितश्चिरधृतो मानो मम प्रेयसा ॥ ३० ॥

कापि—

न स्पृष्टं किमपि प्रियस्य मयका तेनाहमाचुम्बिता
दृष्ट्या नाक्षि विमिश्रितं सहचरि प्रत्यङ्गमालिङ्गिता ।
वैमुख्यं मम यत्र यत्र कृतिना तत्रापि सम्पादितं
यन्मौनेन कियत्क्षणोऽपि गमितस्तन्मर्म दन्दह्यते ॥३१॥

---

सरोजिनीनां यथा सङ्कोचो भवति तथैव बहुकालानन्तरं प्रियसम्भोगजनितशरीरवैक्लव्य-प्रकाशलज्जया सङ्कुचितभावो गोपिकानामिति भावो व्यक्तः ।

२९ । दरम् ईषत् शोणानि नेत्राणि तैः, तथात्वञ्च नेत्राणां सम्भोगरसेन निशाप्रजागरादिति भावः । पुनरुक्तमूचुरित्यत्र प्रियसम्भोगवृत्तान्तसंकथनस्यापि सुखहेतुत्वमेव हेतुरन्वेयः ।

३० । सास्रमिति—चिरं प्रियेण विस्मरणात् प्ररूढेन वियोगदुःखेन प्रसुतबाष्पपर्य्याकुलमित्यर्थः । नमन्मौलिनेति मानलिङ्गमुपन्यस्तम् । चन्द्रघुसृणैरिति कर्पूरपरागैः कुङ्कुमपरागैश्चेत्यर्थः, चन्द्रबोधकशब्दानां कर्पूरवाचकत्वात् । पादद्वय इत्यादि मानक्षमापणलिङ्गमुपक्षिप्तम् ।

३१ । न स्पृष्टमिति स्वीयमानभङ्गभयादिति भावः । दृष्ट्येत्याद्यपि तथैव । प्रियाङ्गस्पर्शनस्य प्रियनेत्रेण स्वनेत्रसम्मिश्रणस्य च सहसा मान-भङ्गसाधनताया लोके भूयो दृष्टचरत्वात् । चतुर्थपादेन कथमपि तथावस्थासमाश्रयणं व्यक्तम् ।

कापि—

आलिङ्ग्यानुनयेन पीवरकरद्वन्द्वेन गाढं वपु-
र्मन्त्रामाक्षरमिश्रितेन वचसा सम्बोध्य मां सादरम् ।
मद्वक्त्रे विनिधाय वक्त्रनलिनं नेत्रस्रवद्वारिभि-
र्मानः कामकलाविदा प्रियतमेनामूलमुन्मूलितः ॥ ३२ ॥

कापि—

आयातः प्रणिपातकातरदृशा मद्दृष्टिमानन्दय-
न्नासन्नः करपद्मवक्त्रपुटकेनान्तर्ममोत्कण्ठयन् ।
सुप्तः कामकलाभिरेव रमणः सर्व्वेन्द्रियं मोहय-
ल्लँब्धो नावसरः क्षणोऽपि मयका हृत्तापमावेदितुम् ॥ ३३ ॥

कापि—

मत्पाणिं हृदये निधाय निविड़प्रेम्णा परीरम्भणैः
स्मारं स्मारमपूर्व्वकुञ्ज-चरितान्यश्रूण्यहो मुञ्चता ।
आनम्राननमाशु भूरिविगलच्छ्वासानिलैः प्रेयसा
दीर्घापाङ्गतरङ्गितेन कृतिना तापोऽपनीतो मम ॥ ३४ ॥

---

३२। पीवरकरद्वन्द्वेनेत्यत्र करशब्दोपन्यासः सद्दैवानुनयस्य करतलनिष्पाद्यक्रिया विशेषमपि व्यञ्जयति। तत्र सुमहद्दस्तं योषितां मानापनोदनेषु।

३३। करपद्मेत्यादि—करपद्मपुटकेन वक्त्रपुटकेन चेत्यर्थः। एतेन स्तनपरिसरे अधर-स्थले च कामकलाविलासो व्यक्तः। रमण इत्यस्य व्युत्पत्तिः प्रकृतेऽनुसन्धेया।

३४। मत्पाणिमित्यादि—अन्यथा मत्पाणियुगलस्य वहिरवस्थानेन कथञ्चिन्मानवशा-द्दाच्छेदनमपि परिष्वङ्गं विघटयेदिति भयादिति भावः। परीरम्भणैरित्यत्र परिष्वङ्गैरिति पाठः समीचीनो मन्यते, प्रकृते पाठे परीत्युपसर्गस्य दीर्घत्वासम्भवात्। परीरम्भ इति घञ्-प्रत्ययेन निष्पन्नस्य अनन्तरं करोत्यर्थे इन्प्रत्ययेन कथमपि प्रकृतार्थः समाधेय इति केचित्। अपूर्व्वानन्दविह्वलतया नायिकायास्तथा विच्युतिर्न दोषायेति रसिकाः।

कापि—

लब्ध्वा दुर्लभमिन्द्रनीलजलदश्यामं जगन्मोहनं
स्वान्तस्तीव्रचिरव्यथाविकसने स्तोकोद्यतायां मयि
मद्विच्छेदकृशेन हन्त विगलन्नेत्राम्बुना प्रेयसा
यः कारुण्यपयोनिधिर्व्विरचितस्तत्रास्मि मग्ना परम् ॥ ३५ ॥

वर्षातोयदसुन्दरः स्मितसुधासंसिक्तबिम्बाधरः
प्राणेशोऽद्य ममैकमन्दिरमगात् सम्यग् ब्रुवे ग्रीढ़ितः
युष्माकन्तु मनोरथैः किल पुरैवायं भ्रमः सुभ्रुवा-
मन्योन्यं विवदन्ति गोपललना इत्थं प्रभोर्लीलया ॥ ३६ ॥

अथ जलदतमालश्यामलः कोऽपि बालः
कनकललितहारः फुल्लराजीववक्त्रः ।
शिरसि शिखिशिखण्डः कुण्डलोल्लासिगण्डः
क्वणदधरसुवेणुर्मत्तपारीन्द्रनीलः ॥ ३७ ॥

---

३५। इन्द्रनीलश्याममित्येतावन्मात्रेणैव श्यामवर्णोत्कर्षस्य पर्य्याप्तत्वेऽपि जलद-पदं तृतीयपादोक्त-नेत्राम्बुविगलनमादायापि साम्यरक्षार्थमिति निपुणमतम्। मद्विच्छेद-कृशेनेति—प्रेमातिशयवशात् तथाभिमानः। वस्तुतस्तदानीं श्रीकृष्णस्य न विच्छेदकृशत्वमिति प्राहुः। प्रेयसेति—उभयोर्मध्ये प्रियतरेणेत्यर्थः, एतेन स्वीयपत्यपेक्षया तत्र प्रेमातिशयो द्योत्यते। मग्नेति—तेन स्वान्तस्तीव्रचिरव्यथां स्तोकमपि विकाशयितुमनर्हास्मीति भावः।

३६। वर्षातोयदः जलपूर्णमेघः, तस्यैव स्निग्धनीलवर्णतया प्रकृतोपमानतायां प्रकर्षात्। ममैकमन्दिरमिति—ममैव मन्दिरं, न तु अन्यस्या अपि इति भावः। मनोरथैः किल स्वाभिलाषैरेव इत्यर्थः। स्वमनोरथानुरूपम् तथा युष्माकं सम्भावनम्, न तु तत्तथ्यमिति भावः।

३७। मत्तपारीन्द्रनीलः मत्तभुजङ्गतुल्यनीलवर्णः। मत्तसिंहनील इति वा। न च जलदतमालश्यामल इत्यनेनैव तस्य नीलवर्णतायाः प्रतिपादनात् मत्तेत्यादिविशेषणमपार्थमिति वाच्यम् अस्य विशेषणस्य स्निग्धतायामपि तात्पर्य्याङ्गीकारात्।

मधुरमधुर-वाग्भिर्लोभयन् कर्णकूपान्
चकितनयनपातैः स्तम्भयन् लोचनानि
कलपदपरिहासैर्मोहयन् मानसानि
प्रविशति पुरमध्यं यत्र गोपीकदम्बम् ॥ ३८ ॥

गभीरभावप्रतिबद्धमानस-
स्तासां रहः केलिकथासुलालसः ।
स्मेराननः स्तोकविधूतमौलि-
रुवाच वाग्मी व्रजकामिनीः शनैः ॥ ३९ ॥

कुरुत कुरुत चित्तं गोपवध्वः प्रयाणे
व्रजपतिरयमंहो वीक्षते वोऽद्य वर्त्म ।
अतिनिविड़निबद्धं यत्र कुत्रापि चित्तं
कुरुत सपदि गाढ़ं ब्रह्मभावं हि तत्र ॥ ४० ॥

कति कति जननानि प्रेम वा कुत्र नासीत्
स्मृतिपथमपि नास्ते साम्प्रतं तेन किं तत् ।

---

३८। कर्णकूपानिति बहुवचनेन सर्व्वासां गोपीनामिति सम्बन्धोऽभिमतः। स्तम्भयन् निमेषराहित्येन निश्चलीकुर्व्वन् इत्यर्थः। कलानि अव्यक्तमधुराणि पदानि यत्र तथाभूतैः परिहासैः। अथवा कलेन सशब्दनूपुरसम्बन्धात् अव्यक्तमधुरेण पदेन पदविक्षेपेण तथा परिहासैरित्यर्थः।

३९। गभीरेण दुरवगाहेन, भावेन अनुरागेण प्रतिबद्धं सम्बद्धं मानसं यस्य सः। भारेति पाठे गभीरेण भारेण गुरुत्वेन प्रतिबद्धं स्वैरविहारे अक्षमं मानसं यस्य सः। तासां गोपीनामिति उपसर्जनीभूतेनापि सम्बन्धः। उपजातिवृत्तम्।

४०। अंहो इति अहो इत्यर्थे अव्ययम्। यत्र कुत्रापि वस्तुनि अतिनिविड़निबद्धं गाढ़ाभिनिवेशयुक्तं चित्तं तत्र व्रजपतौ गाढ़ं ब्रह्मभावं ब्रह्मभावयुक्तं कुरुत इत्यर्थः।

४१। कति कति असंख्यानीत्यर्थः। जननानि जन्मानि व्यतीतानीति शेषः। कुत्र कस्मिन् जनने युष्माकमिति शेषः। प्रेम नासीत् तस्मिन् भगवतीति शेषः। अविचक्ष-

अविचलसुखदेहे सर्व्वदा लभ्यमाने
वितरत (१) निजचित्तं ब्रह्मणि स्वाङ्गसंस्थे ॥ ४१ ॥

शिशुनिगदितमेतद्गोपनार्य्यो निशम्य
स्वहृदि कुलिशतुल्यं भाविनं विप्रलम्भम् ।
परिगतमिव तूर्णं मन्यमानास्तदानीं
हरिरयमिति बुद्ध्याऽन्योन्यमेवं समूचुः ॥ ४२ ॥

नानाविहारवचनैस्त्रिदिवोपभोगैः
संवर्द्धितन्तदपि (२) चाकुलमाशु चित्तम् ।
उन्नीय गोपवरमूर्त्तिरभूद्दयालु-
र्लोकोत्तरे प्रणयिनि प्रणयः सुखाय ॥ ४३ ॥

अस्माकमन्तर्गतभूरिभूरि-
तापापनोदाय दयालुनैव ।

---

सुखदेहे स्थिरसुखमयविग्रहे इत्यर्थः । निजचित्तं वितरत तं भावनाविषयं कुरुत । एतेन भावी विप्रलम्भः समुद्घाट्यते ।

अस्मासु ते सदयता प्रथिता जगत्यां
जानाति नाथ चरणं करणीयमत्र ॥ ४७ ॥

समघृतमधुतुल्यः शान्तिशृङ्गारसङ्ग-
स्तदपि हृदयतापं प्रोञ्छयामास तासाम् ।
कुहकरचितसृष्टिप्रान्तरक्षार्थमूर्त्ते-
रयमपि महिमैव प्रादुरासीदपूर्व्वः ॥ ४८ ॥

अथ सहचरगोपान् गोपनार्थं यशोदा-
मनुनयपरिचर्य्यामोहनालापवृन्दैः ।
बहुविधमणिरत्नस्वर्णवैदूर्य्यदानै-
र्यदुपतिरनुनीय प्रेषयामास कृच्छ्रात् ॥ ४९ ॥

---

पाङ्गवीक्षणेनापीत्यर्थः । का कथा विकस्वरदृष्टेरिति भावः । निस्तरामः संसारबन्धनात् मुक्ता भवाम इत्यर्थः । अथवा कं सुखं सुखकरमित्यर्थः, आरुण्यं अरुणिमा यत्र तथाभूता अनुरागरक्तेत्यर्थः दृष्टिः तत्कणया सानुरागापाङ्गवीक्षणेनेत्यर्थः । हे नाथ अत्र ईदृशावस्थायां करणीयं चरणम् आचरणं सदयता एव जानाति । दयया यत् कृत्यं तत् कुरु इति भावः ।

४८ । मधुसर्पिर्यथा विषमिति शास्त्रेण मधुना सह घृतस्य योगेनोपयोगात् विषभोजनप्रभवस्ताप एव सम्भवति प्रकृते तथापि तापापनोदनविरोधः साम्यैश्वर्य्याभ्यां समाधेयः । कुहकेन मायया रचिता आयोजिता सृष्ट्यर्थां प्राप्तायां प्रलयार्थां [illegible] रक्षार्थां मूर्त्तिः यथाक्रमं ब्रह्मरुद्रविष्णुप्रतीकं येन तस्य । अपूर्व्व इति अभिनवः अन्यत्राननुभूतपूर्व्व इत्यर्थः । एतेन भगवतो महिम्नामनन्यसदृशत्वमुपगम्यते ।

४९ । कृच्छ्रादिति—अतिदुःखादित्यर्थः । तच्च दुःखं गोपादीनामेव, तेषामेवाविद्यावृतान्तःकरणतया अविद्याप्रभवदुःखसम्भवात्, भगवतस्तदभावेन तदभावात् । अथवा गोपादीनामेव प्रियतमश्रीकृष्णवियोगसम्भावनया वास्तवं दुःखं, नारायणस्य तु माहात्म्यमेव तदिति भावः । बहुविधेत्यादिना नारायणस्य नानाविधलौकिकोपकरणनिर्म्माणेन गोपादिदुःखोपशमनप्रयासो व्यज्यते ।

तत्तत्प्रयाणसमयेऽशनिपाततुल्य-
मानन्दकन्दहरिसङ्गवियोगदुःखम्।
गोप्यस्तदीयकमनीयरसालमूर्त्ति-
मन्तर्निधाय विहरन्त्यत एव नापुः ॥ ५० ॥

गाढ़ानारतमर्म्मशातनपटुस्नेहैकशल्यं द्विधा
कृत्वार्द्धं विनिधाय यादवकुले नन्दे व्रजं गच्छति।
गोपीनां करुणार्द्रलोचनशरैर्भिन्नान्तरो दुर्म्मनाः
पूर्णानन्दवपुस्तथापि भगवान् विश्वम्भरस्ताम्यति ॥ ५१ ॥

तूष्णीं बालगणाः शुकादिविहगा मूकाः क्षुधार्त्ता अपि
धीरोऽप्यानकदुन्दुभिर्निरुपमाधैर्य्याब्धिरेवाभवत्।
आभीरीप्रणयेक्षणैर्निजगुणव्यक्कारवत्योऽङ्गना
बाल्यं क्रीड़ितमाकलय्य जननी दूना परं देवकी ॥ ५२ ॥

---

५०। अशनिपाततुल्यमित्यस्य लक्षणया अशनिपातजनितदुःखतुल्यमित्यर्थः। वियोगजनिते दुःखे तथाविधदुःखसादृश्यस्यैव प्रतिकूलवेदनीयतालक्षणस्य साधुत्वात्। अथवा अशनिपातानन्तरं दुःखानुभवस्य तद्देहावच्छेदेन असम्भवात् अशनिपात एव प्रतिकूलतया ज्ञायते वियोगानन्तरन्तु दुःखानुभवः तद्देहावच्छेदेनैव अतः अशनिपातेनैव सादृश्यमुपन्यस्तम्। अतएव सूक्तमभियुक्तैः 'अशनेः पतने न वेदना पतनज्ञानमतीव दुःसह'मिति भावः। अन्तर्निधायेत्यादि—तथाहि तदानीमन्तःकरणावच्छेदेन तदीयमूर्त्तिसम्पर्कात् वियोगस्य दुःखकारणस्य विज्ञानविरहात् न तज्जन्यदुःखभोग इति भावः।

५१। यादवकुले कृष्णस्य परमस्नेहभाजनस्य अवस्थानात् तत्र अर्द्धं निधाय व्रजस्य जन्मभूमितया तत्राप्यत्यासङ्गेन तदर्थम् अर्द्धम् आदाय। अन्यथा रागस्य प्रवृत्तिजनकतया व्रजार्थमर्द्धभागासत्त्वे तत्र गमनप्रवृत्तेरेवासम्भवादिति भावः। ताम्यतीत्यस्य लौकिकभावप्रत्यायनाय तापमभिनयतीत्यर्थः। अन्यथा तस्य भगवतः पूर्णानन्दरूपतया तादृशदुःखभोगस्य विरोधात् वाक्यासङ्गतेः।

५२। तूष्णीमित्यादि—एतावती दिवसान् गोपप्रभृतिसमन्वयेन परमानन्दसम्पत्त्या महोत्सवस्य सम्प्रति गोपादीनां प्रस्थानादभावमुपलभ्य बालादीनां तथात्वम् इति भावः। वसुदेवस्य स्वभावधीरतामतिक्रम्य अधैर्य्यस्य प्रभावसूचनार्थम् अधैर्य्ये निरुपमत्वविशेषणम्।

नोद्धवादिरपि गोपनन्दनान्
रुक्मिणीप्रभृतयो न वल्लवीः ।
न प्रभू च पितरौ व्रजेश्वरौ
चेतसो गमयितुं रमापतेः ॥ ५३

सभ्याः—साधु भो आनन्दक ! साधु, उचितप्रस्तावैर्वयमानन्दिताः ततः ।

आनन्दः—

अत्रान्तरे पुलकपूरितदेहवल्लि-
मानन्दजेन नयनाम्बुभरेण सिञ्चन् ।
दूराद्विभोः समवलोकनमुग्धचेताः
श्रीनारदः क्षितितलं मुनिराजगाम ॥ ५४

तं नारदं वीक्ष्य सुदूरतोऽपि
विहाय सिंहासनमाशु देवः ।

---

अङ्गनाः यादवकुलवसतयोनार्य्यः। वाल्यमित्यादि—तथाहि यशोदया सार्कं श्रीकृष्णस्य बालकोचितजननीकाम्यपुत्रव्यवहारं स्वेन कदाप्यननुभूतमाकलय्य परं दूना दुःखमापवतीति भावः ।

५३ । उद्धवादिः गोपनन्दनान् बन्धुभूतान् गोपबालान् रमापतेः चेतसः हृदयात् गमयितुं अपसारयितुं तं विस्मारयितुमित्यर्थः । न प्रभुः । रुक्मिणीप्रभृतयः दयिताः वल्लवीः गोपिकाः प्रणयिनीरित्यर्थः चेतसो गमयितुं न प्रभवः । पितरौ देवकीवसुदेवौ व्रजेश्वरौ नन्दयशोदे चेतसो गमयितुं न प्रभू इति सर्व्वत्र वचनव्यत्ययेनान्वयः कार्य्यः । एतेन श्रीकृष्णस्य उद्धवाद्यपेक्षया गोपनन्दनेषु सख्याभिमानः रुक्मिण्याद्यपेक्षया गोपिकासु प्रेमाभिमानः देवकीवसुदेवापेक्षया नन्दयशोदयोः पुत्रोचितभक्त्यभिमानः प्रकृष्टतया व्यज्यते ।

५४ । पुलकेति—अनेन नारदस्य भगवद्विषयरत्याख्यः सात्त्विकभावो द्योत्यते । विभोः भगवतः श्रीकृष्णस्य । मुग्धचेता इति हेतुगर्भविशेषणम् । अन्यथा विभोः श्रीकृष्णस्य सर्व्वगतत्वं विजानतोऽपि नारदस्य तद्दर्शनार्थं क्षितितलागमनासङ्गतेरिति ।

जगाम तस्यान्तिकमेव तूर्णं
भूमिं पदाब्जै रवमण्डयन् सः ॥ ५५

योगीन्द्रवृन्दैरभिवन्दितोऽपि
ब्रह्मेशजम्भारिभिरर्च्चितोऽपि ।
तदंघ्रियुग्मे जगदेकनाथो
दण्डो यथा मारकतः पपात ॥ ५६

हृदम्बुजारूढ़पदारविन्द-
समाधिसंसक्तमना मुनीन्द्रः ।
अर्घ्येण पाद्येन गिरा च मृद्व्या
संवर्द्धितो नैव बहिर्द्दंगास ॥ ५७

तं नारदः क्षितिमिलद्वपुषं प्रयत्ना-
दुन्मील्य नेत्रयुगलं चकितं विलोक्य ।
आनन्दजेन नयनाम्बुभरेण फुल्ल-
रोमावलीकुशचयैः प्रददौ वरान् सः ॥ ५८

---

५५। अन्तिकमेवेत्येवकारस्य तूर्णमित्यनन्तरमन्वयः कार्य्यः, तथैव नारदे भगवतः समादरातिशयप्रतीतिः। पदाब्जैरिति चरणकमलपातैरित्यर्थः।

५६। ब्रह्मेशजम्भारिभिः ब्रह्ममहेश्वरसुरेन्द्रैः अर्च्चितोऽपि पूजितोऽपि। अनेन ब्रह्माद्यपेक्षयापि नारदस्य महत्त्वं व्यज्यते। मारकतो दण्ड इति—नारदस्य पीताम्बरतया वसनांशगतं पीतत्वमादाय मारकतदण्डसाम्यं नारायणशरीरे अवधेयम्।

५७। नारदस्य हृदम्बुजेत्यादिविशेषणेन मनसः अभ्यन्तरावच्छेदेन संयोगात् वहिर्व्विषयावच्छेदेन संयोगाभावात् निरुक्तविषये ज्ञानाभावः। तेन कथं नारायणभक्तेन नारदेन नारायणतया विज्ञातस्यापि नारायणस्य पूजा नकृतेति शङ्का निरस्ता।

५८। कुशैर्वरप्रदानाचारात् तदानीं कुशाभावात् रोमावल्या एव कुशत्वमारोपितम्।

कश्चिद्गिरा कश्चिदथेक्षणेन
सन्तोष्य धीरः सह तैर्मुनीन्द्रः ।
करेण संगृह्य करं मुरारेः
पुरं विवेशाथ कलिन्दजायाः ॥ ५९

यत्राम्बुधिध्वनितिरस्करदुन्दुभीनां
ध्वानान्निपत्य जलदाः स्फटिकस्थलीषु ।
आपीय सेकघनसारपयांसि सुप्ताः
सोपानतामुपगता इव नीलशैलाः ॥ ६०

यस्मिन् सुकण्ठ-जनगानक्रियातिमूके
पुंस्कोकिले पिकवधूनिवहाः सदैव ।
श्रीमद्वसन्तसमयेऽपि विमुच्य नीड़-
मायान्ति यान्ति सविधं किल गायकानाम् ॥ ६१

यत्र त्वकीकरगतिं पवनोऽवलोक्य
लज्जातुरो लघुगतावुरुजातकीर्त्तिः ।
भूमीरुहं चलदलं प्रतिलभ्य गाढ़-
मभ्यस्यति द्रुतगतिं न तु याति पारम् ॥ ६२

---

५९ । कलिन्दजायाः कलिन्दनन्दिन्या यमुनाया इत्यर्थः । यमुनाया जलमयत्वेऽपि तदधिष्ठात्र्या देवतायाः सचेतनत्वात् दैवेयमिति मन्तव्यम् ।

६० । अम्बुधिध्वनिं तिरस्कुर्वन्ति ये ते अम्बुधिध्वनितिरस्कराः तेषां दुन्दुभीनां । सुप्ता इत्यनेन तेषामचलत्वद्योतनात् सोपानसाम्यमुपक्रान्तम् । पयांसि आपीय इति च नील-शैलसाम्यरक्षार्थं, पीतजलस्यैव मेघस्य नीलवर्णत्वात् ।

६१ । गानक्रियेत्यत्र 'प्रक्रे' वे'ति नियमानुरोधः कर्त्तव्यः । द्वितीयार्द्धेन सत्यपि वसन्त-समयोन्मादे प्रियनीड़ं परित्यज्य गायकसमीपे पिकवधूनां गतागतिवर्णनात् गायकानां कण्ठस्य सुतरां मनोहरत्वं व्यज्यते

यत्रावला अलकमौक्तिकमेघवारि-
विन्दुभ्रमागतखगान् विनिवारयन्ति।
यत्रेन्दुदीधितिधियापि कुरङ्गजन्या-
मेकावलीषु निपतन्ति मुहुश्चकोराः ॥ ६३

यत्रोर्द्धहर्म्यविनिविष्टसखीमुखेन
लोलालकस्फुरितमञ्जुलमौक्तिकेन।
स्पृष्ट्वा विधुं करतलेन सहोडु वृन्दैः
शोभाविशेषमुभयोः कलयन्ति नार्य्यः ॥ ६४

किं प्रेयसि स्मितसुधोज्ज्वलितं हि विश्वं
लीलाकराम्बुजमरुद्भिमितं जगत् किं।
कस्तूरिकातिलकमावहसीति यत्र
शीतांशुविम्बमनुचुम्बति सीधुमत्तः ॥ ६५

यत्र स्फुटं स्फटिकनिर्म्मितमन्दिरेषु
स्वीयं विलोक्य प्रतिविम्बितमाशु दूनम्।

---

६२। यन्नर्त्तकीति—यस्य पुरस्य नर्त्तकीनां करगतिं क्षिप्रहस्तचालनभङ्गीमित्यर्थः। उद्‌ महत् जाता कीर्त्तिः यस्य सः। एतेन पवनगत्यपेक्षया नर्त्तकीकराणां क्षिप्रगतिर्व्यज्यते। न तु याति पारमिति यद्यापि ततः द्रुततरगतिमभ्यसितुमसमर्थः अतोऽद्यापि चलदलमालम्ब्य नाभ्यासविरतिरिति भावः।

६३। अलकेत्यादि—अलकानां कृष्णतया तत्र मेघभ्रमः, मौक्तिकानां श्वेतसलिलविन्दुवत् वर्त्तुलाद्याकारतया तत्र वारिविन्दुभ्रम इति भावः। एकावलीनां शुभ्रतया इन्दुद्युतिभ्रमस्तत्र। चकोरा इन्दुकरं पिवन्तीतिप्रसिद्धिः।

६४। अत्र उडुवृन्दैः सह मौक्तिकानां साम्यं विधुना सखीमुखसाम्यं विधुवर्त्तिना कलङ्केन च अलकानां साम्यम् लभ्यम्।

६५। सीधुमत्तः मदिरापानमत्तः, इदं हेतुगर्भविशेषणम् नायक इति विशेष्यपदमूह्यम्।

अन्योन्यदृष्टिपरिवर्द्धितपञ्चवाण-
मासक्तवाहुलतिकं मिथुनं ललज्जे ॥ ६६

यस्मिन् सरांसि नलिनीकलहंसकोक-
शोकं त्यजन्ति रजनीमधि कौतुकेन।
सम्भोगखिन्नयुवतीगणमज्जनेषु
वक्त्रेण नूपुररवेण कुचद्वयेन ॥ ६७

यत् कामिनीजनगणान्नियतं प्रभात
आवोधितान् स्तुतिशतैः श्लथवाहुबन्धान्
उन्मीलने नयनयोरलसान् कथञ्चि—
दुन्निद्रयन्ति चतुराणि सखीकुलानि ॥ ६८

एकावली परिहृता कनकाङ्गदे च
काञ्ची च यत्र मणिनिर्म्मितनूपुरोऽपि।
अङ्गानुलेपनमपि व्यवधानवुद्ध्या
रोमावली दयितया निभृतं निनिन्दे ॥ ६९

---

६६। स्वप्रतिविम्बमेव अपरजनं मत्वा स्वीयप्रेमालिङ्गनस्य अपरेण दर्शनसम्भावनया लज्जा इति भावः।

६७। रजनीमधि रजन्याम्। वक्त्रादिषु नलिन्यादिसाम्यात् वक्त्रेण नलिनीविरह-शोकत्यागः नूपुररवेण कलकूजत्कलहंसविरहशोकत्यागः कुचद्वयेन चक्रवाकविरहशोक-त्यागः।

६८। अत्र कामिनीजनानां श्लथबाहुबन्धत्वे नयनोन्मीलनालस्ये च नैशविहारप्रयुक्त-प्राभातिकनिद्रातिशयौ हेतुरन्वेयः। नायकेन सङ्गताया नायिकायाः समीपमुपसृत्य उन्निद्रतासम्पादनस्य अशक्यतया प्रकारान्तरेण उन्निद्रतासम्पादनमेव प्रकृते सखीकुलानां चातुर्य्यम्।

६९। एकावलीप्रभृतीनां परित्यागयोग्यतया एकावल्यादिकं परित्यक्तम् परन्तु

यस्मिन् कुरङ्गनयना प्रियसन्निधानेऽ
प्याकर्ण्य कोकमिथुनस्य निशीथवृत्तम् ।
निश्वस्य दीर्घमुरु कम्पितदेहवल्ली
मूर्च्छावती पतियियासु मनो बबन्ध ॥ ७०

यस्मिन् विलासवलभीमधिरुह्य नार्य्यो
मन्दाकिनीसुभगशीकरभोगवत्यः ।
स्वर्नाथयोषिदतिमञ्जुलचेष्टितानि
साधारणानि हृदये परिवर्णयन्ति ॥ ७१ ॥

यत्राङ्गनानुपमरूपगुणोत्थशिल्पी
धातापि हन्त पुरुहूतपुरः सलज्जः ।
यस्मिन् किशोरनयकौशलविन्नवाणी
वाचस्पतेरपि शिरो नियतं धुनोति ॥ ७२ ॥

यस्मिन् जरा शिशुगुरौ मृदुताङ्गनासु
कोपोऽर्थिनेष्ववहुदेषु जनेषु दातुः ।

---

रोमावल्याः एकावल्यादिवत् परित्यागासामर्थ्येन गाढालिङ्गनप्रतिरोधकताज्ञानात् तन्निन्दा-मात्रमिति भावः ।

७० । कोकमिथुनस्य चक्रवाकद्वन्द्वस्य निशीथवृत्तं निशीथकालीनविरहवृत्तान्तं आकर्ण्य विरहस्य सुदारुणताविज्ञानादिति शेषः पूरणीयः । मूर्च्छायां तस्यैव मुख्यतया हेतुत्वसम्भवात् ।

७१ । एतेन तत्रत्यविलासवलभीनां समुच्छ्रयातिरेको व्यज्यते, अन्यथा मन्दाकिनी सलिलशीकरभोगस्य तत्र असम्भवात् ।

७२ । पुरुहूतपुरः इन्द्रस्य पुरतः । तथाहि तत्रत्याङ्गनानां देवाङ्गनासौन्दर्य्यापेक्षयापि प्रकृष्टतरसौन्दर्य्यसम्पादनात् सुरपतेरधिक्षेपसम्भावनया धातुः सलज्जत्वमिति भावः । धुनोति कम्पयति तादृशवाणीचातुर्य्यबोधप्रयासेनेति भावः । एतेन वाचस्पतिवचनकौशलापेक्षयापि तद्वचनकौशलं प्रकृष्यत इति गम्यते ।

त्रासो नवोढ़दयिताहृदि नापरत्र
वार्त्तापि न क्वचिदभूत् प्रबलस्य मृत्योः ॥ ७३ ॥

रूपेण कौशलशतैर्विभवैर्नयैश्च
कन्दर्पमातुरनिशं प्रतियोगिना या ।
सालीगणैः पतिगुणान्वियतं क्वणन्ती
तस्मिन् कलिन्दतनया सुखमध्युवास ॥ ७४ ॥

पतिं मुनीन्द्रेण समं समागतं
निशम्य सा फुल्लविलोचनाम्बुजा ।
विधाय पूजोचितमालिदृष्टा
स्वयं जगाम व्यजनाम्बुहस्ता ॥ ७५ ॥

तथोपचारैर्विभवानुरूपै
रपूजयत्तं मुनिमानताङ्गी ।
जगद्गुरुं विश्वमनोगतज्ञं
पतिन्तु चित्तेन पुरैव साध्वी ॥ ७६ ॥

---

७३। न परत्रेति नवोढ़दयितायाः हृदि प्रौढ़सम्भोगासहनसम्भावनया त्रासो भवति। अपरत्र तु कारणान्तरेण। स एव च द्विष्टो लोकानाम्। तत् कारणान्तरप्रयुक्तत्रासस्य तत्र असत्ताकथनात् वसतां सुखस्थितिर्व्यक्ता।

७४। कन्दर्पमातुरिति—कारणगुणाः कार्य्यगुणमारभन्त इति नयेन प्रकृष्टरूपादि-शालिनः कन्दर्पस्य मात्रापि प्रकृष्टरूपादिशालिन्या भाव्यम्, सापि अस्याः प्रतिद्वन्द्विनीति कलिन्दतनयाया महान् रूपादिप्रकर्षो व्यज्यते तुल्यबलयोरेव प्रतिपक्षत्वात्।

७५। आलिदृष्टा सखीभिः दृश्यमानेत्यर्थः। एतेन सतीष्वपि तत्र बहुसखीषु स्वयं तदुपचारप्रवृत्त्या समादरातिशयो व्यज्यते। व्यजनेति व्यजनं वीजयितुं अम्बु च पादौ प्रक्षालयितुं हस्ते कृत्वा इत्यर्थः।

७६। विभवानुरूपैरित्यनेन 'वित्तशाठ्यं न कुर्व्वीत' इति शास्त्रानुगतिः प्रतिपादिता। पराद्धेन नारायणं पुरः स्थितं स्वामिनमनर्चयित्वा नारदार्चनदोषः परिहृतः।

परागकल्पैर्व्यंजनाम्बु विन्दुभिः
निवेदितानामपि सौरभेण।
मुनेस्तदा भोजनमन्तरेण
तपोऽतिरुक्षं वपुरार्द्रमासीत् ॥ ७७ ॥

कालिन्दीं प्रति नारदः।

विहाय रुक्मिणीगेहमपि सत्यानिकेतनम्।
मामिहानीतवान् देवः सौभाग्यं वर्द्धयंस्तव ॥ ७८ ॥

* देवः ( स्वगतम् )

जानाति मर्म्म नर मा मयि कुप्यतीति
वृत्तं निशम्य भविता किल सत्यभामा।
भूयोऽपि हन्त मुनिना स्मृतपारिजाता—
पूर्व्वाधिको मम पुनः पृथुलः प्रमादः ॥ ७९

नारदः—देव !

तवानुरूपा दयिता यथा मा-
मतोषयच्छुद्धतमान्तरेण।
प्रतिप्रियं तस्य करोतु कोवा
स्वीयानुरूपन्तु निरूपयामि ॥ ८० ॥

मालवाधिपतिर्देव दमनो नाम भूपतिः।
विभवैर्भक्तियोगैश्च न यस्य प्रतिमो भुवि ॥ ८१

---

७८। विहायेति मर्म तव मनीत्वा इत्यर्थः।

निखिलान्तर्निरूढ़ानां गोचरः सर्व्वं एव हि
तथाप्यमुष्यास्तोषाय प्रलपामि पुरः प्रभो ॥ ८२ ॥

तनया तस्य भूपस्य जगदुत्तररूपिणी
नाम रेवा गुणांस्तस्या नाहं वर्णयितुं क्षमः ॥ ८३ ॥

तवात्मजे सा दृढ़बद्धभावा
स्वयंवरार्थं यततेऽपि तस्याः ।
द्विजोऽपि पत्रीं विनिवेश्य मूर्ध्नि
समागतप्राय इवावधेहि ॥ ८४ ॥

देवमुनीन्द्रः—

सार्व्वज्ञ्यविज्ञातमिदं हि वृत्तं
किं लौकिकज्ञाननिवेदितं वा
ईषद्द्रुतं मां तरलीकरोति
किञ्चित् स्मृतं पद्यमिवोत्तमस्य ॥ ८५ ॥

---

७९। जानातीति। पारिजातहरणादौ विशेषेण प्रमाणितत्वात् स्वभावकोपनायाः सत्यभामाया अत्र महान् कोपो भवतीत्याशङ्क्य प्रेमाद्याधिक्यं सूचयति।

८०। तवानुरूपेति स्वकीयेष्टसाधनतामुररीकृत्यैतदुक्तम् सर्व्वः स्वार्थं समीहते इति वचनात्।

८१। मालवदेशाधिपो दमनो नाम राजा। न यस्येत्यनेनाद्वितीयत्वं सूच्यते।

८२। निखिलेति—सर्व्वज्ञत्वात् निखिलं वृत्तं भगवता विदितमेव, तथापि आखिन्द-तनयायाः प्रतिबोधनार्थमेतन्निवेद्यते इति भावः।

८३। तनयेति—यत्तु पार्थिवं तद्देवानां न प्रीणनाय सम्पद्यते इति कृत्वा जगदुत्तररूपिण्या सहैव भगवतस्तनयस्य मेलनं युक्तमिति भावः। रेवा इति कन्याया नाम। नाहं वर्णयितुं क्षमः इत्यनेन गुणातिशयो व्यज्यते।

नारदः।—देव, अवधेहि—

सूरोपरागे धरणीपतीनां
महार्घरत्नं तृणवत् प्रयच्छताम्।
दूरागतानां वनितान्वितानां—
मभूदपूर्व्वो निविड़ः समाजः॥ ८६॥

ततः प्रवृत्ते यदुदेवयज्ञे
जग्मुर्नरेन्द्रा अपि तत्र हृष्टाः।
देवर्षिभिर्भूमिपुरन्दरैश्च
महो तदानीं सुरभूर्बभूव॥ ८७॥

ततो जनानानकदुन्दुभिस्तान्
सूरोपतापोपहतान्निरीक्ष्य।
आज्योद्भवैर्धूमगणैर्दयालु-
श्चकार चन्द्रातपमेव तूर्णम्॥ ८८॥

धूमैः पयोदैः शिखिचञ्चलाभिः
हुताज्यधारास्फुटवारिभिश्च।

---

८५। सार्व्वज्ञेति—न किञ्चित् भगवतोऽविदितं तथापि उत्तमस्य कवेः पद्यपादविशेष-स्मरणे यथा सर्व्वमेव पद्यं स्मृतिपथमुदेति तद्वदिदमपीत्याशयः।

८६। सूरेति—सूरोपरागे राहुग्रस्ते दिवाकरे तत्र दानादौ विशेषफलदर्शनात् महार्घरत्नानां त्यागबाहुल्यम्। वनितान्वितानामित्यत्र सस्त्रीको धर्म्ममाचरेदिति स्मर्त्तव्यम्।

अकालवर्षाः प्रतिलभ्य यत्नां
लीलाविहारा विविधा विरेजुः ॥ ८९ ॥

कश्चिन्मृगाख्याः प्रतिरूपदेहं
विस्तार्य्य ताभिर्दृढबद्धसख्यः ।
प्रेम्णा समालिङ्ग्य तथावचुम्ब्य
तासां प्रियालापसुखानि भुङ्क्ते ॥ ९० ॥

केचिद्विचित्रानतुलान्य जन्तून्
विदग्धशिल्पुग्रन्थकौशलेन ।
अन्तःपुरं राजभिरेव नीता
विलोक्य राज्ञीर्मुदिता बभूवुः ॥ ९१ ॥

केचिच्च दुर्व्वार-मनोभवेन
भूताभिभूतप्रतिरूपदेहाः ।
अङ्गानि वक्त्राणि कुचान् वधूनां
स्लिष्यन्ति चुम्बन्ति विमर्द्दयन्ति ॥ ९२ ॥

केचिद्वयस्यैः प्रतिबद्धयूथा
गायन्ति यन्त्रेण मनोहरेण
तदर्थमुग्धागतसुन्दरीणां
दृगन्तसम्भोग (१) सुखान्यवापुः ॥ ९३ ॥

---

८९। धूमैरिति—वर्षासु नायकानां कामोद्रेको दृश्यते, अत धूमकपयोदादिभिर्वर्षागमनं निरूप्यते। वर्षासु यथा अविरलवारि-पातो दृश्यते तद्वद्यन्त्रकुम्भेष्वपि अविच्छिन्नघृतधाराया दर्शनात् वर्षासाम्यमिति भावः।

९३। केचिदिति—तौर्य्यत्रिकादयोऽपि नायिकानामानन्दं परिवर्द्धयन्ति अन्तरेषां तत्रागमनम्। नायकानां तु कटाक्ष-सम्भोग एव सुखाय सम्पद्यते।

---

(१) कटाक्षसम्भोग।

केचिच्च तज्ज्ञानविलुप्तभावा
भक्ता इवालोलशरीरशोभाः ।
नृत्यन्त आधूतकरारविन्दाः
कान्ताकुचोत्सेषु पतन्ति मुग्धाः ॥ ९४ ॥

अथ त्वदीयस्तनयः समोऽपि
स्वीयानुरूपां दयितां दिदृक्षुः ।
विद्यां समाश्रित्य मयैव दत्तां
क्षितीश्वराणां पुरमाविवेश ॥ ९५ ॥

मत्स्येश्वराणां मगधेश्वराणा-
मथो कुरूणामपि कौरवाणां ।
तथेतरेषां भवनान्तराले
नैवात्मतुल्यामबलां ददर्श ॥ ९६ ॥

देव त्रिलोकीगतभूरिशोभा-
प्येकत्र दृष्टा न सुखाय तस्य ।
भैम्यां समाबद्धहृदो नलस्य
स्वर्वैरियोषा इव भूरिरम्याः ॥ ९७ ॥

---

केचिच्च तज्ज्ञानेति—श्रीहरेर्नामसङ्कीर्त्तनादौ केषाञ्चित् भक्तानां मूर्च्छागमो दृश्यते तत्र भगवद्विषया रतिः, अत्र प्रकारान्तरैव ।

अथेत्यादि—मयैव दत्तां शारदप्रदत्तां तिरस्कारिणीविद्यां समाश्रित्येत्यर्थः, अमुष्याः विद्यायाः प्रभावेण अन्ये विद्याश्रितं द्रष्टुं न शक्नुवन्ति ।

मत्स्येश्वराणामिति—समीपागतानां प्रसिद्धानां राजन्यानामिति भावः । आत्मतुल्यामिति आत्मसदृशरूपगुणाद्युपेतामित्यर्थः ध्वन्यते, अथवा मनोगतामिति ।

निश्वस्य विश्रम्य कियत्तदैव
तुङ्गं समाश्रित्य रथं स्थितस्य ।
आशासु विस्तारितलोचनस्य
दृष्टिर्गतासौ्ऽमनस्य पुर्य्याम् ॥ ९८ ॥

तां वीक्ष्य विस्मित्य चिरं कुमारो
विज्ञाय चेतोऽपि निजं प्रसन्नम् ।
रेवागुणोत्कीर्त्तनपूर्णकर्णो
हर्षाद्द्रुतं तत् पुरमाजगाम ॥ ९९ ॥

प्रविश्य तां भूमिपुरन्दरस्य
पुरीं पुरारेरिव वासशैलम् ।
विस्तारयन् दृष्टिमितस्ततोऽयं
विस्मित्य विस्मित्य चमच्चकार ॥ १०० ॥

नीतं जनुर्भावनयैव यस्या
गीतं यशोऽपि प्रतियामिनीषु ।
ध्यातञ्च रूपं हृदये सदैव
तन्मन्दिरे तेन कृताथ दृष्टिः ॥ १०१ ॥

---

९८। निश्वस्येति—प्रियजनदर्शनाकाङ्क्षया इतस्ततः परिभ्रमणात् मनसः श्रमः इति तज्जनितखेदात् निश्वासः ।

९९। तां वीक्ष्येति। ईप्सितजनं दृष्ट्वा चेतसः प्रसन्नता भवत्येव। मानसप्रतिमायाः गुणावलीश्रवणात् हर्षाधिक्यं वर्णयति ।

१०१। नीतमित्यादि—प्रार्थिताधिगमात् तत्तदवस्थाभेदानां स्मरणम्।

ततः शयानां मणिवेदिकायां
शशाङ्कमृद्वीमधिकृत्य शय्याम् ।
चकार नेत्रातिथिमेष रेवाम्
सरिद्विलीनामिव राजहंसीम् ॥ १०२ ॥

अथ विलोक्य ससौ दमनात्मजा-
मनुभवन्नपुनर्भवनिर्वृतिम् ।
तरलितोऽग्रजकूटमनोभुवा
स्वगतमित्थमभाषत तद्गुणान् ॥ १०३ ॥

कनकनूपुरभानुमधात् पुरो
नखरशीतकरं विदधावधः ।
विधिकृतं परिवर्त्त्य हि यत्पदं
कमलसख्यमभाषत मञ्जुलम् ॥ १०४ ॥

कमलदुर्लभसौरभवाञ्छया
समयजातपरिच्चयवञ्चितः ।
नखरतां गतवान् शशलाञ्छनः
श्रयति यच्चरणं जगदुत्तरम् ॥ १०५ ॥

---

१०२। ततः शयानामिति। अत्र मणिवेदिकायाः स्वच्छत्वादीन् तथा शय्यायाः मृदुतादीन् दृष्ट्वा रूपसादृश्येन सरोवरगतां राजहंसीमिव ददर्शेत्याशयः।

१०३। अथेत्यादि—प्रथमतस्तावत् दर्शनाकाङ्क्षा किन्तु केवलदर्शनेन तृप्तिर्न जाता इति भावः। अत्र मदनो यथा कृष्णात्मजस्तथायमपि सुतरां भ्रातृत्वमनुसृत्य विशेषेण आक्रामतीत्याशयः। तद्गुणकीर्त्तने कथञ्चित् तापशान्तिर्भविष्यति इति मनसिकृत्य स्वगतं अभाषत इति तात्पर्य्यम्। ससः तन्नामकः कृष्णात्मजः।

स्फुरति नीलमणिद्युतिरञ्जितः
सरसयावकमण्डितयन्नखः।
प्रबलवैरिविधुन्तुददंशन-
क्षतजशोण इवैष निशाकरः ॥ १०६ ॥

कुचनितम्बचतुष्टयगञ्छतः
पृथुतरोरुयुगद्वयपाशितः।
मदनराजविचित्रमतङ्गजः
स्फुरति यद्ववयौवनवारिणि ॥ १०७ ॥

त्रिवलिचुम्बितकिङ्किणिकास्वन-
भ्रमरचारुरवेण मनस्विनी।
प्रबलयौवनरम्यसरोवरे
वदति या निजनाभिसरोजताम् ॥ १०८ ॥

स्वशिशुतालिवियोगभरादिव
प्रबलयौवनतोऽम्बरगोपिताम्
मलिनतां हृदि रोममिषोद्गतां
वहति या कृशतामपि मध्यतः ॥ १०९ ॥

यदवलोकनकौतुकि यौवनि
स्मरशराहतिविक्षतवक्षसि।

---

१०४। जडु चन्द्रस्तदधश्च सूर्य्य इति वैज्ञानिकाः स्मरन्ति। इदमेव विधिकृतं पदं प्रकृते तत्परिवर्त्तनं रूपकनिर्व्वाहम्। कमलं सूर्य्यप्रियत्वात् सूर्य्यमूर्द्धे कुरुते चन्द्रविद्वेषितया च चन्द्रमधः करोति तदनुसृत्य चरणस्य कमलसख्योपपत्तिः उपपादयितव्या।

१०५। चन्द्रे वा कमलसौरभं दुर्लभं चन्द्रोदये कमलविकाशस्य असम्भवात् अतएव चरणस्य कमलतुल्यतया कमलसौरभलाभवाञ्छया नखरूपेण चन्द्रस्य तदाश्रयणमित्युपपद्यत इति भावः।

किमु निविश्य मनोहरणादभूत्
चतजशोणमिदं करपङ्कजम् ॥ ११० ॥

व्यरचयन्नवनीलमणिस्रजा
विमलमौक्तिकमालिकया च या ।
समवलोककलौतुकदायिनं
सुरनदीरविजास्फुटसङ्गमम् ॥ १११ ॥

तरुणिमाम्बुनि यत्र रथाङ्गयो-
रुचितमेव दृढं परिरम्भणम् ।
पृथुलकौतुकमेतदभूद्यतो
विमलपूर्णनिशाकरसन्निधौ ॥ ११२ ॥

जयति या स्मरकल्पलता नवा
ललितवाहुशिफाद्वयशालिनी ।
स्मितसुधारससेकबलादिव
प्रतिदिवाधरपल्लवमण्डिता ॥ ११३ ॥

कचविधुन्तुदयुग्मयदानना-
मलनिशाकरविम्बविलोकनात् ।

---

१०६। स्फुरतीत्यादि—चरणाङ्गुलिकानां भूषणविशेषाणामन्तर्भूतनीलमणिद्युतिः, तया रञ्जितः नखः इत्यर्थः। चिरवैरिणो राहोराक्रमणात् निशाकरस्य यादृशी शोभा भवति, तथा अलक्तकरागरञ्जितस्य तदीयनखस्येति भावः। सरसयावकः, सरसालक्तकः।

१०७। कुर्वेत्यादि—अत्र नितम्बादीनां पृथुतादीन् दृष्ट्वा—करिसाम्यं स एव मदनोत्पत्तेर्हेतुः इति भावः

१०८। विवलीत्यादि—किङ्किणिकास्वन एव भ्रमररवः, तेनैव यौवनसरसि नाभेः सरोजता सम्पादनमिति भावः।

विमलकान्तिभराम्बुनि संस्थिता
द्विजवराः किमपीदमुपासते ॥ ११४ ॥

अहिरयं कलधौतगिरिभ्रमात्
स्तनमगात् किल नाभिकृदोत्थितः ।
इति निवेदयितुं नयने हि यत्
श्रवणसीमनि किं समुपस्थिते ॥ ११५ ॥

अलकजालमिषेण मनस्विनी
तिलकचन्द्रमसं परिवध्नती
नयनपङ्कजमोदकरी च या
स्वकुचकोकयुगं सुखयत्यपि ॥ ११६ ॥

---

११०। यदवलोकनेति—वचसि हस्तप्रदाने कथञ्चित्तापशान्तिर्भवेदिति नियमो दृश्यते अत्र तु निद्राकालविहित-हस्त-क्षेपात् यौवनसरसि पङ्कजत्वारोपः।

१११। व्यरचयन्निति—नीलमणिस्रजः श्यामिकया सार्द्धं सुधाकरधवलितायाः मौक्तिकमालिकायाः मेलनेन गङ्गायमुनासङ्गमं व्यदधादिति भावः।

११२। तरुणीति—निशाकरसन्निधौ रथाङ्गयोः अवस्थानमप्रसिद्धम् अत्र तु तस्य विपर्य्ययो दृश्यते। रथाङ्गः चक्रवाकः।

११३। जयतीति—बाहुप्रभृतीनां सौन्दर्य्यातिशयदर्शनात् मदनकल्पलतिकात्वमारोपितम्।

११४। कचेत्यादि—अलकावलीमुक्तस्य वक्त्रस्य शोभां वर्णयन्ति। यथा भक्ता राहुग्रासान्मुक्तं निशाकरं स्तुवन्ति।

११५। अहिरयमित्यादि—एकेनैव श्लोकेन बहूनामङ्गानां शोभां वर्णयति। सुगभीरनाभिप्रदेशात् प्रारब्धायाः रोमावल्याः स्तनपर्य्यन्तनिवेशात् सौन्दर्य्याधिक्यं सूचयति। सर्पाणां कनकगिरौ निवासः प्रसिद्ध एव। तथाच श्रवणसीमनि इत्यनेन आयतलोचनेत्यसिति विशेषेण निरूपयति।

११६। अलकेत्यादि—कुमुदिनीनायकस्य चन्द्रस्य दर्शनेन पद्मिन्याः क्षोभ एव जायते चक्रवाकस्य तु अतिशयेन, इति ज्ञात्वा कुन्तलचयव्याजेन तम् आवृणोति इति तात्पर्य्यम्।

गुरुतया नवमाणवकाश्रितौ
स्थिरतयाप्यचलाविव संस्थितौ ।
सहजयुक्ततयापि समुन्नतौ
यदुरसि स्फुरतो निविड़ौ स्तनौ ॥ ११७ ॥

उरसि निर्म्मलकाञ्चनदर्पणे
जयति यद्वदनं प्रतिविम्बितम् ।
स्तनतटीसुषमातिदिदृक्षया
विधुरिहागतवानिव मोहितः ॥ ११८ ॥ (१)

अलिकचञ्चलकुन्तलमौक्तिकै-
र्घटयति ग्रहतारकसङ्गमम् ।
नयनपङ्कजमुद्रणया च या
स्फुटयति स्म निजाननचन्द्रताम् ॥ ११९ ॥

कनकपद्ममिदं नहि कोमलं
न मुकुरं शुकचञ्चुपुटान्वितम् ।
हिमकरो न च लाञ्छनवञ्चितम्
किमिति यद्वदने वहुकोटयः ॥ १२० ॥

ललितषट्पदयुग्ममिदं हि य-
च्छ्वसितमारुतमञ्जुलवीजितम् ।

---

११९। अलिकेत्यादि—कुन्तलस्थितेषु मौक्तिकादिषु तारकादीनामारोपणम्। निद्रानिमीलितनेत्रत्वेन मुखस्य चन्द्रसाम्यमिति।

१२०। कनकेत्यादि—स्वर्णपङ्कजे तथास्वच्छे दर्पणे निष्कलङ्के चन्द्रे च सन्देहावकाशो दृश्यते।

---

(१) विधुरिवागतवानिह मोहितः।

वदनपङ्कजसौरभनिर्वृतं
स्मररसालसनिर्भरनिद्रितम् ॥ १२१ ॥

कुटिलकुन्तलभङ्गिभिरेव या
मिहिरजालहरीमनुकुर्व्वती ।
हृदयवारणमोदविधायिनी
नयनमीनमहोत्सवदायिनी ॥ १२२ ॥

कचकुहूरजनी स्मरतस्करी
हृदयरत्नमपाहरदन्तिके ।
बहुगुणा विमला बहवोऽपि यत्
द्विजवराः पुरतो मम साक्षिणः ॥ १२३ ॥

अमकृतैः सुकृतैः सुचिरन्तनैः
गतवती मम दृष्टिपथं किल ।
अहह पुण्यचये चरितार्थके
भवतु सामयिके न दयावती ॥ १२४ ॥

एतद्विचिन्त्य सुचिरं नयने निमील्य
बद्धाञ्जलिः पुलक-पूरितदेहवल्लिः ।
अन्तर्गतं परमपूरुषपादपद्मं
ध्यायन् स चित्रित इव क्षणमास तूष्णीम् ॥ २२५ ॥

---

१२१। ललितेत्यादि—अत्र चक्षुषोः भ्रमरत्वारोपः, निद्राजनितनिश्वासेन मुखपद्म-स्थितयोर्भ्रमरयोर्निद्राविभ्रम् उत्पादयति ।

१२२। कुटिलेत्यादि—अलकावलिभिः तरङ्गिणीतरङ्गमनुकरोतीति स्पष्टम् । गज-मीनयोरानन्दवर्द्धनन्तु सुतरामेव ।

१२३। कचेत्यादि—अनेन कुन्तलचयस्य महती शोभा प्रदर्शिता ।

१२४। अमेत्यादि—नाल्पेन तपसा लभ्यः सुन्दरस्त्रीसमागम इति स्मरणात् एव-मभिहितमिति ।

१२५। एतदित्यादि—इष्टसाधनविधौ स्वकीयेष्टदेवताराधनमिति नियमः, अभीष्टं प्राप्य तमेव मनसा पूजयतीति भावः ।

उन्मील्य नेत्रकमलं दरहुङ्कृतेन
निद्रालसां तनुलतां परिवर्त्तयन्त्याः ।
तस्याञ्जली विधिकृतं स्फुटभाषमाण-
स्तस्याः करक्वणितकङ्कणमापपात ॥ १२६ ॥

आकाङ्क्षितादिव निधेरधनः प्रलब्धात्
स्पर्शादसौ परमनिर्वृतिमाप वीरः ।
उत्थाय सत्वरमजातपराङ्गसङ्गा
बाला तु किं किमिति हन्त चमच्चकार ॥ १२७ ॥

विस्तार्य्य चक्षुरथ दिक्षु मुहुः कुमारी
नालोक्य कामपि सखीं भवनान्तराले ।
स्वीयं वपुः पुलकपूरितमाकलय्य
भीता नमद्वदनमाशु सुविस्मिताभूत् ॥ १२८ ॥

तत्पादपद्ममनुचिन्त्य ततः कुमारः
कन्दर्पदर्पदमनः कमनीयकान्तिः ।
तन्मूर्त्तिसंस्मृतमनःस्थितचारवाक्य
आविर्बभूव पुरतो दमनात्मजायाः ॥ १२९ ॥

शून्यालये सपदि पूर्णसुधांशुवक्त्र-
मालोक्य विस्मयवती क्षणमास तूष्णीम् ।
कोऽयं कुतः कथमिहागत इत्यधीरा
बाला चिरं स्थगितचित्ततयाकुलाभूत् ॥ १३० ॥

---

१२७। आकाङ्क्षितेत्यादि—प्रार्थिताधिगमात् परमनिर्वृतिः। पराङ्गसङ्गादित्यनेन कुमारीत्वं सूच्यते ।

१२८। विस्तार्य्येत्यादि—हेतुं विनापि कार्य्योत्पत्तिरित्यनुसन्धेयम् ॥

१३०। शून्येत्यादि तिरस्करिण्या विद्यया समाश्रितत्वात् पूर्व्वं केवलं अनुभूतम् अधुना तु प्रत्यक्षं दृष्टवतीति भावः।

क्षणं रम्ये चित्ते क्षणमपि मनोहारिविपिने
क्षणं चोर्द्धे कूजत्परभृतकपोतादिविहगे ।
क्षणं नानारत्ने रचितवलये दृष्टिमधुप-
स्तयाक्षिप्तो यत्नात्तदपि समगात्रे निपतति ॥ १२१ ॥

अथ तयोः

अन्योन्यदैवघटनामनु संश्रयात्त-
मन्योन्यदृष्टिपरिवर्द्धितपञ्चबाणम् ।
अन्योन्यभावमनुभूय निरस्तधैर्य्य-
मन्योन्यवागमृतलिप्सु मनो बभूव ॥ १२२ ॥

आदावसौ गदतु तत्परमस्मि वक्ष्मी-
त्यन्योन्यधैर्य्यपरिरक्षणमध्यु चित्तम् ।
आसीत् क्षणं तदनु तत्समयं निरीक्ष्य
दुर्व्वारमन्मथकृती शतधा बिभेद ॥ १२३ ॥

उत्कण्ठया समभिभूयत एव धैर्य्यं
धैर्य्येण सापि परिभूयत एव भूयः ।
तीव्रं तयोरजनि हन्त नितान्तयुद्ध-
मुत्कण्ठया मदनसारथिना जितं तत् ॥ १२४ ॥

---

१२१। क्षणमित्यादि, अत्याकुलतया—इतस्ततो दृष्टिं ददत्यपि. आगन्तुकस्य समस्तो-परि एव पततीति भावः, सर्व्वथाभिमतजनस्य दर्शनादिति तात्पर्य्यम् ।

१२२। अन्योन्येत्यादि—परस्परदर्शनात् उभयोरेव वागमृतपानेच्छा, अनेन चुम्बनमपि व्यज्यते ।

१२३। आदावित्यादि—दुर्व्वारमन्मथेन हृदयं भिद्यते इति ।

नो लक्षितः पुरजनैरयमित्यमर्त्त्यो
मर्त्त्यां विलोक्य इति बाधमवैमि तत्र।
सद्यो विमूढ़हृदया भयलब्धबाधा
नाराधयामि चरणावतिथेः किमेतत् ॥ १२५ ॥

स्वेदप्रकम्पादिवपुर्व्विकारः
स्यादस्य पुर्य्यामपि संनिवेशे ।
ज्ञातुं प्रगल्भापि नचास्मि भावं
किं वाच्यमस्मिन्निति सा मुमोह ॥ १२६ ॥

ज्ञात्वा न चेतोगतभावमर्म्म
सन्तः प्रयुञ्जन्ति वचांसि नैव ।
अभाषणेऽपि व्यथतेऽन्तरात्मा
किमत्र कुर्य्यामिति सोऽपि मुग्धः ॥ २३७ ॥

गृहागतः सूनृतयापि वाचा
संवर्द्धनीयो गृहिणेति धर्म्मः ।
इदं विचिन्त्य क्षितिपालपुत्त्री
सम्भाषणे साधु मतिश्चकार ॥ १२८ ॥

---

१२५। नो लक्षित इत्यादि—पुरवासिभिः अदृष्टः अयमित्यतः अमर्त्त्यः स्वर्गीयः इति भावः। भयलब्धबाधया अतिथिसम्भाषणं व्याहतं भवेत् किं नवा इति चिन्ता।

१२६। स्वेदः इत्यादि—अन्यत्रगमनेऽपि वपुषो विकारः स्यास्यति अत्र स्थित्वा भावं ज्ञातुं शक्नोमि नवा इति चिन्तया मोहमुपागता।

१२७। ज्ञात्वेति—मनोगतम् अज्ञात्वा किमपि वक्तुं नोचितमिति ज्ञात्वा वक्तुं न शशाक किमप्यकथने अन्तर्व्यथते अतः सोऽपि मुमोह।

१२८। गृहागतः इत्यादि—तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन इति स्मरणात्।

आश्लिष्टपाणिनलिनं नमदाननाब्ज-
मुन्मीलदक्षि नमितभ्रु विलोलमौलिः ।
आधूतकुन्तलमसूचितहृद्विकार-
मूचे क्षितीशतनया जगदीशसूनुम् ॥ १३९ ॥

त्रपानिबद्धामपि चापलाय
युनक्ति मां कोऽपि भवत्प्रभावः ।
शशाङ्कसङ्कोचितमम्बुजातं
प्रकाममासादयतीव भानुः ॥ १४० ॥

किं हेतुनाङ्ग वद कोमलपादपद्मं
क्षौणीतलं समधिरोहति तावकीनम् ।
पुंसामदृश्यमनभिज्ञपरेङ्गिताया-
स्तत्रापि मन्दिरमहो वत कन्यकायाः ॥ १४१ ॥

पादौ कथं कमलगर्भसहोदराभौ
दूनौ करोषि कठिनावनिचुम्बनेन ।
ज्ञातुं तवान्वयमहो यततेऽन्तरात्मा
लज्जावती त्वदुचिताक्षतपूजनास्मि ॥ १४२ ॥

---

१३९। आश्लिष्टेत्यादि—क्षितीशतनया मालवराजदुहिता, जगदीशसूनुं श्रीकृष्णतनयम्, भक्तो यथा विनयेन अविकृतहृदयेन च भगवन्तम् स्तौति तद्वदिति भावः ।

१४०। त्रपेत्यादि—लज्जया बाध्यमानापि भवत्प्रभावः मां मुखरीकरोति यथा चन्द्रोदये मुद्रिता कमलिनी रविकिरणेन विकाशमेति ।

१४१। किं हेतुनेत्यादि—असूर्य्यम्पश्या राजकुलस्त्रियः अत एव परेङ्गिते सर्व्वथा अनभिज्ञा एव ।

१४२। पादौ कथमित्यादि—यद्यपि भवत्सम्बर्द्धनायाम् अक्षमता प्रदर्शिता तथापि भवद्गोत्रश्रवणेच्छा सर्व्वथा हृदि वर्त्तते एव ।

चन्द्रान्वये यदि भवांस्तदतीव युक्तं
भानोरुपर्य्यपि चिरं वसतिर्हिमांशोः ।
यद्यन्यमन्वयमलंकुरुषे तदापि
तेनैव संप्रति जगच्छिरसि स्थितोऽयम् ॥ १४३

एतन्निशम्य गदितं दमनात्मजाया
आनन्दविस्मयरसोर्म्मिषु मग्नदेहः ।
उत्फुल्लनेत्रकमलं पुलकाचिताङ्ग-
मेतान्यचिन्तयदयं यदुवंशवीरः ॥ १४४ ॥

इमां द्रष्टुं दृष्टिर्भ्रमति पुरतः षट्पद इव
तथा वक्तुं वाणी नटति रसनायामिव नटी ।
अयं पाणिः स्प्रष्टुं स्फुरति च यथा कुञ्जरकरो
मनो यद् यत् काङ्क्षत्यहह तदिदं दैववशगम् ॥ १४५ ॥

इयं कान्त्युद्रेकादजनि जितविश्वा प्रियतमा
मनो मे त्यक्त्वान्यत्त्रिजगति बभूवैकशरणम् ।
कुमारीणां प्रायो जनकपरतन्त्रं व्यवसितं
न जाने किन्दैवं स्वपयति समं जारयति वा ॥ १४६ ॥

---

१४३ । चन्द्रान्वये इत्यादि—जगत्, चन्द्रस्तदधश्च सूर्य्य इति हि शास्त्रपरिस्थितिः ।

१४५ । इमामित्यादि—प्रार्थिताधिगमनं दैवायत्तमिति, अत्र तु सर्व्वथा सौभाग्यातिशयं बिभर्त्ति ।

१४६ । इयमित्यादि—सौन्दर्य्यातिशयात् जितं विश्वमनया, मम मनस्तु सर्व्वान् परित्यज्य इमामेव समाश्रयति, प्रायेण कुमार्य्यः जनकाधीनतया विवाहादौ स्वातन्त्र्यं नावलम्बन्ते । एतत् सर्व्वं मनसि विचिन्त्य दैवमाश्रित्य संशय इति ।

निवारयामः कतिधा न नेत्रं
न चिन्तयामः कति नाम शास्त्रम्।
प्रशान्तयामः कतिधा न चित्तम्
तथापि मां तापयते मनोभूः ॥ १४७ ॥

सम्भाषयामीति चलाधरोष्ठो
हेला यदि स्यादिति रुद्धकण्ठः।
स्रोतः-प्रतिस्रोतसि नीयमाना
नौकेव हा किं बत कुण्ठशक्तिः ॥ १४८ ॥

मनोजन्मोद्रेकाचितकिसलयः प्रेमविटपी
बलीयः-कौलिन्यस्थगितनवसम्भावि-विटपः।
नचातिव्यक्तोऽभून्न खलु परतन्त्रोऽपि नितरां
महाभावस्तम्भो बलवदवनोजाङ्कुर इव ॥ १४९ ॥

कपोले तन्वङ्ग्याः पुलककपटली काऽपि निविड़ा
वपुर्ल्लव्यां मुक्तानिकरतुलितस्वेदकणिका।

---

१४७। निवारयाम इत्यादि—चक्षुरादीनां इन्द्रियाणां (अङ्गानां) नियन्त्रणे मम सामर्थ्यं विशेषेण वर्त्तते किन्तु अनङ्गस्य प्रभावस्तु सर्व्वोपरि बलवत्तरः इति तात्पर्य्यम्।

१४८। सम्भाषयामीत्यादि—प्रियसम्भाषणे चेतः समुत्सुकमेव, किन्त्वनादरभिया तस्मात् प्रतिनिवृत्तम्। स्रोतप्रतिस्रोतसि अवस्थाने गमने च अक्षमा नौरिव मम शक्तिः निरुद्धा इति भावः।

१४९। मनोजन्मोद्रेकादित्यादि—मदनबाणप्रपीड़ितोऽप्ययं बलीयःकौलिन्यबाधया विवशैरपि बलात् प्रतिनिवृत्तः। तेन प्रबलवात्याघातागमनात् प्राक् महीरुह इव स्तब्धीभूत इति भावः।

स्तनोत्सङ्गे कम्पोऽधरनवदलेऽपि स्मितलवो
मनः सक्तं ब्रूते किमपि मधुरा दृष्टिरधिकम् ॥ १५० ॥

अथातियत्नादवलम्ब्य धैर्य्य-
मीषत्-स्मितच्चालितपल्लवोष्ठः ।
कपोललोलीकृतकुण्डलोऽयं
वाग्मी बभाषे क्षितिपालपुत्रीम् ॥ १५१ ॥

मर्त्त्योऽप्यमर्त्त्योऽस्मि धरेन्द्रपुत्रि
तवाद्य यद्वागमृतं पिबामि ।
कन्दर्पसम्मोहनदेहकान्त्या
निमेषशून्यं नयनं कृतं मे ॥ १५२ ॥

एतं धरित्रीपतिपुत्रि चन्द्र-
वंशोद्भवं विद्धि न वाच्यमन्यत् ।
लोले हि बालाहृदये निगूढ़-
मामे घटे वारिवदस्थिरं यत् ॥ १५३ ॥

सूरोपरागागतभूपतीना-
मन्तःपुराण्यस्मि निविश्य तन्वि ।
स्वीयानुरूपां दयितां दिदृक्षु-
र्विद्यानुभावादभयं भ्रमामि ॥ १५४ ॥

---

१५० । कपोले इत्यादि—कपोलाद्यवयवेषु निविड़पुलक-पटल्यादिभिः रेखायामिदं मयि अनुरक्तमित्यनुमीयते इति भावः ।

१५२ । मर्त्त्य इत्यादि—सुधापानादेव देवानाममरता, अद्य तु तव वागमृतपानात् मर्त्त्यः सन्नपि अमर्त्त्यतां गतः इति भावः । तथा देवलोचनेषु निमेषो नास्ति तवातुलशोभा-सन्दर्शनात् मम नयनेऽपि निमेषाभावः । अतोऽहममरतां सर्व्वथा गत एव इति तात्पर्य्यम् ।

१५३ । एतमित्यादि—चन्द्रवंशोद्भवोऽहमेतावन्मात्रमेव जानीहि । अन्यत् चञ्चल-बालाजनसविधे न वक्तव्यम् यतस्तस्मिन् अपक्वमृद्घटनिहितवारिवत् रहः चिरं न स्थास्यति ।

१५४ । सूरोपरागेत्यादि सूरोपरागः राहुग्रस्तदिवाकरः, विद्यानुभावात् तिरस्करिण्याः प्रभावादिति ।

प्रविश्य भूमीपतिमन्दिराणि
निरीक्ष्य नानाविधकौतुकानि ।
विलोक्य बाले बहुमण्डनानि
कृशाङ्गि कुत्रापि न निर्वृणोमि ॥ १५५ ॥

न कोकिलस्तृप्यति चूतभिन्नैः
पद्मेतरैस्तुष्यति नैव भृङ्गः ।
न चातको हृष्यति वारिदान्यै-
श्चन्द्रापरैर्जीवति नो चकोरः ॥ १५६ ॥

वपुर्नवीनं स्मरलोभनीय-
मोष्ठध्वनोद्धारिसुशीलतापि ।
वचोऽमृतं तन्वि किलेदृशानि
स्वर्नाथपुर्य्यामपि दुर्लभानि ॥ १५७ ॥

विज्ञातुमीशे यदि कोमलाङ्गि
तदा निगाद्यं मयि तूर्णमेतत् ।
निजेच्छया कोऽपि मनोगतोऽभू-
दङ्गीकृतः किं गुरुणाथ कश्चित् ॥ १५८ ॥

अपि त्रिलोकीमनुनीतचेता-
स्त्वदनुरूपं न विलोकयामि ।

---

१५५। प्रविश्येत्यादि—त्वदेकशरणं मम: नान्यत्र कुत्रापि शान्तिं लभते ।

१५७। वपुरित्यादि—स्वर्नाथपुर्य्यां विदशालये इत्यर्थः ।

१५८। विज्ञातुमित्यादि—स्वकीयेच्छया विवाहार्थं कोऽपि निर्व्वाचितः उत जनकादिभिः कोऽपि निरूपित इति ।

जानाति कः कस्य चिरन्तनानि
पुण्यानि वा भूरितपोऽर्जितानि ॥ १५९ ॥

त्रपा यदि त्वां विरुणद्धि बाले
तदापि तत्त्वं शृणु कोमलाङ्गि ।
विभूषणं सत्कुलकामिनीनां
न जातु सारल्यसखित्वभाजि ॥ १६० ॥

विधुं धर्तुं चलेत् पाणिः सुधां पातुञ्च जिह्विका
अपि चिन्तामणिं लब्धुं धावत्येव मनोरथः ॥ १६१ ॥

एतन्निशम्य तनया दमनस्य किञ्चि-
न्नम्रानना स्मितविभूषितपल्लवौष्ठी ।
उन्मील्य नेत्रमलकाञ्चितभालमीष-
दाधूतमौलिरिदमाह समं स्मरन्ती ॥ १६२ ॥

नीलेन्दीवरकान्तिरिन्दुवदनश्चण्डांशुरश्मिर्वली
मञ्जीराङ्गदकिङ्किणीमणिशिखासंव्याप्तदिङ्मण्डलः ।
बाहुद्वन्द्वविधूतवारणकरः पीताम्बरः सुन्दरो
मच्चित्तं स जहार चारमुखतः कृष्णात्मजो विश्रुतः ॥ १६३ ॥

तच्छीलाकृतिवेशविभ्रमकथाप्रस्तावनायोग्यता
जानन्त्येव जगन्ति हन्त कथयेत् किं वा कुमारीजनः ।

---

१६१। विधुमित्यादि—कौलिन्यात् "त्वामहं कामये" इति स्पष्टं वक्तुमसमर्थः अप्रस्तुतेन विध्वादिधारणेन तदवगमयतीति भावः ।

१६३। नीलेन्दीवरकान्तिरित्यादि—न मया अशेषगुणशालिनं कृष्णात्मजं दृष्ट्वा एव तस्मिन् अनुरक्ता अपि तु चारमुखतः श्रुत्वैवासक्ता इति ।

तत्साम्यं भुवनेषु नेति बहुशः प्रामाणिकाद्विश्रुतं
त्वामालोक्य चिराय मुग्धहृदया वक्तुं नचास्मि क्षमा ॥१६४

उद्बुद्धतद्भावनिरुद्धधैर्य्या
नार्य्यैः कथञ्चिच्चपलेति चिन्त्या ।
प्रेमाभिभूतं मन ईदृशीना-
मुन्मत्तवज्जल्पति निर्व्विशङ्कम् ॥ १६५ ॥

तत्कान्तिसंस्मारितकान्तमूर्त्ति-
र्बाला गलद्बाष्पविलोचनेन ।
धारार्द्रचेलस्फुटचूचुकेन
संमोहयामास मनः समस्य ॥ १६६ ॥

तत्प्रेमनिर्ब्बन्धनिरुद्धकण्ठा
प्रोत्कण्ठया रोदितुमीहते च ।
तत्सम्भ्रमेण स्थगितान्तरेयं
दोलायमानेव बभूव बाला ॥ १६७ ॥

अथ दीर्घं निश्वस्य विलपति ।

चेतोजात हुताशनोऽसि न मृषा नाश्नासि किं स्वाश्रयं
नेत्रद्वन्द्व पयोधरोऽसि न कथं निर्व्वापयेः पावकम् ।
जीवेश स्मितभूषितेन वचसा नो पासि जीवं कथं
जीव त्वन्तु सदागतिस्तदपि किं पङ्गुत्वमालम्बसे ॥ १६८ ॥

---

१६४। तच्छीलाक्रान्तेत्यादि—कृष्णात्मजस्य समस्य सदृशमतुलरूपशालिनं त्वामवलोक्य चिराय अधीरा एव संवृत्ता इति भाव ।

१६७। तत् प्रेमेत्यादि—उत्कण्ठया उच्चैः रोदितुं चेष्टते किन्तु सम्भ्रमेण तन्निवारयति। अतएव दोलायमान-चित्तत्वम् ।

१६८। चेतोजातेत्यादि—विरहजोऽग्निः कथं देहं न दहति अविरलवारिधारापातनात्

नेत्रं चित्रिततत्प्रतीकनिपुणालोके निबद्धं दृढ़ं
श्रोत्रं दुर्म्मरकोकिलाकलकलैरामूलमुन्मीलितम् ।
चित्तं तत्र गतं प्रयाति न कथं त्वक् पापिनी निश्चला
जीव त्वं त्वरितं प्रयाहि भवतो नाथं समन्वेषय ॥ १६९ ॥

निमील्य नेत्रं नमिताननेन्दु-
र्निरुद्धकण्ठं स्तिमिताङ्गवल्लिः ।
सुतप्तनिश्वास-कदुष्णिताङ्गं
मुमूर्च्छ रेवा दयितं स्मरन्ती ॥ १७० ॥

तद्विस्मयोच्छूनविलोलनेत्रः
सद्भावहृष्टाङ्कुरिताखिलाङ्गः ।
स्नेहस्रुतास्रुः श्रितदेहकम्पः
शङ्काङ्कितान्तःकरणः समोऽभूत् ॥ १७१ ॥

मनोजसम्मोहनदेहकान्त्या
जगज्जितं तामरसायताक्ष्या ।
अनेन च प्रेमभरेण बाला-
बलाकुले मूर्द्धनि वर्त्तते स्म ॥ १७२ ॥

---

निषमहृत्यम् नेत्रवर्त्म कथं हृदयनिहितमग्निं न निर्व्वापयसि; प्रणयिनं लक्ष्यीकृत्य गदितं,—यत् पुष्पवज्रनिर्म्मितेन मनसा कथं [illegible] रचयसि, प्राणा वायव एव ते कथं देहं संत्यज्य न गता इति भावः ।

१६९। नेत्रमित्यादि—चक्षुरादीनामिन्द्रियाणां समरूपदर्शनात् निश्चलावस्था। चलत्येव देहं त्यक्त्वा प्राणानां गमनमेव श्रेय इति तात्पर्य्यम् ।

१७१। तद्विस्मयोच्छूनेत्यादि—मोहमुपगतां प्रियां समीक्ष्य समः संशयाकुलितचित्तो जातः इति ।

१७२। मनोजेत्यादि—रूपेण प्राक् त्रिजगज्जितमेव, अनेन प्रणयप्रदर्शनेन पुनः अबलाजनानां मूर्द्धनि वर्त्तते एव ।

अचेतनां तामवधाय धीरो
द्रुतं समाश्वासयितुं प्रवृत्तः।
अलेपयच्चन्दनचन्द्रसंघै-
रवीजयच्चामरतालवृन्तैः ॥ १७३ ॥

प्रियोक्तिभिः पल्लवतल्पकेन
करारविन्दोदरमार्जनेन।
उशीरकाश्मीरजलेपनेन
प्रियः प्रियां पर्य्यचरत् सखीव ॥ १७४ ॥

मयूरपारावतकोकिलादि
विहङ्गमानामपि कूजितानि
इमां शिरीषादपि कोमलाङ्गीं
प्रबोधयन्तीव मनोजमग्नाम् ॥ १७५ ॥

तद्देह-वासांस्यपि भूषणानि
विमोच्य धीमान् करलाघवेन।
चिरं सुविस्तारितपीननेत्रो
ददर्श तस्या निखिलाङ्गशोभाम् ॥ १७६ ॥

एकैकमङ्गं विनिपात्य दृष्टि-
रन्यत्र गन्तुं न शशाक तस्यैं।
इतोऽधिकं वान्यदितीव लोभा-
ज्जगाम यत्नादपरं चिरेण ॥ १७७ ॥

---

१७३। अचेतनामित्यादि—गतचेतनां रेवां विलोक्य समाश्वासयति।

१७४। प्रियोक्तिभिः इत्यादि—सखीव पर्य्यचरदित्यनेनानुरागबाहुल्यं प्रदर्शितम्।

वक्त्रेन्दुशोभामनुभूय तस्या
आनन्दवारांनिधिमग्नदेहा ।
दृष्टिर्गता यत्नवती समस्य
वक्षोजकुम्भाववलम्बनाय ॥ १७८ ॥

अथ स्वगतम् ।

विस्तारि महजं निरीक्ष्य कठिनं दुर्व्वारमुत्कण्ठिता-
वाश्लिष्येव परस्परं कियदपि प्रोद्यातुमेवोद्यतौ ।
उत्थानेऽपि विरोधिनीं सुरभुवं संवीक्ष्य तन्व्यास्तनौ
हैमापूर्व्वमहीधरावपि मुखे ग्लानिं चिरं चक्रतुः ॥ १७९ ॥

अपिच—

नाम्भोजे तुहिनांशुना विलसिते हैमौ न कुम्भाविमा-
वन्तःपूर्णतयान्वितौ न भवतश्चक्रौ निशाश्लेषिणौ ।
नो वा मन्मथदुन्दुभी करहतैर्यन्मौनमालम्बितौ
तत्तन्व्या हृदि मञ्जुले स्मृतिभुवा कौ नाम विन्यासितौ ॥१८०॥

मुखेन्दावुत्फुल्लां स्तनशिखरिणि प्रेमतरलां
स्खलन्नीवीबन्धे मदनलहरी-केलिकलिताम् ।
अधो नाभेर्दृष्टिं विलसति समे स्पन्दरहितां
कृशाङ्ग्याः स्पृष्टाङ्गं पुलकमुकुलालङ्कृतमभूत् ॥ १८१ ॥

पिपासूनां वारां तुहिनमिलितानामिव नदी
निदाघैरार्त्तानां मलयपवनानामिव घटा ।
दरिद्राणां चिन्तामलकलितहेम्नामिव घटी
समस्यासीद्रेवा हृदयसुखसन्दोहजननी ॥ १८२ ॥

---

१८२। पिपासूनामित्यादि—हिमशीतलानामपां नदीव तृष्णार्त्तानाम्, निदाघतप्तानां दक्षिणानिलनिर्य्यास इव अकिञ्चनानां स्वप्नदृष्टरत्नविशेष इव रेवा समस्य प्रचुरामोदविधायिनी आसीदित्यर्थः ।

समः। निपुणं निभालयन्।

अहो किमियं कथञ्चित् प्रकृतिमापन्ना। तथाह्यस्याः—

चकित-चकितमङ्गं वेपते क्वापि तन्व्या
उरसिजमपि गोप्तुं चेष्टते पाणिरल्पम्।
किमपि किमपि वक्तुं कम्पते चाधरोष्ठं
नयनमपि कथञ्चित् स्पन्दितैकैकपक्ष्म॥ १८३॥

निबद्धे धम्मिल्ले वपुषि वसनाच्छादिततमे
यथास्थानं नीते कनकमणिरत्नादिनिवहे।
श्लथां नीवीं बन्धुं विनिहितकरेऽस्मिंश्चमकिता
कृशाङ्गी कृच्छ्रेण स्फुटयति दृशोः कोणमवला॥ १८४॥

विस्तार्य नेत्रमलसायितमर्द्धमेव
सुप्तोत्थितेव पटसंवृतनम्रमौलिः।
तद्बन्धुकृत्यमवधाय चिरं विचिन्त्य
लज्जाभयस्मयदयोर्म्मिषु सा ममज्ज॥ १८५॥

कपोलः स्विन्नोऽस्याः पुलकमुकुलालङ्कृतमुरः
स्तनाभोगः कम्पी मधुर-वचनञ्चाधरदलम्।
तथा स्मेरं वक्त्रं नयननलिनं स्पन्दरहितं
मनः प्रेमाबद्धं कथयति तमाश्वासयति च॥ १८६॥

---

१८३। चकितेत्यादि—मूर्च्छाभङ्गप्रसङ्गात् हृद्गुणिहितमदनपीडाभिभूतत्वाच्च किमपि वक्तुं द्रष्टुं वा कथं कथमपि शक्नोतीति भावः।

१८४। निबद्धे इत्यादि—श्लथवसनत्वाद् व्रीड़ा सञ्जाता, तज्जनित एव विस्मयः अतएव कृच्छ्रेण नेत्रनिमीलनमिति भावः।

१८५। विस्तार्य्येत्यादि—प्रियतमकृतं बन्धुकृत्यमवलोक्य आनन्दविस्मयरसोर्म्मिषु सा ममज्ज इति भावः।

१८६। कपोल इत्यादि—तां तामवस्थां निरीक्ष्य—प्रेमाबद्धं मनः इत्यवलोक्य च मयि एव बद्धचित्तेयमिति विश्वस्त इत्यर्थः।

तथार्द्रं तच्चेतो विनयपरिचर्य्यां बहुविधां
मनः स्वीयं साधु प्रणयिनि च तत्रोत्सुकमपि ।
अलक्ष्यं तं योधैर्निजपुरगतं वीक्ष्य रभसा-
दसन्दिग्धं चित्तं रचयति चिरं चिन्तयति सा ॥ १८७ ॥

विना कार्ष्णिं वर्षाजलदरुचिरं स्निग्धहृदयं
न चान्यो मां स्प्रष्टुं कलयति करं कोऽपि गतभीः ।
स एवायं दैवाच्चरविदित-मत्तादृश-दशः
स्वयं दीनामेनामनुभवितुमेवागत इह ॥ १८८ ॥

श्रुतं देवेनापि प्रबलतरकुम्भोरकलितः
स्मृतेनैव त्रातो मृत इव जलाद्वारणपतिः ।
तथैवैनां त्रातुं विरहजलधौ मग्नहृदयां
कृपालुः कन्दर्पावरज इह दैवाद्विलसति ॥ १८९ ॥

दैवादकालजलदस्रातकौमभिवर्षति ।
कुमुद्वतीविनोदाय स्वयमिन्दुरुदेति च ॥ १९० ॥

इत्थं सुनिर्णयवतो क्षितिलग्नजानु-
र्बद्धाञ्जलिश्चरणयोः सहसा निपत्य ।
ऊचे प्रियं करुणया मयि पक्षपातैः
कान्त्या गिरापि विदितोऽसि ममैव नाथः ॥ १९१ ॥

---

१८७। तथार्द्रमित्यादि—तथाविधं मनः आर्द्रं समवलोक्य परिचर्य्यांच दृष्ट्वा तस्मिन् स्वकीयं मनः उत्सुकमपि अनुभूय कार्ष्णिरेवायमिति निःसंशया इति भावः ।

१८८। विनेत्यादि—कृष्णात्मजं विना अन्यः कोऽपि—निर्भयः सन् मां स्प्रष्टुं न शक्नोति, मन्ये चरमुखान्मदीयां दशां श्रुत्वैवागतः इति ।

१९०। दैवादित्यादि—विधिवशादसम्भवस्यापि सम्भव इति तात्पर्य्यम् ।

१९१। इत्थमित्यादि—आकारैरिङ्गितैर्गत्या अवधारितं यत् ममैव प्रभुस्त्वमिति ।

सन्मौक्तिकाक्षतचयैर्घनपद्म-दूर्व्वा-
वृन्देन मन्दमधुरस्मितमाक्षिकेण ।
नेत्रोत्पलेन गलदश्रुजलेन तन्वी
तत्पूजनं कृतवती निजवल्लभस्य: १९२ ॥

बद्धाञ्जलि: प्रणतमौलि-समीकृतभ्रु:
सङ्कोचिताक्षिदरकम्पितदेहवल्लि: ।
मन्दाक्षमन्दमधुराक्षरमेव किञ्चि-
दूचे क्षितीशतनया जगदीशसूनुम् ॥ १९३ ॥

दुर्व्वार-तादृश-दुरन्त-गभीर-तीव्र-
संबाधनैरपि वहामि यदर्थमेव ।
जीवं तमेव करुणाम्बुधिमद्य लब्ध्वा
निर्व्वाणसौख्यमपि वल्लभ तुच्छयामि ॥ १९४ ॥

त्वत्पादपद्ममकरन्दरसातिलुब्धां
भृङ्गीमिमां कलय नापरपुष्परक्ताम् ।
पीयूषकुम्भमपहाय रसान्तरेषु
धावन्ति नैव चपलान्यपि मानसानि ॥ १९५ ॥

१९२। सन्मौक्तिकेत्यादि—देवपूजादौ उपचारबाहुल्यं सर्व्वत्रैव दृश्यते, तत्र च पारक्यानुपचारानाक्षिप्य शारीरानेवोपचारानुरीचकार प्रियपूजार्थमितिभाव: ।

१९४। दुर्व्वारेत्यादि—प्रायेण जना: मुक्तये एव यतन्ते अहं पुन: मुक्तिदातारं भवन्तं लब्ध्वापि निर्व्वाणसुखं लब्धुं नेच्छामि ।

१९५। त्वदित्यादि—तव चरणसरोजासक्तां मां जानीहि, चञ्चलान्यपि मनांसि अमृतान्वेषणतत्पराण्येव ।

यत् सखीष्वपि मया सुगोपितम्
यच्चिरादधिगतञ्च निद्रया
यच्च चित्रफलके विलोकितं
तत् स्फुटं त्वयि वदामि निस्त्रपा ॥ २०० ॥

शीतभानुकिरणेन तप्यते
दक्षिणेन पवनेन दह्यते ।
कोकिला-कलरवेण बध्यते
या हि तामनुगृहाण वत्सल ॥ २०१ ॥

तत्तद्वचोऽमृतरसैरभिसेचनेन
तच्चारुकुन्तलमनोहरचामरेण ।
तस्याश्चिरन्तनमनोरथरोहणेन
तस्यामिवास रुचिरं स्मरयौवराज्यम् ॥ २०२ ॥

सारल्यपीयूषरसाभिषिक्तं
वचो निशम्याशु यदुप्रवीरः ।
आनन्दवारांनिधिमग्नदेहः
क्षणादथोन्मज्य मनाक् स्थिरोऽभूत् ॥ २०३ ॥

---

२०१। शीतेत्यादि—विरहजनितसन्तापेन तुहिनदीधितिरपि क्लेशदायकः सम्भूतः। मलयोऽपि दाहक एव जातः कोकिलकूजनं तु सर्व्वथा मृत्युमेवाह्वयतीति भावः।

२०२। तत्तदित्यादि—अभिषेकव्यञ्जनारोहणादयस्तु प्रकृते सर्व्वथोपयोगिनः अतस्तेषामुल्लेखः।

२०३। सारल्येत्यादि—अमृतह्रदावगाहनात् परं यथा मोदातिशय्यं तद्वत् वचो निशम्य अस्यावस्था।

गुणैरुदारैर्गदितानुभूतै
रूपैश्च तैर्वीचयलक्षितैः सः ।
निजानुरूपामवधाय धीर-
स्तां भूपजामुत्तरयाम्बभूव ॥ २०४ ॥

किमीदृशं कूजसि पङ्कजाक्षि
तवानुकम्पाग्रहिले हि मादृशि ।
रङ्कस्य पाणौ निधिसन्निवेशे
नापेक्षणीयानुमतिस्तदीया ॥ २०५ ॥

कोमलाङ्ग्यकुटिलं वचोऽमृतं
तन्निपीय फलितो मनोरथः ।
वक्रताविरहितानि योषितां
दुर्लभानि तु वचांसि मन्महे ॥ २०६ ॥

यामिनीविरहदूनमानस-
स्त्यक्तकुड्मलितभूरिभूरुहः ।
बिन्दु-बिन्दु-मकरन्दलोलुपः
पद्मिनीं मधुप एव याचते ॥ २०७ ॥

---

२०४। गुणैरित्यादि—रूपसम्पदा गुणसम्पदा च स्वीयानुरूपामवगम्य नृपसुतामुवाच इति ।

२०५। किमीदृशमित्यादि—त्वदीयकृपाप्रार्थमागतं मां दृष्ट्वा ईदृक्जल्पनं नोचितम् । रङ्कः दरिद्रः तस्य हस्ते धनसन्निवेशनेऽनुमतिर्नापेक्ष्या ।

२०६। कोमलेत्यादि—अकुटिलं योषिद्भाषितं मया कदापि न श्रुतम्, इदानीं भवत्याम् एव परिलक्ष्यते । सर्व्वथा गुणातिशय्यं प्रकटयति ।

२०७। यामिनीत्यादि—सर्व्वथा त्वामेव प्रार्थयेऽहमिति तात्पर्य्यम् ।

मदग्रजन्मा मदनः कृशानु-
र्दिवानिशं तापयते मनो मे ।
तवानुकम्पाजलदेन देवा-
च्चिरेण शान्तिं लभतां स एव ॥ २०८ ॥

मद्विप्रलम्भात्तव तन्वि यादृक्
तद्विप्रलम्भान्मम तादृशाधिः ।
मदर्थमाधौ भवती निमग्ने-
त्यहं पुनस्तद्द्विगुणं दुनोमि ॥ २०९ ॥

अहेतुकाह्लादकमेव साधोः
केर्व्वर्णनीयं चरितं दयालोः ।
घनावली चातकतप्तकण्ठं
धाराभिरासेचयति स्वयं हि ॥ २१० ॥

अये मया किं सुकृतं कृतं वा
त्वमीदृशी मय्यनुकम्पिनी यत् ।
स्वर्नाथपुर्य्या अवतीर्य्य किन्नु
रङ्काङ्कमारोहति कल्पवल्ली ॥ २११ ॥

---

२०८। मदग्रेत्यादि—रतिपतेः प्रभावात् सर्व्वे एव मुह्यन्ति, ज्ञातिविरोधकारणात् मयि तु विशेषेण कोपः परिलक्ष्यते ।

२०९। मद्विप्रलम्भादित्यादि—मद्विरहात् भवत्या यादृशी दशा याता तव विरहान्मम तादृशी एव, अतः मदर्थं पुनः भवत्याः खेदश्चेत् कष्टात् कष्टतरमेव भवेत् ।

२१०। अहेतुकेत्यादि—चातकानां तृप्तये मेघस्य वर्षणे कोऽपि प्रयोजको न दृश्यते, अत्रापि तस्याभाव इति ।

२११। अयी इत्यादि—प्राक्तनस्य कर्म्मणः फलमेतदिति भावः। कल्पद्रुमाणां रङ्काङ्कारोहणं सुतरामिव ।

विच्छेदवैश्वानरदग्धचित्तं
कुत्रापि तापं न मनागह्वासीत् ।
त्वत्प्रेमपीयूषरसाभिषेका-
द्दुत्पल्लवं सम्प्रति तद्बभूव ॥ २१२ ॥

यदर्थमाजन्म तपश्चरामि
यदर्थमन्यत्र न निर्वृणोमि ।
यदर्थमुन्मत्त इव भ्रमामि
स मे निधिः पाणितलावलम्बी ॥ २१३ ॥

प्रिया यदि स्यान्नयनातिथिर्मे
तदा मयैतद्विनिवेदनीयम् ।
इतीदृशाकाङ्क्षित-मानसोऽपि
तवाश्रितोऽहं जड़तामुपैमि ॥ २१४ ॥ (१)

त्वत्पाणिपद्म-मकरन्द-विमिश्रचित्र-
मेणाक्षि वीक्षितुमये यतते मनो मे ।
भावानुबन्धमनुभूय चिरेण चित्त-
मानन्दयामि नयने च विनोदयामि ॥ २१५ ॥

---

२१२। विच्छेदेत्यादि—विरहानलेन भृशं दग्धः सन्नपि त्वदीय—प्रेमामृत-धाराभिः पुनः सञ्जीवित इत्यर्थः ।

२१४। प्रियेत्यादि—साक्षात् प्रियामधिगम्य एतन्मया कथनीयमिति पूर्व्वं निर्द्धारित-मासीत्, अधुनाभावानुबन्धात् भवत्याः समीपे जाड्यमेव सम्वृत्तम् ।

---

(१) तवायतोऽहं ।

उत्सृज्य धैर्यमवतारय चित्रितानि
मत्काङ्क्षितेऽत्र न मनागपि ह्रीर्विधेया ।
तत् प्रेम सद्वदति मन्मथतन्त्रवेत्ता
ह्यन्योन्यतः किमपि यत्र न गोपनीयम् ।।२१६।।
यद् यत्त्वया निगदितं मयि पक्षपाते
तत्तत् प्रमाणय सुचित्रविलोकनाभिः ।
नानारसैर्विरचितानि भवन्ति तानि
कौतूहलाकुलितमित्थममुत्र चित्तम् ।।२१७।।
भावबन्धमपि पाणिकौशलं
वक्ति चित्रफलकं विलोकितम् ।
यद् यदेव विरहाद्विचिन्त्यते
तत्तदेव फलके हि लिख्यते ।।२१८।।
आपीय वागमृतमस्य विचिन्त्य रेवा
प्रेयांसमुत्सुकयितुं मसृणं जगाद ।
नाथ त्वदीयगदितेन विमुग्धचित्ता
धैर्याय नाञ्जलिमहो वद का ददाति ।।२१९।।
बालाजनेन हृदयाहितचापलेन
संक्रीडिते किमिति हा ग्रहिलं मनस्ते ।
पीयूषवारिनिधिभूरिविहारभाजां
किं स्विन्मुदं वितनुते वद वारिबिन्दुः ।।२२०।।
त्वद्वाक्यकौशलशतैः परिपीतधैर्या
कार्यन्त्वनार्यमपि नाथ करोमि बाला ।
आधोरणीयपटुताप्रतियातगर्वा
पङ्काकुलं गजवधूश्चरतीव वर्त्म ।।२२१।।
अस्मिन्मया रुचि-विचित्रतयातिमौढ्या-
दौचित्यशून्यमपि यद् यदलेखि नाथ ।

तत् क्षम्यताञ्चरणयोरयमञ्जलिस्ते
भृत्यापराधपरिहारगुणो हि भर्त्ता ॥२२२॥

इति पर्यङ्काचित्रफलकं विस्तार्य दर्शयन्ती सलज्जमधोमुखी तिष्ठति। समः सादरं तत् पाणिकमलादानीय विस्तार्य निर्वर्णयति।

निजा मूर्तिः क्वापि प्रकरमणिरत्नासनगताऽ-
विदूरे रेवापि व्यजनपवनं संविदधती।
क्वचित्तल्पे सुप्तं पदनिहितपाणिः सुखयति
क्वचिन्नानाद्रव्यैः प्रियतममियं तोषयति च ॥२२३॥

समः सीत्कृत्य पुलकालङ्कृतो निभालयति।

क्वचिन्नानायन्त्रैरतुलमिथुनं गायति समं
क्वचिद्वापीकूले कमलकुलशोभां कलयति।
क्वचित् क्रीडामक्षै रचयति चिरं नर्मकलहैः
पणार्थं रेवायाः करधृतकरः क्रीडति समः ॥२२४॥

( क्वापि )

उन्नीय पाणिकमलेन मुखारविन्द-
मालोक्य निश्चलदृशा स्मरलोभिशोभाम्।
निर्माय मञ्जुतिलकानलिके प्रियायाः
कर्णेऽवतंसयति केशरकोरकं सः ॥२२५॥

( क्वापि )

लोलालकान् विरचयन् कुसुमावनद्धान्
पत्रावलीमपि विधाय चिरं कपोले।
शुद्धाङ्गुलेन सदयं मुखमुन्नमय्य
बिम्बाधरं मृगदृशो दयितश्चुचुम्ब ॥२२६॥

( क्वापि )

कुञ्जोदरे तमसि गुप्ततनुः प्रियोऽभू-
दन्वेषयन्त्यथ चिरं दयिता जुघूर्णे।

सौदामिनीकिरणदष्टतनौ प्रिये चे-
दन्योन्यमेव मदनोत्सवमातनोति ॥२२७॥

( कापि )

कनकरचितहर्म्ये रम्यतल्पान्तरस्थौ
हृदयनिहितभावं बोधयन्तौ स्मितेन ।
अनुनयपरिपाटीं पालयन्तौ कथञ्चि-
न्मनसिजमपि मुग्धं चक्रतुस्तौ रजन्याम् ॥२२८॥

( कापि )

तल्पोपरि प्रियतमोरसि संविलग्ना
रेखेव काञ्चनमयी निकषाधिरूढा ।
व्यस्ताङ्गरागमलसायितगात्रवल्लि-
र्निद्राति निर्भरमियं विगलच्छिरोजा ॥२२९॥

( समो मीलितविलोचनः श्लथभूषणः पुलकपटलीदन्तुरितदेहलतिकः पाणितलनिपतच्चित्रफलकः क्षणं निद्रित इवास । क्षणादुन्निद्र इवापरमालोकयति । रेवा अन्यदवलोकयितुं विस्तारितपटे प्रेयसि किञ्चित् पटं संवृणोति । )

समः । प्रिये, एतदवलोकनेनापि हृदयं विनोदयितुमुद्यते किमिति काठिन्यं वहसि । इति बलादिव संगृह्य विस्तार्य विलोकयति ।

आनम्राननमावृताङ्गमलिकव्यालोलमुक्ताफलं
तिर्यग्भ्रूनतमर्धशोणनयनं प्रोत्कम्पिबिम्बाधरम् ।
उन्मृष्टाङ्गविलेपनं मृदु मृदु व्याघूर्णहस्ताम्बुजं
स्वेदार्द्रौष्ठमनक्षरं प्रियतमे मानं व्यनक्ति प्रिया ॥२३०॥
कान्तः कम्पितदेहवल्लिविचलन्नेत्रं नमत्कन्धरम्
अङ्कान्तर्विनिवेशिताङ्गमभितो व्यासक्तपाणिद्वयम् ।
कोपालोकनसम्भ्रमादगणयन् स्वस्मिन्नहो गौरवं
सद्यो विस्मृतधैर्य एव दयितापादाम्बुजं वन्दते ॥२३१॥

इति सोत्सुकमवलोकयन्—प्रिये, केनापराधेन ममेयमनुकम्पा।

चित्तं स्वर्वनिताकथासु न मनागालम्बितं कुत्रचि-
न्नेत्रं त्वत्सहचारिणीष्वपि न वा साकूतमारोपितम्।
आकौमारमरुन्तुदं नहि मया स्वप्नेऽपि ते व्याहृतं
तत् किं नीलसरोजमद्य कुरुषे शोणारविन्दं प्रिये ॥२३२॥

तदन्तिकेऽपरामवलोक्य—प्रिये, केयं तप्तचामीकरतिरस्कारकान्तिर्वदनच्छविनिन्दित-शारदशीतद्युतिरञ्जनरञ्जितमञ्जुल--नयननासाविनिहिताङ्गुलीकिसलया भवतीं मानान्निवारयन्ती किमपि जल्पतीवाऽऽलक्ष्यते।

रेवा। नाथ, एषा नाम्ना सुमुखी मम सखी।

समः। प्रिये अतो हि ममाप्यत्र सदयं हृदयम्। तत्पुरतो लिखितं पद्यद्वयं वाचयति।

दीर्घं कुप्यसि नो शृणोषि गदितं सख्या अपि प्रेयसि
त्वं किं निर्दयमानसा प्रियतमे नैष्ठुर्यमालम्बसे।
एतत् पश्य कुमुद्वतीरतिकलामुग्धोऽपि पुष्पन्धयः
प्रातः स्मेरसरोजिनीभिरनिलैरानीय सम्भुज्यते ॥२३३॥

मौलिं सन्नमयन् दृशौ तरलयन् पाणी च सम्मर्दय-
न्नङ्केऽङ्गं विनिवेशयंस्तव मृषा मानं समुद्भावयन्।
कान्तः पृच्छति गद्गदेन वचसा त्वं मौनमालम्बसे
तन्मन्ये सखि मुद्रिता कमलिनी मुक्तालिना नेक्षिता ॥२३४॥

( रेवां प्रति )—प्रिये, किमित्यरुन्तुदमिदमालिखितं त्वया।

रेवा। नाथ निजोपदेशाय, यथा पुनरनया नैवमपराध्यते ( इति सभयमधोमुखी तिष्ठति )।

समः। ( सानुनयं ) प्रिये अलमलमपराधशङ्कया।

धन्यैः कोपविघूर्णिशोणकुटिला दृष्टिः समालोक्यते
सोत्कम्पाधरपल्लवामृतरसैरासिच्यते स्वाधरः।

स्वेदार्द्रा तनुमञ्जरी मृदु मृदु प्रोन्मृज्यते पाणिना ,
प्रेयस्याः प्रणयेन नम्रशिरसा पादद्वयं वन्द्यते ॥२३५॥

किं बहुना मृषाविषादविधुरां भवतीमवलोकयतो मम समुत्तरलितं चेतस्तदुपशमाय तथैव विधातुमुत्सहते ।

(निशम्य) रेवा—

ईषद्विवृत्तपटसंवृतवक्त्रपद्मा
सङ्कोचि पादनलिनं दरकम्पि गात्रम् ।
सन्तोषविस्मयकुतूहलघूर्णि चित्तं
धर्त्तुं शशाक न मनाक् तनया नृपस्य ॥२३६॥

समः । प्रिये

तच्छुद्धचित्तपरिवर्जितभूरिभाव-
सम्भावना मयि तु चित्रचयेन जाता ।
मन्मानसं त्वयि तु कीदृगिदं कृशाङ्गि
जानाति केवलमसौ कुटिलो मनोभूः ॥२३७॥

रेवा । नाथ अकथितमपि विज्ञातमेतत् तथाहि,—

न यस्य हृदयं यत्र न सा तत्रानुरज्यते ।
सन्दिग्धं हि मनः स्वीयं प्रमाणयति सज्जनः ॥२३८॥

समः । प्रिये साधु विमृष्टं, किन्तु मदुदीरितमपि वचः प्रमाणय ।

तथाहि—

पश्यामि मूर्त्तिनिचितानि दिशां मुखानि
जिह्वा करोति तव वर्णनमायताक्षि ।
त्वद्व्याहृतानि कलकण्ठि सदा शृणोमि
प्रेमानुबन्धमनिशं तनुते मनो मे ॥२३९॥

प्रेम्णा पुरो गतवतां भवती कदाचिद्
रात्रौ सुधाकर-करस्फुटमल्लिकायाम् ।

त्वां धर्त्तुमुद्यतकरे मयि मद्वयस्यै-
रन्योन्यसस्मितमुखान्यवलोकितानि ॥२४०॥

त्वत्प्रेमबद्धहृदयो जगतीं भ्रमामि
कुत्रापि विस्मय-रसेन च निर्वृणोमि ।
मामुन्मदप्रतिममूर्त्तिमुदीक्ष्य दूनः
श्रीनारदो मुनिरदात् कृपयैव विद्याम् ॥२४१॥

तस्याः प्रभावत इहागत एव तन्वि
निद्रायिताञ्च भवतीं निपुणं विलोक्य ।
त्वद्व्याहृतामृतरसेन चिरेण देह-
मानन्दवारिनिधिवीचिषु मज्जयामि ॥२४२॥

तवाऽऽलापः कर्णे वपुषि च परीरम्भ-निवह-
स्तथा मूर्तिर्नेत्रे विलसति विलग्नैव दयिते ।
सदा चेतस्यास्ते त्रिभुवनमनोहारि चरितं
तथाप्युत्कण्ठा किं किमिति मम चित्तं व्यथयति ॥२४३॥

त्वत्प्रेमामृतधोरणीभिरभितः सिक्तश्चिरायादरा-
दुत्तुङ्गैर्भवदीयनिर्मलगुणैः सन्दानितो निर्भरम् ।
वारंवारमहो तव स्मृतिमहौषध्यादिभिः पालितो
मच्चेतोहरिणस्तथापि नितरामुन्मत्तवद्धावति ॥२४४॥

आकर्ण्य लोकमुखतोऽपि कथां मदीया-
मीदृग्विधस्तव कृशोदरि भावबन्धः ।
एतावतैव कलकण्ठि कृतोऽस्मि दास-
श्चाटूक्तिभिः कथमिमं कुरुषे विमुग्धम् ॥२४५॥

आलोक्य चित्रमनुभूय च भावबन्ध-
मापीय वागमृतमस्य चिरेण पूर्णाः (?) ।
त्वां लब्धुमुन्मदमनोज-वशाः क्षितीशाः
के वा तपांसि न चरन्ति सुदुश्चराणि ॥२४६॥

नालोकितं भुवनमोहनरूपमीदृग्

नाकर्णितं स्फुटवचः कुलकामिनीनाम् ।

नैवानुभूतमिह कैरपि शीलमेकं

नो वा श्रुतस्तव सदृक् क्वचनानुरागः ॥२४७॥

विप्रलम्भविधुरं निरन्तरं

जीवितश्चिरमनेन गर्हितम् ।

प्रेमबन्धमनुभूय साम्प्रतं

साधु साधु तदहो निगद्यते ॥२४८॥

येपु येषु चरितेषु चिन्तनै-

र्यापितं जनुरनेन सुन्दरि ।

तानि तानि नयनेन पश्यता

लब्ध एव निखिलो मनोरथः ॥५४६॥

चित्रेषु यानि लिखितानि करारविन्द-

द्वन्द्वेन सुन्दरि चिरान्मयि बद्धाभावैः ।

तस्माच्चिरन्तनकृतैः सुकृतैर्न जाने

तथ्यानि तानि ललिताङ्गि कदा भवेयुः ॥२५०॥

अथ सविनयं प्रिये महर्षिदत्तां विद्यां मत्तो विज्ञाय एतत् पुरमहमिव त्वमपि द्वारावतीमलङ्कुरु, मैवञ्चेत् कदा पुनरावयोर्दर्शनं कथं वेति चिन्तयंस्तरलीभूतोऽस्मि ।

रेवा। नाथ साधु विचिन्तितमेतत्। किन्तु मदेकतनयौ पितरौ तावनालोक्य तथा विधाने वेपते मे हृदयम् ।

अपिच—

धरायां धरणीनाथतनयां बाहुशालिनः ।

हरन्ति वनितां नैव चौरा इव कदाचन ॥२५१॥

ईदृग्विधावात्मसमर्पणे तु

नापेक्षणीयाऽनुमतिर्हि पित्रोः ।

पयोनिधेरङ्कविगाहने तु
तरङ्गिणी पृच्छति नैव कञ्चित् ॥२५२॥
मनोरथेन स्वपतीकृतो यः
स्वयम्बरे तं वृणते कुमार्यः ।
महेन्द्रमुख्याः प्रतिकूलभाज-
स्तथापि भैमी नलमेव लेभे ॥२५३॥
स्वयम्बरव्याजसमागतश्री-
गोविन्दपादाब्जरजांसि मूर्ध्नि ।
बहन्तु भृत्याः पुरजाः पितापि
तत्पूजनैः स्वं सफलीकरोतु ॥२५४॥
यः कीर्तितो निजपदं विदधाति सद्यो
ध्यातो महात्मभिरघं द्रुतमेव हन्ति ।
आराधितः सुकृतिभिर्विपदं भिनत्ति
तद्दर्शनाय भुवने वद कस्य नार्तिः ॥२५५॥
यत्पादपङ्कजरजःपरिलिप्तमौलि-
रम्भोज-योनिरयमातनुते जगन्ति ।
यस्यावनेजनजलं भुवनं पुनीते
भूमीतलं तदधिरोहविचित्रमेतत् ॥२५६॥
भूतं भावि भवद् यदीयजठरे दृष्टं क्षणादम्बया
यद्द्रोहादपि पूतना निरुपमां लेभे गतिं सात्वतीम् ।
यन्नामैव गृणन् दुरापममरैर्धामाऽऽस्थितोऽजामिल-
स्तत्पीताम्बरचारुपादनलिनं पश्यन्तु मे बान्धवाः ॥२५७॥
गोप्यस्त्यक्तकुलव्रता गतह्रियः प्रेमाश्रुभिः पूरिताः
कारुण्यार्द्रदृगञ्चला हतधियः स्वीयैश्चिरं वारिताः ।
वेणुध्वाननिपीतधैर्यविभवा भेजुर्निकुञ्जोदरे
यत्पादाब्जमये तदीयपदयोः पूजां न को वाञ्छति ॥२५८॥

महामहोपाध्याय-बाणेश्वरकृता

# चित्रचम्पूः

वन्दे करीन्द्राननमिन्दुमौलिं वृन्दारकेन्द्रैरभिवन्द्यमानम् ।
विघ्नाटवीदारणदारुणैकदन्तं जगन्मङ्गलकुम्भकुम्भम् ॥१॥

अपि च,

अङ्कारोहणवाञ्छया गिरिभुवो यान्तं प्रति स्वं हठाद्
भ्रान्त्या वन्यमतङ्गजस्य कुपितं तद्वाहकण्ठीरवम् ।
दृष्ट्वा चीत्कृतिगर्जितैस्त्रिजगतीमुद्वेपयन् सस्मितं
देव्याऽङ्के कलितः सुरासुरनुतो[1] लम्बोदरः पातु वः ॥२॥

किञ्च—

समन्तादुद्दामद्युतिनिहतघोरान्धतमसे
कलानाथश्रेणीकृतरुचिरभूषे निरुपमे ।
शरण्ये सम्पूज्ये निरवधिपरानन्दसदने
हरेः पादाम्भोजे तव हृदयभृङ्गो विहरतु ॥३॥

बिभ्राणां निखिलप्रकाशनकरीं सौदामनीं[2] शाश्वतीं
प्रेमक्षौणिरुहैकवर्धनकरीं कान्तामनन्तास्पदाम् ।
बाह्याभ्यन्तरदुर्निवारबहुधासन्तापशान्तिप्रदां
धाराश्चारु वितन्वतीं स्मर मनः कादम्बिनीं कामपि ॥४॥

यद् गोलोकविलासकेलिरसिकं भ्रूभङ्गभङ्गीलव[3]-
क्रीडाविष्कृतसर्गसंस्थितिलयं सारं श्रुतीनामपि ।

---

1. नुतो—प १,२ ; स्तुतो—इ ।
2. सौदामिनी—इ ।    3. नव—इ ।

वृन्दारण्य-निकुञ्जपुञ्जभवनं तन्मे मनःपञ्जरे
राधामाधवसंज्ञितं विजयतामन्द्वन्द्वमाद्यं महः ॥५॥
कषितविमलहेमोद्दामरेखाङ्कमाला-
वलयित इव भूयादिन्द्रनीलो मणिस्ते ।
हृदि निरवधिराधालिङ्गित-श्रीमदङ्गो
निखिल-हृदयहारिभ्रूनरङ्गो मुरारिः ॥६॥
नत्वा श्रीगुरुपादपङ्कजयुगं श्रीरामपादाम्बुजं
श्रीमल्लक्ष्मणजानकीहनुमतां पादारविन्दान्यपि ।
धीर-श्रीयुत**चित्रसेन**धरणीधौरेय-चूडामणे-
रादेशेन समातनोति किमपि श्रीयुक्त**बाणेश्वरः** ॥७॥
पूर्वेषामतिमात्रहारिमधुरव्याहारलीलाभृतां
धीराणां भणितेषु सत्स्वपि समारम्भातिदम्भादिदम् ।
क्षन्तव्यं करुणामयैः सकरुणा[1] दृष्टिर्विधेया यतः
स्पर्शः स्पर्शमणेरयोऽपि तनुते हेमात्मनीनैर्गुणैः ॥८॥
अभूदभूतप्रतिमो महामतिर्महीपतिर्भूमिमहेन्द्रसन्ततिः ।
मनोभवस्पर्धिमनोहराकृतिर्मुरारिपादाब्जयुगस्फुरन्मतिः ॥९॥
निसर्गरम्याद्भुतसर्गकौतुकी स्फुरत्त्रिवेदीचतुराननच्छविः ।
निबद्धपद्मासनसुन्दराकृतिः सरोजयोनिर्भगवानिवापरः ॥१०॥
गिरा श्रिया च स्फुरदुत्तमाकृतिर्जगत्परित्राणविधानसत्कृतिः ।
सुपुण्डरीकाक्षतया मनोहरो रथाङ्गपाणिर्भगवानिवापरः ॥११॥
पुरार्जितैर्दुस्तरभूरि[2]दुष्कृतैश्चिराय बद्धानपि यः स्वकेतने ।
विमोचयामास दयार्द्रमानसः पिनाकपाणिर्भगवानिवापरः ॥१२॥

यश्च निखिलभूमिपाल-मौलिमाला-विराजमान-किरीट-घटाविजृम्भमाणमहा-मणिनिबहमयूखमण्डली-नीराजनातिविराजमान-राजसिंहासनोपान्तभूमण्डलो

---

1. सुकरुणा—प २, इ; सकरुणा—प १ 2. पूरि—इ ।

भूमण्डलोदरविरोचमान-प्रतापप्रभाकरमण्डलप्रभाप्रभाव-दूरित-चराचरान्ध[1]-कारोऽन्धकारातिरिव निर्भरसंवर्ध्यमान-विनायकगणो महासेनातिशय-प्रेमा खर्वित-दर्पकदर्पो नागेन्द्रावतंसो भूतिभूषितश्च, हरिरिव निखिलसुरद्वेषि-विद्रावणपणोऽनन्तालङ्करणदेहश्च, मनुरिव प्रियव्रतसन्तानः, सगर इव रत्नाकर-सम्भवातिविजृम्भमाणमानः, मान्धातेव सत्यालङ्कारः, रघुरिव विश्वजिदारम्भाडम्बरविस्मापितविश्वः, नल इव पुण्यश्लोकावतारो वैदर्भी-मधुरव्याहारनिबन्धचेना निर्जितकलिप्रभावो निराकृतपुष्कराविष्कृताहित-निकरश्च, रन्तिदेव इव दुरन्तावग्रहदूनदीनार्थिसार्थ-जठरोषबुधनिर्वाप-णायान्वहमन्नमयाखर्वोर्वीधरसहस्रविश्राणनव्रतो निरवधिमहारजतराशिवित-रणदूरीकृतभूदेवदैन्यश्च, श्रीरामचन्द्र इव खण्डितखरदूषणप्रचारः, युधिष्ठिर इव धर्मावतारो भारतालङ्कारो विश्रुत-**कीर्तिचन्द्र**सन्तानोऽपि[2] अनुक्षण-मधि**वर्धमानं** धनञ्जयमालोक्य सुप्रीतमना भीमसेनासादितदिग्विजयश्च, ययातिरिव स्फुरदमलालङ्काररसमाधुर्यरीतिविद्योतमान-नव्यकाव्यप्रसूतिसमा-लिङ्गितकण्ठः, भीष्म इव संवर्धितविचित्रवीर्यो नादेयश्च ;

कलानिधिरपि सम्पूर्णमण्डलोऽपि अश्लेषाप्रियोऽपि न शशाङ्कः ; विश्वोद्द्योतनकरोऽपि कुमुदामोदहरोऽपि पद्माह्लादकोऽपि तमोऽन्तकोऽपि न सप्ताश्वो न वा चण्डकरः ; निरुपमवज्रकोटिविसर्जनतर्जितनिखिलार्त-मण्डलदुःखराशिरपि विपक्षबलारातिरपि गुरुवचनमात्रसारोऽपि सतत-विहितविविधाध्वरकलापदीक्षितोऽपि न सङ्क्रन्दनो न वा गोत्रभिन्न वा शतमन्युः ; जगत्प्राणतया समनुभूयमानोऽपि निरुपमपरिमलशैत्यपरम्परा-प्यायितचराचरोऽपि न प्रभञ्जनो न वा सदागतिः ; धनदोऽपि राजराजोऽपि न कुबेरः ; पुण्यजनाधीशोऽप्याशापालकोऽपि न नैर्ऋतः ; सुनीतिरीति-संवर्धितनिखिलवसुन्धरामण्डलोऽप्यनीतिराष्ट्रः ; भुजगराजभोगभीषणभुवन-

1. चराचरान्ध—प १,२ ; चरान्ध—इ ।
2. 'अपि' नास्ति—इ ।

कोष-भूषण-निज-भुज-राज-विराजमान-कराल-करवाल-धाराधोरणि निर्जित-निर्जरप्रतीपप्रतिमाशेषप्रतिपक्षपक्षः, निरन्तरहृदन्तरविराजमान-श्रीमत्-परमदैवतचरणारविन्द-द्वन्द्वप्रसादासादित-निरुपम-परम[1]पुरुषार्थ-सार्थसार्थकीकृतजनुः, अनुपमविविधगुणगणसम्पादितविचित्र-चमत्कारधाराचित्रित-चराचरो विचित्रसेनश्चित्रसेनेतियुक्तार्थमेवाभिधानं समासादितवान् ॥१॥

तथाहि,—दूरादेव विलोक्य यस्य महतीं सेनामिवोन्मोहिनीं
भूलोकाद्भुतदर्शनामपि वपुःकान्तिच्छटां सम्भ्रमात् ।
सेना वैरिमहीभुजामतितरां विस्तारभाजोऽप्यलं
चित्रायन्त इतीरयन्ति कृतिनः श्रीचित्रसेनाह्वयम् ॥१३॥

यस्मिंश्च वसुन्धरापुरन्दरे वसुधामधिशासति पङ्काभिषङ्गः सनीरासु वसुन्धरासु, गदप्रसङ्गश्च यदुवंशविस्तारकथासु, वक्रता च चन्द्रकला-काव्य-कामिनी-कटाक्षकेशपाशेषु, तरलता च सौदामनी-समीर-सैन्धव-सीमन्तिनी-नयनेषु, नखरदशनाभिघातविवर्धितनिर्दयद्वन्द्वविमर्दश्च सुरतसम्भोगाडम्बरेषु, करुणार्त-स्वरसम्बलितमधुरालापश्च नववनितारतारम्भेषु, कुरङ्गाश्च विजनेषु, जाड्योन्मादौ च परदैवतचरणाम्बुजपरमपरिशीलनशीलेषु चतुरनागरीरतातिलोलेषु च रसिकेषु,[2] उद्वेगवार्ता च ताम्बूलास्वादननिरतेषु, चीत्कारनादश्च करितुरङ्गमेषु, मधुपानजनितमदान्धकारश्च मधुव्रतेषु, वञ्चकत्वञ्च फेरवेषु, विपक्षता च जीर्णसायकेषु पतत्रिपत्रेषु च, अनलङ्कारता च कुकविकाव्यप्रबन्धेषु, निरर्थता च ध्वनिमयशब्देषु, दण्डग्रहणं भिक्षाटनञ्च ब्रह्मचर्यतुर्याश्रमनिष्ठेषु, भ्रमणप्रयासश्च कुम्भकारचक्र-तीर्थमज्जनार्थि-वासरमणि-वाजिराजिषु,[3] करबन्धश्च विवाहेषु, अर्थिता च परदैवतप्रसादवस्तुविषयेषु, नैर्गुण्यं विहित-निषिद्धावहेलनञ्च पञ्चमाश्रमनिरतेषु, कठिनता च पाषाणायस-कामिनी-कुचकलसेषु, पुष्पवतीष्वासङ्गो लतास्वेव, मदिराख्यानञ्च खञ्जरीटेषु,

1. 'परम' नास्ति—इ । 2. 'रसिकेषु' नास्ति—इ ।
3. वाजिषु—प २ ; वाजि-राजिषु—इ ।

परपुष्टता च कोकिलेषु, कारुण्याश्रुनिपातश्च श्रीरामायणसंहितेतिहासश्रवण-रसिकेषु, सन्तापकता च हुताशभास्करयोः ॥२॥

यश्च लीलयैव भुजेन विश्वम्भरां निरन्तरमपि हृदयेन विश्वम्भरं विश्वम्भराभृतोऽपि स्वयमुपनतान् कटाक्षमात्रेण बिभ्राणो भूधरैकधारण-प्रयत्नप्रसारितभुजयुगलं विहितफणामण्डलसहस्रप्रयासञ्च विहसतीव विश्व-म्भरमनन्तरूपञ्च भगवन्तं नारायणम् ॥३॥

यश्च निरन्तरसमुपचीयमानरत्नसञ्चयतयाऽप्यतिगम्भीरतया निरन्तर-तरङ्गोल्लासित-मकरकेतनतया निर्वृतनिखिलग्राहकतया भोगीन्द्र-निवहनिलय-तया निभृतान्तःसुखशायितचराचराधीश्वरतया स्फुर-दनुपमरंहःसङ्घातातिभीषणमहावाहिनीशतसहस्रसेव्यमानतया च विडम्बयतीव पारावारम् ॥४॥

अपि च, राजर्षिर्जनकः किमेष सनकः किं वाऽम्बरीषः स्वयं
प्रह्लादः किमसौ विराजति पुनर्वैरोचनिर्भूतले ।
इत्थं यत्र वितर्ककर्कशधियां वाचां प्रपञ्चो महान्
सोऽयं श्रीयुत-चित्रसेन-वसुधाधीशः समुद्द्योतते ॥१४॥

अथवा, दुर्वासा न च कोऽपि कोपकुटिलो यस्याधिकारान्तरे
कस्तं वर्णयतां वदान्यतिलकं धीरोऽम्बरीषं नृपम् ।
यः स्वर्गागत इत्यशेषविदुषां निर्णीतिरुद्द्योतते
तस्मिन् कस्य विरोचनात्मजतया शङ्का समुन्मीलतु ॥१५॥

यमुद्दिश्य च कस्यचित् कवेरियमुक्तिर्यथा ॥५॥

मेरुद्वन्द्ववती विभाति जगती श्रीचित्रसेन त्वया
द्विर्भानुर्भवतः प्रतापमहसा कीर्त्या द्विचन्द्रा तव ।
रूपेण द्विमनोभवा चिरतरं त्वञ्जीवतादस्त्वियं
कल्पक्ष्मारुहभूषणा वसुमती क्लृप्ताष्टरत्नाकरा ॥१६॥

अपि च, प्रासादाः प्रचुरार्कचन्द्रकिरणाः प्रोद्दामसिंहासना-
श्चञ्चच्चामरकेकिपिञ्छपवनैर्व्याधूयमानान्तराः ।

श्रीखण्डागुरुरङ्कुनाभितिलकैर्विभ्राजमानाङ्गना
बन्धूनां द्विषताञ्च नोचितमिदं श्रीचित्रभूमीपतेः ॥१७॥

अपि च, गेहान्तः परिवादिनीगणमृदुव्याहारलीलाशतं
तालव्रातविलासिवेणुनिनदैर्लोलाः कुरङ्गीदृशः।
मातङ्गैश्च विमानराशिभवनैर्नित्यं जनैः सङ्गति-
श्चित्रं श्रीयुत-चित्रसेननृपतेः साम्यं सुहृद्वैरिणोः ॥१८॥

किञ्च, राजंस्त्वत्क्रियमाणमन्वहमहो वीक्ष्यातिघोरन्तपो
भीताः स्वस्वपदच्युतिभ्रमवशान्नाकौकसो ये पुरा।
प्राचीना मलिना निरीक्ष्य तदनु स्वर्लोकसौधावलीः
कीर्त्या ते धवलीकृता मुदमतीवाभूतपूर्वां ययुः ॥१९॥

निःसङ्ख्यैर्द्विजराज-मित्र-गुरुभिः काव्यैर्बुधैर्मङ्गलै-
र्युक्ता केतुमती सभा यदपि ते श्रीचित्रसेन प्रभो।
नो जेतुं तदपि त्रिपिष्टपपतेः शक्ता सुधर्मामसौ
यन्नैवात्र तमो न वाऽत्र घटते मन्दः कदाचिज्जनः ॥२०॥

नित्यं भीमधनञ्जयार्चनरता हीनाप्यपार्थाज्ञया
कृष्णाख्यानपरा यमादिविविध[1]व्यापारशुद्धोदया।
मन्त्राधीश्वरवासुदेवरुचिरा दुःशासनद्वेषिणी
धीर श्रीयुत चित्रसेन किमियं यौधिष्ठिरी ते सभा ॥२१॥

तस्य च समस्ताशा-नितम्बिनी-वदन-पङ्केरुह-मुद्राभञ्जन-प्रबलप्रचण्ड-प्रतापचण्डकरमण्डलस्य शरदिन्दुकुन्दसन्दोहमन्दाकिनी-वारिधारानुकारि-रुचिर-यशोमण्डल-मण्डित-भूमण्डलस्य, कति-कतिपय-महामणि-निचय-खचित-काञ्चन-कवच-कुण्डलादि-महामण्डनवितरण-खण्डखण्डीकृतैक-कवच-कुण्डलदानलब्धवर्णकर्णयशोमण्डलस्य, निखिलवसुन्धरानिर्जनस्थल-निर्मित-महापद्माकरनिकरावलोकनलोललोचनेन निदिद्रासुना सपद्मालयपद्मालया-

---

1. नियम —प १; विविध—प २, ३।

नाथेन पयःपारावारावधारणविधुरेणागत्य प्रीत्यतिशयकृत-निजालयाधिष्ठान-निष्ठस्य प्रबलतरदुरन्तदारिद्र्याभिधानब्रह्मराक्षसोपद्रुत-नानाजनपदागत-जन-गण--पालनोपार्जितोर्जित-यशोराशि-निर्जितैकविहङ्गममात्र-त्रास-त्राणाभिमान-तरलतरशिविराजगर्वपर्वतस्य ॥६॥

प्रतिदिनं दिननायकसारथौ समुदिते सति सज्जलमज्जनम् ।
जयति वैदिकमप्यथ तान्त्रिकं तदनु सान्ध्यविधानमपि द्वयम् ॥२२॥

तदनु मन्दरकन्दरसुन्दरोदरमुपेत्य सुधासितमन्दिरम् ।
रजतकाञ्चनभाजनसञ्चयैः शबलितं बलितं बलिवस्तुभिः ॥२३॥

वकुल-वञ्जुल-केतक-केतकी-कमल-कैरव-चम्पकराजिभिः ।
कुरुवकैरपि चारुवकैरभिस्फुरति सौरभभारमनोहरैः ॥२४॥

किञ्च, विकच-मुचकुन्द-कुन्द-करवीर-काञ्चन-किंशुक-कदम्ब-कह्लार-कोकनद–कङ्केली–मालती–मधूक–माधवी–पुन्नाग-नागकेशर–जूथिका--जाती-प्रमुखैः परस्पर-परिस्पर्धमान-निजनिज-परिमल-परिपाटीभिः चित्रमिव रूपं सौरभमपि विचित्रमिवारभमाणैः कुङ्कुम-रङ्कुमद-श्रीखण्ड-द्रव-घन-सारोषीरनीर-दीप्यमानागुरु-गुग्गुलुकलाङ्कधूपामोदनिवहैः कम्बुकदम्ब-विद्योत-मानाष्टाङ्गार्घ्यवितानैः सुविनीतद्विजोपनीत-नवनीत-क्षीरदधिशर्करा-सार-हृदयामोदक-मोदक--सुमृष्टमिष्टपिष्टकलड्डुक-प्रायैरभिप्रायानुरूपैस्त्रिपञ्चाशत्--सङ्ख्याक-सङ्ख्यावदुर्वीसुपर्वाहारनिर्वाहकैरुपहारैर्हेमासनाभरण--सोत्तरीयाम्बर-द्वन्द्वाभ्याञ्च विहितवैष्णवाचमनो विधाय सामान्यार्घ्यमभ्यर्च्य द्वार-देवताः प्रणम्य गुरुपरम्परां विधाय भूतशुद्धिं निर्वाह्य प्राणप्रतिष्ठां विन्यस्यान्तर्बहिःसंहारमातृकाः अष्टात्रिंशत् पञ्चाशच्च कलाः केशवादिमातृकाः श्रीकण्ठादीन् केशवकीर्त्यादींस्तत्त्वन्यासञ्च विधाय कृतप्राणायामो विन्यस्य पीठमृष्यादिमन्त्रपदान्यपि प्रदर्श्य मुद्राः रचित-मूर्तिपञ्जर-किरीटेन्द्रिय-व्यापकन्यासो ध्यात्वा संस्थाप्य विशेषार्घ्यमन्तर्यजनमारभते ॥७॥

तथाहि, चन्द्रार्ककान्तनवविद्रुम-पद्मराग-
गोमेद-हीरकहरिन्मणि-पुष्परागैः ।

नव्येन्द्रनीलमणिभी रजतोत्करैश्च
दीप्तैर्महामरकतैरपि काञ्चनैश्च ॥२५॥

श्रीचिन्तामणिसञ्चयेन च महाप्रासादवप्रावलीं
निर्मायापि च कल्पवल्लिनिकरैः कुञ्जावलीं कामपि ।
तत्राप्युज्ज्वलतत्तदुद्भटमहारत्नोत्करैरद्भुतां
पर्यङ्कावलिमूर्द्धमौक्तिकमणिस्तोमोल्लसत्तोरणाम् ॥२६॥

तत्रारोप्य विसर्पिकान्तिलहरीसञ्चारिसौदामनी-
शोभाविष्कृतदीप्तदीपितदिशं कादम्बिनीं कामपि ।
निर्मायोज्ज्वलरत्नसञ्चयमयान मञ्जीरहारोत्करैः
केयूरोरुकिरीट-कङ्कण-मुखांस्तैरेव सम्भूषयन् ॥२७॥

वासोद्वन्द्वममन्दकाञ्चननिभं चित्रञ्च चित्रप्रभं
दत्त्वा चिन्तनयोपकल्प्य रुचिरं स्वादूपहारोत्करम् ।
भक्त्या पूजयति स्तवीति विविधैस्तोत्रैः पुराणागम-
प्रोक्तैः श्रोत्ररसायनैः श्रुतिमयैर्नव्यैः स्वकीयैरपि ॥२८॥

ततश्च पूजाप्रासादतो निर्याय स्फुरदखण्डश्रीखण्डद्रवार्द्र श्रीतरुपलाश-सञ्चय–दीप्यमानशालनिर्यास–सघृत–गुग्गुल्वगुरुसौरभ-सम्भारभरितहरिदन्तरं, क्वचिद् रुद्राध्यायाध्ययनशीलैः क्वचन त्र्यम्बकमनुपठनपुरःसर-मनर्गलनिर्गलदमरकल्लोलिनीसलिलधारानिर्वाह्यमाणशङ्कराभिषेकैः, क्वचिदेक-दन्तस्तुतिसमुच्चरणनिरतैः, क्वचिच्च कुसुमदन्तगन्धर्वोदीरितस्तुतिगाथागाथन-निरतैः, क्वचन नीलकण्ठ-स्तव-समुत्कीर्त्तनाकुण्ठकण्ठैः, क्वचन शैलपुत्री-माहात्म्यसप्तशतीपारायणनिपुणैर्विभ्राजमानं पूर्वपुरुषप्रतिष्ठितमखण्डपुरुषार्थ-सार्थप्रसादमन्तरा महाप्रसादवरं भगवन्तं खण्डचन्द्रावतंसं लिङ्गमयं खण्ड-परशुं प्रणम्याभ्यर्च्य प्रसूनाञ्जलिभिरभिवाद्य च गुरुचरणं गङ्गाभिधानं गामाकारयति ॥८॥

ततश्च सा, तद्वचःश्रवणजातसम्मदा चारुपक्वफलभारलोभतः ।
धावति क्षितिपतिं प्रति द्रुतं कामधेनुरिव कल्पपादपम् ॥२९॥

तां सन्तर्प्य फलैः प्रदक्षिणमथो तस्या विधायादरात्
तत्पुच्छेन निजाङ्गसञ्चयमहानीराजनं भक्तितः ।
नत्वा ताञ्च सुभोज्यराशिमतुलं दत्त्वा द्विजाय स्वयं
भुङ्क्ते बन्धुजनैर्निवेदितमतिश्रद्धेयमन्नादिकम् ॥३०॥

तस्य च राज्ञो निखिलराज्यसम्भार-संरक्षणावेक्षण-विविध-मन्त्रतन्त्र-सञ्चारचारु-चातुर्यधुर्यचक्रचूडामणिः, अतुलषाड्गुण्यप्रमुखसाद्गुण्यपरम्परा-पराभावित-पुरुहूत-पुरोहितप्रभावः, निरवद्यगद्य-पद्यमय-विविध-प्रबन्धचय-नव्यातिदिव्य-काव्यमाधुरी-भरचमत्कारसारचुम्बन--चटुलचारुचञ्चरीकवर-चातुरीभरमनोहरः, निखिलरसभाजनप्रचुर-सभाजन-सभाजन—भाजन[1]भुज-दण्डोद्दण्डकोदण्डमण्डल-विनिःसरदकाण्ड-प्रचण्ड--प्रकाण्ड[2]-काण्ड-मण्डली-खण्डखण्डी-कृतारातिमही-मण्डलाधिपति-मुण्डमण्डली-मण्डित--महीमण्डलः, अर्बुदार्बुदा[3]रोहाखर्वपर्वतायमान-दुर्वार-वारण-बलबहल--प्रलयजलधि—कल्लोल-चयभीषणप्रचुरवर्मचर्मसञ्चय-सञ्चारकाल[4]-कराल-करवाल-कठोरकरमण्डल-प्रचुरचण्डपदाति-पादाहति[5]--समुच्छलद्बहल-रजःपुञ्जपिञ्जरित—हरिदम्बरः, निरन्तरनिरुपमचिन्ता[6]चिन्तामणिदाम[7]नियमित-देदीप्यमान-मानसमन्दिरो-दरजरीजृम्भमाण-श्रीमत्-सीता-सौमित्रि-समीरसूनुसमेत-सनीरनीरददूर्वादल-श्यामकलेवर—श्रीमद्राज--राजेश्वर-स्फुरदशरण-शरण—चरण-सरोज-राज—विराजमान-नखरचन्द्रकलाप-चन्द्रिकाचयचुम्बन-चतुर-चेतश्चकोर-वरः, तत्-प्रसादासादितपरमपुरुषार्थसार्थ-सार्थकीकृतजनुः, अनुपमनर्तनप्रवर्तमानकीर्ति-नर्तकीनर्तनचत्वरीकृतचराचरः, निजकुलकुमुदकाननविकाशनामन्दचन्द्रः **श्रीमाणिक्यचन्द्रो** नाम ॥९॥

---

1. 'भाजन'-नास्ति – इ ।
2. 'प्रकाण्ड' नास्ति प—२ ।
3. अर्बुदार्बुद—इ ।
4 'काल'—नास्ति—इ ।
5. पदाहति—इ ।
6. 'चिन्ता'—नास्ति—इ ।
7. दम—प २,इ ।

तथाहि— पूस्तेषां कनकप्रवालखचिता सौधावली शैलजा-
क्रान्ताप्यच्युतनीलकण्ठवसतिः सोमार्कबिम्बोज्ज्वला ।
नागेन्द्रैर्विलसन्महामणिवरैर्विद्योतमाना क्षणं
येषु स्यादरुणश्च वासकरुणं माणिक्यचन्द्रेक्षणम् ॥३१॥

अपि च—अम्भोजीयति वैरिवामनयनानेत्रं चकोरीयति
प्राज्ञानां नयनं खलौघहृदयं शीतांशुकान्तीयति ।
श्रीरामाङ्घ्रिसरोजभक्तिरतुला राकाविशेषीयति
ध्वान्तीयत्यरिवीरसैनिकघटा माणिक्यचन्द्रोदये ॥३२॥

यमालम्ब्य च कस्यचित् कवेरियमुक्तिर्यथा—॥१०॥

रे विद्या विविधाः कलाश्च सकलाः सङ्गीतनृत्यादयो
रे वैदग्ध्य[1]विलासदेवि कविते धीराः कवीनां वराः ।
ब्रूत ब्रूत कथं कुतः क नु भवेद् विश्रान्तिलेशोऽद्य वः
श्रीमान् विज्ञशिरोमणिः क्षितितले माणिक्यचन्द्रो न चेत् ॥३३॥

तेन चैवंविधविविधसद्गुणपरम्परया परया च मत्या पराक्रान्त्या कान्त्या च क्षान्त्या रञ्जितप्रकृतिसमाजेन वृत्रजिदिव चित्रशिखण्डिजेन चित्रसेनो विश्वम्भरां बभार ॥११॥

इत्थमतिविराजमाने रञ्जितप्रकृतिसमाजे महाराजाधिराजे त्रिनयन-नयन-वेद-योगाङ्ग-युग-सङ्ख्याकेषु समतीतेषु तुर्ययुगहायनेषु, **वेदाङ्ग-षण्मुखमुख-सोम-सम्मितासु** समतीतासु च **शक**भूपालसमासु, प्रथमराशिमध्यसञ्चार-लीलाशालिनि भगवति मरीचिमालिनि, अकाल-महाप्रलयमहाजलधरव्यूह इव, संवर्तप्रवर्तमानप्रचण्डप्रवहो[2]द्दहमहाप्रभञ्जन-सञ्चयसञ्चार्यमाणः, सञ्जनयन्निव मध्यन्दिनदिननायक-राका[3]रोहिणी-रम-णयोरप्यन्धी-करणमन्धकार-निकरं, तमोमय इव, तमालतरुमय इव,

---

1. वैदग्ध—इ ।　　2. प्रवाहो—इ ।　　3. 'राका'-नास्ति—इ ।

रजोमय इव, रजनीचरचमूचक्रमय इव[1] कलिकाल-कलितकठोरकल्मष-कलापमय इव, कृपाकृपणः कृपाणपाणिः गर्भवत्यर्भकदैवतद्विजदूनदीन-दारणदारुणपणः, सर्वसर्वस्वापहरण-स्वेच्छाविहरण--प्रतिषिद्धाचरणमात्र-निपुणः, प्रबलबलबहलहलहला-कोलाहल-हेषाबृंहितिचीत्कृति-भेरीभाङ्कृति-घण्टाटङ्कृति--खड्गझङ्कृति--वीरहुङ्कृतिसिंहनाद--भूरिभैरवरवनिवहभरित-भूमण्डलः, महाराष्ट्रमहीन्द्र**साहुराज**चमूसमूहोऽप्यकाण्ड एवाकाण्ड-कोदण्डः खण्डप्रलयं विधित्सुरिव प्रचण्डशीलः, **गौड**जनपदजनगणसमु-न्मूलनहेतुर्महाधूमकेतुरिव समुत्तस्थौ ॥१२॥

यान्त्येकेन दिनेन योजनशतं हीनाह्वदीनान् स्त्रियो
बालान् घ्नन्ति हरन्ति वित्तमखिलं साध्वीश्च सीमन्तिनीः ।
संग्रामे समुपस्थिते सुनिभृतं देशान्तरे सुद्रुतं
धावन्त्यद्भुतवेग-वाजिनिवहो येषां प्रधानं बलम् ॥३४॥

एवमादिविश्रुतस्वरूपचारित्र्यः सम्मिलित एष महान् निसर्गदुर्गमो **वर्गि**वर्गाणां सैन्यसागर इति निसर्गभीरुभावभङ्गुराणां गौडजनपदप्रकृतीनां किं कर्तव्यं, क्व गन्तव्यम्, क उपायः, कः सहायः, हा[2] देव किमिदमनुष्ठित[3]-मतिनिष्ठुरमिति च दिशि दिशि अकाण्डप्रचण्डवज्राभिघातखण्ड्यमानगण्ड-शैलमण्डलचण्डरणितजनित इव मन्दरमहीधरोद्दाममन्थनामर्दान्दोलिताम्भो-राशिमहाम्भोनिवहबहलकल्लोलनिकरसञ्जनित इव सम्पूरयन्नाशाविवरमपि रोदसीकन्दरोदरं दूरितशब्दान्तरग्रहणावसरो बभूव सुमहान् कोला-हलः ॥१३॥

ततश्च शकट-शिविका-स्तम्बेरम-तुरङ्गम-तरणिभिश्चंक्रम्यमाणैश्च क्रमेलक-चक्रै रक्रममाक्रामद्भिराचामद्भिरिवाशाचक्रवालं, धनजनभारमन्थरसञ्चारै-रतिविस्तारैर्धावतां महाधनानाम्, गृहीतगृहसाराम्बरभूषणभाजनानाम्,

1. 'इव' नास्ति—प १ । 2. 'हा'नास्ति—इ । 3. मनुतिष्ठत—प १ ।

अङ्कावलम्बितलम्बालक-लोलबालकानां ग्रीवावलम्बितशालग्रामशिलानां दुर्वह-महाभारविविधशास्त्रपुस्तकसञ्चयापचयचिन्तासन्तापज्वरजर्जराणां भूमि-निर्जराणां, दुर्वहगर्भभारमन्थराणां नितम्बबिम्बकुचकुम्भद्वन्द्वभारालसानाञ्च पङ्कसङ्कट-कुशकाशकण्टकाङ्कुरशङ्कया पदे पदे स्फुरितातङ्कानां निदाघसमये समेधमान[1]मध्यन्दिननिदाघदीधितिदीधितिव्रात-तीव्रतापप्रतापमसहमानानां यथासमयममिलितपानाहारतया क्षुत्तृड्व्याकुलितार्भकरोदनार्तव्याहार-कातरहृदयानां प्रमदानां करुणकरुणार्तपरिदेवितरुदितैर्व्याकुलानां वर्गिवर्गमयमिव निखिलसर्गमनुभवन्तीनाञ्च विविधार्तनादेन मिथोऽनुवादेन च क्षुभितमिव क्ष्मामण्डलमभवत् ।।१४।।

तथाहि— पद्मानामहमेव बान्धव इति ख्यातं त्रिलोकीतले
किं नैतानि मुखाम्बुजानि कुलजावृन्दस्य दृष्टान्यपि।
इत्थं खेदवशात् सहस्रगुणितैस्तीव्रैः करैरेकदा
तान्याकर्षति निश्चितं प्रकुपितः श्रीमान् दिनाधीश्वरः ॥३५॥

एतस्मिन्नेवावसरे महता चमूसमूहेन सचिवसमाजाधिराजं वर्धमाननगरमधिसंस्थाप्य महाराजः समस्ताशाचक्राक्रामिणा महाविक्रमशालिना बृहता बलव्यूहेनाच्छाद्य भूमीवलयमनन्यपरायणशरणागतकरुणास्पददरिद्र-द्विजगणभूयिष्ठं प्रजासमूहमकुतोभयसञ्चारं संस्थापयितुमभिनवनिजाधिकार-**दक्षिणप्रयाग-गङ्गासागर**-सम्भेदमयतीर्थद्वयाभ्यन्तराल–महीवलयमण्डलायमानां **विशालां** नाम विशालां नगरीमाजगाम ।।१५।।

तत्राप्यागत्य विविधवसुराशिवितरणसङ्कल्पकल्पनाभिः कल्पद्रुमकल्पोऽनल्पद्रविणदानदूरितदारिद्र्यदावानलः, द्युनदीप्रवाहावगाहन-द्वैमातुरदामोदर-दुर्गाद्युमणिदर्पकारिदीर्घार्चनवीतिहोत्र-ब्राह्मण-सन्तर्पण-वाञ्छितार्थार्पणजन्यागण्य-पुण्यपुञ्जसञ्चारचारुतरीकृतचराचरः, सञ्चरमाणचारणचयोच्चरित-

---

1. समयसमेधमान—इ ।

चञ्चरीध्वनिचयसंवर्ध्यमान'धन्यधन्य'ध्वनिः, अतुलतुलामहादानजनितकीर्ति-कर्पूरपूरपरिपूरितब्रह्माण्डभाण्डोदरः, विस्मारित-नृग-नहुष-ययातिमान्धातृ-धुन्धुमार-रन्तिदेव-शान्तनु--प्रमुखवसुन्धराधुरन्धर--विचित्रचारित्र्यराशिः, मलयशैल[1] इव सौरभसम्भारैः श्रीरामविश्रामैकाश्रमतया पादच्छायाश्वासितो-पान्तभूभृन्मण्डलतया च महेन्द्राचल इव महीमहेन्द्रः सर्वाशापरिपालकोऽपि कियन्तमनेहसं विशेषतो दक्षिणाशां परिपूरयन्नवतस्थे ॥१६॥

तथाहि—क्षौणीन्द्रे चित्रसेने निजबलनिवहैर्दक्षिणाशावतंसे
शङ्के शङ्काकुलात्मा[2] विगलितमहिमा न्यस्तदण्डो बभूव ।
कुम्भोद्भूतेन सार्द्धं प्रहरमपि[3] तपः संविधास्यन् सुघोरं
युक्तार्थं धर्मराजाह्वयमयमधुना कर्तुकामो यमोऽपि ॥३६॥

एकदा तु तत्रैव विहितवासरविधेयपारलौकिकैहिकविविधवैधाचरण-परम्परे महीमहेश्वरे हिण्डीरपिण्डमयमिव, पुण्डरीकमण्डलमयमिव, कर्पूर-पूरपरिपूरितमिव, द्रावितकलधौतमयमिव, मथ्यमानक्षीरोदार्णवनवनीत-पुञ्जमयमिव, स्फटिकमयमिव, पारदरसधारासारमयमिव, नारदमुनिकाय-व्यूहमिव, शारदाकलेवरकान्तिच्छटाच्छुरितमिव, संकर्षणशरीरसञ्चय-सञ्चरितरोचीराजिरञ्जितमिव, शेषाङ्गसङ्कलितकान्तिसन्तानसन्ततमिव चराचरं विरचयन् तनुकिरणतन्तुसन्तानसम्पादितमिव पाण्डराम्बरमति-विस्फारमतिविस्तारयंस्त्रैलोक्यलक्ष्म्या राकाशुभ्रांशुमण्डलः प्रादुरासीत् ॥१७॥

प्रेमोज्जृम्भिततत्तदुज्ज्वलमहावस्तूति यन्निह्नुते
दृष्टिं लुम्पति सन्दुनोति दयितं मानान्धकारो महान् ।
चण्डांशोरपि दुर्निवारमहिमा सोऽयं विधोरुद्यमे[4]
नाशं याति बिभर्ति मूर्धनि कलां तेनास्य शङ्के शिवः ॥३७॥
गम्भीराणि महामहोर्मितरलप्रारम्भसम्भीषणा-
न्युद्दामोत्कलिकाकलापविषमावर्तान्यपाराण्यपि ।

---

1. मनःशैल—इ । 2. कुलां वा—इ ।
3. प्रचुरमपि--प २, इ । 4. विधौ रुद्यमे—प २, इ ।

मन्ये मानवतीमनांसि जलधे रूपाणि यत् सम्भ्रमा-
दत्युच्चैस्तरलीभवन्ति सहसा शुभ्रांशुबिम्बोदये ॥३८॥

एतत् प्रोषितसुन्दरीजनगणप्राणान् महामानिनी-
मानान् दारयितुं विधूपधि महाधारोग्रचक्रम्पुरः ।
धत्ते पञ्चशरो विदारितमहामानौघपान्थप्रिया-
प्राणत्वेन तदीयशोणितचयैस्ताम्रं समुद्वीक्ष्यते ॥३९॥

पूर्वाशामुखबिम्बचुम्बिनि कलानाथे समुद्यत्करे-
णोच्चैरम्बरमामृषत्यतितरां मानं प्रतीची दधौ ।
ताम्रीभूतदिनेशबिम्बवदना तारोत्करव्याजतो
मन्ये मुञ्चति बाष्पबिन्दुनिकरं व्योमाङ्गने सर्वतः ॥४०॥

शङ्के शङ्करभालनेत्रदहनज्वालाभिसम्पादितो-
ऽङ्गारोयं ज्वलितोऽस्य पश्यत कणांस्ताराभिषान् सर्वतः ।
अन्तर्धूमशिखा यदस्य लभते निर्धूमतामद्य चेत्
संहर्ता जगतीं किमार्ततरुणीप्राणान्न चायं विधुः ॥४१॥

एष व्योमसरोविहारकुतुकी संलग्नतच्छैवला-
क्रान्तक्रोडतलोऽभ्युदेति पुरतो हंसो हिमांशूपधिः ।
मन्ये प्रोषितपद्मिनीसमुदयग्रासाय मानोल्लसत्-
क्षीरोदाम्बुनिधेः समग्रपयसां पानाशया धावति ॥४२॥

इत्थमनेकविधानि नानानीवृन्निवासि-महाराजसंवर्धित-कवीन्द्रवृन्द-भणितानि कवितावितानानि प्रादुरासन् ॥१८॥

ततश्च—

आक्रान्ता मधुपोत्करेण मलिना व्यक्तप्रसूनोदयाः
स्वालिङ्गन् चपलो बलात् कुमुदिनीस्तासां रजोरञ्जितः[1] ।
कावेरीकृतमज्जनोऽपि शनकैः किं लज्जमानोऽधुना
स्नातुं दिव्यधुनीमुपैति पवनः श्रीखण्डशैलालयः ॥४३॥

---

1. रजोरागतः—इ ।

एवंविध–बहुविध––काव्यकलाकलापालापसमुन्मीलितरससागरावगाहनानन्दोलनतन्माधुरीविशेषलेश-समास्वादनामोदमेदुरान्तःकरणो वेलानिवेदकावेदित-सार्धैकयाम-यामिनीभागो भूपतिरास्थानभवनादुत्तस्थौ ॥१९॥

अथ चलति नरपतिचक्रचूडामणौ प्रणमनव्यग्राग्रभुजानाम्[1] भूभुजाम् भुजानां स्फुरदुरुमणिमण्डलमयमहामण्डनानां तदानीन्तनं भरमतिदुर्वहमसहमानानाम् पातालतलादिवो[2]त्तिष्ठताम् भुजगराजमहाभोगानाम् अन्योन्यसङ्कटसङ्घट्टझनझनायमानानां केयूरहारमणीनां निनादेन, प्रणत-जन-समाज-नतिनामधेयसमावेदकानां प्रत्येकाख्यानाख्यापन-प्रणमनविज्ञापनवचन-कोलाहलेन, मङ्गलपाठ-निरतानाञ्च सूतमागधवन्दिवृन्दानामानन्द-सन्दर्भ-निष्यन्दि-नान्दीनादसन्दोहेन, प्रोत्सारणाधिकारनिरतानाञ्च वेत्रलतावतामुच्चैः समन्तात् 'पश्यत[3] पश्यते'ति निःस्वनेन, प्रोत्सार्यमाणानाञ्च निज-निजाभिवादनवेदनव्याकुलानां बहलहलहलायमानगम्भीरनिःस्वनेन, तत्-समाहूतानाञ्च भवन-सारस-कलहंस-कोकिल-कलकण्ठ-नीलकण्ठानां सुविकल-कलकलबहलकोलाहलेन, सुभटानाञ्च विकटचर्मवर्मकृपाणधारिणां मिथो निर्दयविमर्दठनठनायमान-विविधायुधध्वानेन, देदीप्यमानविमलकलधौतमयाधारदीपितानां दीपशिखासहस्राणां नरराजसभाजनार्थमागतानां मेरु-शिखराणामिव ज्वलन्महौषधीनां धगधगायमानध्वनितेन, सव्याजसञ्चार-चारुचतुरवाराङ्गनासमाजसञ्चारसञ्चलितकाञ्ची-किरीट-केयूर-कङ्कण-कण्ठ-हार-कटक-मञ्जीरमण्डलीनां मञ्जुतर-तारझङ्कारेण, शान्त्यधिकारनिरतानाञ्च वेदविदुषामग्रजन्मनां प्रातःपदपुरस्कृतमङ्गलाशीर्वचनविस्तारहारिव्याहारेण, तारतर[4]मृदङ्गमुरजमर्दलश्रृङ्ग-शङ्ख-पटुपटहपटल-भूरिभेरी-भैरव-रवनिवहजनितकोणाघातविशेषेण निराकृतेतरशब्दसञ्चारेण, सत्वर[5]चत्वर-तलनिर्दयद्रुतविद्रुतचरणशतसहस्राजस्रसञ्चरणगम्भीर–भैरव-रवनिकरैर्भरित-हरिदम्बरैरापूर्यत रोदसीविवरम् ॥२०॥

1. व्यग्रभुजानाम्—इ। 2. पातालादिव—इ। 3. 'पश्यत'—नास्ति—इ।
4. 'तर'—नास्ति—इ। 5. सञ्चारणसत्वर—इ।

ततश्च विसर्जितसकलराजलोकसमाजः प्रतीहारी-निर्दिश्यमानसरणि-रवनीपतिः शयनमन्दिरमाजगाम ॥२१॥

तत्र च मृगमद-मलयजोशीर-काश्मीरागुरु-गुग्गुल्वगुरुसौरभसम्भार-जरीजृम्भमाणबहलधूपावलिपरिमलपूरपूरिताभ्यन्तरविवरे कुमुदकुन्दकम्बु-कर्पूरचन्द्रचन्दनद्रवसुमुग्धदुग्धफेनकल्पं तल्पमारुह्य निबद्धपद्मासनो विदलित-विषमविषयवासनो झटिति तत्कालकलितपरमनिर्वेद-हेतिधारया ममताति-दीर्घदुरन्तपाशसंयमनादुन्मोच्य मनोवृत्तिं, निरस्य चास्याः प्रपञ्चमय-महागहनसञ्चारचातुरीं, मूलाधारचक्राधिष्ठितलिङ्गालम्बितसार्धत्रिवलयाकृति-मतितनीयसीं प्रसुप्तां कुण्डलिनीमिव कुलकुण्डलिनीं मरुज्ज्वलनबीजभावना-विभावितपावकसन्तापसम्पादितचेतनामुत्थाप्य, षट्चक्रभेदनक्रमेण सहस्रार-महासरोरुहकर्णिकारनिकेतनस्वाभीष्टपरदैवतेन संयोज्य, ताभ्याञ्च गुरु-दैवतात्मनोरभेदमाकलय्य निरुपमपरमध्यानावधानैकतानमानसो मानसोप-नीतरुचिरोपचारपरम्पराभिः किमपि कमनीयमद्वन्द्वं चरणसरोजद्वन्द्वं सानन्दं सभाजयन्, तादृशजपनहवनस्तवनसन्तर्पणात्मार्पणप्रदक्षिणभ्रमणप्रण-मनानि विधाय, तथैव पूजिततच्चरणसरोजतलव्यतिकरजनितानन्दभरकलित-विपुलपुलककदम्बतया तदुपचरितकदम्बकुसुमायमानशिराः सुष्वाप (॥२२॥) प्रसुप्तश्च मृगयाविहारोद्योगिनमात्मानं ददर्श ॥२३॥

ततश्च सादिभिराकृष्यमाणानां, व्यग्राग्रखुरद्वन्द्वाभिघातक्षुण्णक्ष्मातलानां, निरर्गलं बहलफेनस्तोममुद्वमतां, विचित्राम्बरभूरिभूषणानां हेषतां मुहुर्मुहुरुत्-पततां विहङ्गमानामिव तुरङ्गमाणां क्वचन शङ्कर[1]-सङ्कर्षण-सरस्वती-शेष-सुर-सिन्धु-सुधा-चन्द्र-चन्दन-कर्पूरपूर-कम्बु--कादम्ब--दन्तावलदन्त-कुन्द--कुमुद-केतक-हिण्डीरपिण्ड-पुण्डरीकषण्ड-परिपाण्डुराः[2], क्वचनेन्दीवर-महेन्द्रनील-मरकत-महामेघ-मेदुरमनोहरच्छायाः, क्वचन नवीनपद्मबान्धव[3]पद्मराग-पलाशपुष्प-प्रवाल-पल्लवप्रायाः, सन्ततसन्ताड्यमानभेरीपटहपटुघोषमांसल-

1. 'शङ्कर'-नास्ति—इ । 2. पाण्डराः—प २, इ ।
3. 'पद्मबान्धव' नास्ति—प १ ।

श्रृङ्गशङ्खादिनिनादाकर्णनजनितरोषावेशातिचञ्चलीकृताः पृथक् पृथक् पङ्क्तीर्ददर्श ॥२४॥

क्वचिदुपरि विराजमानपटमण्डपाः सेन्द्रायुधसौदामनीसमुदयशोभमानसान्ध्यमहामेघनिवहविराजमानशिखरा[1] इव महामहीधरपरम्परा आधोरणनिपात्यमानाङ्कुशा महादन्तदन्तावलपङ्क्तीः, क्वचन निरन्तरमुच्छ्वसन्तीर्हसन्तीरिव विस्फारितवदना लिहतीरिव[2] लोलीकृतरसनाः क्षुरखरदशना अतिकृशतया दृश्यमानास्थि-पञ्जरा[3] इव खरनखराभिघातविदारितवसुन्धरा घर्घरघोरघनघूत्कारगर्जिततर्जित[4] निखिलजन्तुसन्तानाः सारमेयपङ्क्तीः, क्वचनाजिनपिहितचरणनेत्रा विचित्रगात्राः पादातपाणितलनिहिताः श्येनप्रमुखमृगयोपयुक्तपत्रिपङ्क्तीः, क्वचन पूर्णकामुकायमानकण्ठा विविधवादित्रवागुरा-पाशप्रमुखमृगयोचित- वस्तुस्तोमातिभारमन्थरगतीश्चङ्क्रम्यमाणाः क्रमेलकपङ्क्तीर्ददर्श ॥२५॥

क्षणेन च चर्ममयमिवाम्बरतलं, खड्गलतामयमिव दिग्वलयं, तुरङ्गममयमिव भूमण्डलं, रजोमयमिव रोदसीविवरं, हेषित-बृंहित-चीत्कृतिघण्टाटंकृति-सिंहनादसहितबलबहलकोलाहलमूर्च्छितप्रायम्भुवनमण्डलमनुबभूव ॥२६॥

अनन्तरञ्च—एते यान्ति किमम्बरे किमथवा भूमावपि क्ष्मापते-
रश्वा इत्थमशेषलोकभणितान्याकर्ण्य किं वाजिनः ।
विस्पष्टाखिलदन्तपङ्क्ति जहसुः प्रोच्चैः खुरोत्थं रजो-
राशिं व्योमचरं यदूर्ध्ववदनाः सन्दर्शयन्तः स्थिताः ॥४४॥
चेतोऽतीन्द्रियमप्यसौ मरुदहो नेत्राध्वदूरं गतः
किं सिन्धोरपि लङ्घनेन यदसौ शाखामृगैर्लङ्घितः ।
यज्जल्पन्त्यपि सैन्धवेति किल नो नामेति सञ्चिन्त्य किं
प्रोत्प्लुत्यापि सखेदमेव तुरगाः क्षान्त्या निवृत्तिं ययुः ॥४५॥

---

1. शिखर—प १,२ । 2 निहतं रिव—प २ ।
3. पञ्जरपञ्जरा—प १ । 4. 'तर्जित' नास्ति—इ ।

सप्तैव द्युमणेर्हया नियमिता व्यालैस्तथा चालिता
यन्त्रा निश्चरणेन वक्रगतयः किन्तैर्जितैर्मादृशाम् ।
ब्रह्माण्डन्तु बिभेद वामननखः किन्तेन भिन्नेन वा
प्रोत्प्लुत्येति निवर्तते नरपतेर्मन्ये हयानाश्चयः[1] ॥४६॥
विश्वाशाप्रतिपालकस्य यदमी वाहा वयं भूपते-
राशालङ्घनमप्ययुक्तमयशोबीजम्भवेन्मादृशाम् ।
इत्थं निश्चितचेतसोऽतिमहतः खेदाद् विकृत्यानना-
न्याक्षेपेण समालिखन्ति वसुधां निन्दन्ति मन्ये विधिम् ॥४७॥

इत्थमनेकविधविबुधकविनिवहा महाराजपरिजनभूताः समुदाहरन्ति स्म ॥२७

ततश्च नानाविधसेनाव्यूहैर्विरचितविविधव्यूहैश्चित्रसेनत्वमस्यापरोक्षता-मुपनिन्ये ॥२८॥

ततश्च चन्दनचूर्णचामरचयचालनलाजमोदकदूर्वाक्षतविक्षेपपुरस्सर-सुमधुरमङ्गलाशीर्वचनपुरस्कृतो वसुन्धरावृन्दारकवृन्दाभिनन्द्यमानदिग्विजयो महामात्रोपनीतमुपरिविरचितातिमात्रमहार्हशुभ्राम्बरमयमहामन्दिरं पुरन्दर इव मन्दरं महीमहेन्द्रो[2] महामातङ्गमारुरोह ॥२९॥

क्षणेन च प्रलयकालविजृम्भमाणमहाम्भोनिधि[3]निवहबहलकल्लोलपरम्परा इव प्रचण्डझञ्झाप्रभञ्जनप्रेर्यमाणपुष्करावर्तकमुखसंवर्तप्रवर्तमानमहाम्भोवाह-माला[4] इव प्रच्छाद्य समन्ततो वसुन्धरां निर्भरभरेण स्यन्दोलिकाविशेषाय-माणा[5]मान्दोलयन्त्यो दिवस-निशा-सन्ध्याव्यतिरिक्तमतिरिक्तमिव[6] समयं निष्पादयन्त्यः श्रीचित्रसेनमहीमहेन्द्रमहासेना महासेना[7]धिष्ठिता इव देवसेनाः समतीत्य ग्रामनगरमयाणि भुवनानि काननमासादयामासुः ॥३०॥

---

1. अयं श्लोको नास्ति—प १
2. महीधरेन्द्रो—इ ।
3. महानिधि—इ ।
4. 'वाहमाला' इत्यत्र 'वाहना'—इ ।
5. विशेषमाला—इ ।
6. व्यतिरिक्तमिव—इ ।
7. 'महासेना' नास्ति—इ ।

तत्र क्वचन कपिल-कृष्ण-कौशिक-शुक-पिप्पलायन-हारीत-भारद्वाज-प्रमुख-द्विजसमाजोद्गीतरम्याणि शाखासहस्राणि बिभ्राणां श्रुतिपरम्परामिव, क्वचिदुभयभागनिरन्तर-सन्तत-शर-सञ्चार-दुरवगाहसद्द्रोणार्जुन-शिखण्डि—नकुल-वाणासन-पत्तिसमागमविशेषभीषणाम्, अन्तरा भीमवेगनिपात्यमानपर्वतीय-पर्वतायमानमत्तमातङ्गसङ्घां, नानाजनपदावधिकाधिकाभिधावदतिवेगवद्वाहिनी-सङ्घसम्पादितकबन्धचयमहाताण्डवाडम्बरविराजमानां, कालवेगातिविवर्ध-मानरंहःसङ्घात--समापतद्गाङ्गेयोच्चावहार–निनादनिरस्यमानधार्तराष्ट्रोलूक--शकुनिमत्स्यराजां, क्वचन विवर्द्धमानकर्णशल्यविषमविमर्दनर्दनां महाभारतमहा संग्राममहीमिव महीयसीं सिन्धुसम्भेदपरम्परां, क्वचिदनिलानलवरुणमरुद्हि-द्विड्भीम-भूसमागमां कुण्डिननगरीमिव, क्वचिदतिवेगाभिघात-निपतन्महा-शिलीमुखव्यूहचुम्ब्यमानपुण्डरीककुवलयां महासरसीमिव, क्वचिदृक्षसोमार्क-बिम्बभूषितां नभोमण्डलीमिव, क्वचन विकचमनोहारिचम्पककलिकाकलाप-व्याजेन महाराजमङ्गलनीराजनाय वनदैवतप्रवर्तितमिव दीपकलिकाकलाप-मादधानां, समुच्छ्रितानेकचन्द्रकिचमरी-पुच्छ-तालवृन्ततयाभ्यागतमहीमहेन्द्र-व्यजनक्रियामिव सम्पादयन्तीं, केकि-कोकिल-कलकण्ठ-नीलकण्ठ-कलकण्ठ-ध्वनिमिषेण स्वागतमिव पवनजवगलितललितकुसुमसञ्चयमयमिवोपचारं तन्निःस्यन्दमानामन्द-मकरन्दमयानीव पाद्यार्घ्याचमनीयानि वितन्वाना-मतिमनोहरां काननलेखां ददर्श ॥३१॥

तत्र च काञ्चन काञ्चनविद्रुमालङ्कृतां महामानवतीं, काञ्चन वियोगा-तिशयमलिनां समदनाञ्च, काञ्चन वयोविशेषोपनीतरजोयोगदूषितां, काञ्चन स्निग्धातिमुग्धसुधीरधवसङ्गतां, काञ्चन पुरतो विराजमानाक्षकदम्बां क्रीडानिरतामिव कामिनीम्, काञ्चन मरुद्वरालिङ्ग्यमानहरिणी-रम्भा-लम्बुषाममरावतीमिव, काञ्चन सताण्डव-पिशाचमण्डलमध्यवर्तिभुजङ्गमा-लङ्कृतस्थाणुस्थानमयीं कैलासगुहामिव, काञ्चन नरहरि-वराह-त्रिविक्रम-चरितमयीं पुराणेतिहासकथामिव, काञ्चन वाल्मीक-शाण्डिल्य-व्याघ्रपादा-लङ्कृतां तपःस्थलीमिव, काञ्चन ब्रह्मैकतानभावननिरतां महायोगिनीमिव,

काश्चन खरतरखड्गाभिघात-पात्यमान-धूम्रलोचनचण्डमुण्डमहिषां प्रकटित-सिंहासनां हैमवतीमिव, काश्चन रात्रिश्चरतरुणीगणपरिवृतामशोकवनावस्थानां विदेहभूतनयां श्रीसीतामिव, क्वचन ताम्बूल-पूगखदिरकर्पूरलवङ्गैला-वासितद्विजराजिशोभमानां कृष्णागुरुचन्दनाञ्जनमृगमदहरिताल-तिलक-पत्रावलीभूषितां वासकसज्जामिव, क्वचन प्रलम्ब-लाङ्गलिचक्रिविलोकनोत्कण्ठित-पशुपालशिशुमण्डलां विषाण-वेणु-विविधनिनादपूरितदिगन्तरां व्रजस्थलीमिव महीयसीं वनमहीमहीनसत्त्वो महीपतिरवलोकयामास ॥३२॥

केचिद् वारविलासिनीमुखसुधाधानैकबद्धादरा
भूपाः केचन सीधुपाननिरता मिथ्यातपोऽव्यञ्जनाः ।
एकः श्रीयुतचित्रसेननृपतिः पादत्रयीविच्युतं
धर्मं धारयते न चेत् कथमसौ तिष्ठेदनालम्बनः ॥४८॥

अपिच—विद्यासत्कविता सदर्थरुचिरालङ्कारचर्चादिभि-
र्नित्यं दैवत-दीनभूसुरघटासन्तर्पणार्चादिभिः ।
धन्यीकृत्य धरातलं विजयते क्ष्मापालचूडामणि-
र्धत्ते चैकभुजेन भूमिवलयं श्रीचित्रसेनः कृती ॥४९॥

अपिच—पुरोगतुरगावलीखुरशताहता भूरियं
गजालिकटक[1]स्खलनमदजलैरभूद् दुस्तरा ।
अथोऽनुरथगामिनः कथमिमां तरिष्यन्त्यहो
महोर्मिचयभीषणामिति भयं समुन्मीलति ॥५०॥

अथवा, अहो जातोऽयमुपायः क्षणादेव ॥३३॥

तथाहि—यस्योत्तुङ्गतरङ्गदारुणखुरक्षोदेन कुम्भ्युल्लसत्-
कुम्भव्रातसमुच्छलन्मदजलैर्या भूरभूद् दुस्तरा ।
तस्यैवाश्वगणैः खुरोद्धुतरजोराजीभिरेषा क्षणा-
न्नीता भो महतां समे[2] हि महतां संवर्धना-पातने[3] ॥५१॥

---

1. कनट—प १, इ ।　　　2. 'समे' नास्ति—इ ।
3. संवर्धनापातनैः—इ ।

इत्थमपि तत्र तत्र वनवासिजनगीयमानमाकर्णयामास ॥३३॥

ततश्च भोः भोः सेनापतयः सेनापतिनिदेशवर्तिनश्च, सावधानैः श्रूयतामवधार्यताञ्च। एषा सत्वरचरणाङ्कसञ्चारसूचिता शशक-शल्लकी-प्रसृमर-सृमर-कृष्णशार-सारङ्गसङ्कुला काननवीथी त्विदमपि करालकानन-कोल-कलाप-लुलाप-कण्ठीरव-करि-निकर-कण्ठगर्जितमतिभयङ्करं, पुरतोऽपि गण्डशैलमण्डलायमान-गण्डक-पुण्डरीकचण्डचीत्कारघोरघोषम्, इतोऽपि[1] वञ्चक-वनबिडाल-वानर-वृकवृन्दान्दोलनचञ्चलतरम्, अपरमपि पार्श्वतो भीमस्वन-भल्लनिवहभीषणम्, अपरमपि मयूर-सारस-कपोत-कलविङ्क-कोकिल-कलकण्ठ-कुक्कुट-कोयष्टिक-ककुभ-कारण्डव-शुक-सगुण-पत्रसाङ्काररव-शङ्काकरम्, इदमपि जरदजगर-गरलानल-धूमशिखाकार-श्वसितानिल-सञ्चार-दन्दह्यमानं[2], क्वचिदपि भुजङ्गमसङ्घभूषितभूताधिपप्रचण्डताण्डव-दत्तताल-वेताल-भैरवभूमण्डलम् कैलासकन्दरमिव, तदिदानीं समन्ताद् विष्टभ्यन्तां, समारोप्यन्तां वागुरापाशाः, समन्तात् स्थाप्यन्तां द्विरदतुरङ्ग-शकटस्यन्दनारोहाः, दीप्यन्तां ज्वलनाः, योज्यन्तामनलयन्त्राणि, आरोप्यन्तां शरासनानि, मोच्यन्तां शराः सारमेयाश्च, क्षिप्यन्तां विक्रान्तशकुन्ताः कुन्ताश्च, आसन्नेषु च निपात्यन्तां क्षुद्रकाश्चन्द्रहासाश्चेति समन्तादश्रूयत महान् घोषणानिनादः ॥३४॥

ततश्च चञ्चल-चन्द्रहास-सहस्र-चञ्चलासञ्चयसञ्चारचित्रितम्, अन्योन्य-सङ्घट्टनठनायमान-विविधायुधसङ्घर्षण-जनितज्वलनकण[3]सञ्चयखद्योतजाल-मयान्तरीक्षं, दहनयन्त्राभिघातस्फूर्जथुगर्जितमयदिग्वलयं, प्रचण्ड-दहनभयसत्वरपलायमान-गहनचरजन्तुसन्तान-तरलतरमहावेग-सञ्जनित-प्रचण्डझञ्झाप्रभञ्जनान्दोलन-दोलायितभुवनमण्डलम्, आकृष्यमाणप्रचुर-कोदण्ड-मण्डलमय-समुदितमहेन्द्रचापकलापम्, खरतर-खड्गधारावदार्यमाण-वनकरिनिकरकुम्भनिवहनिरर्गलविगलन्मुक्ताफलकलापमयकरकासम्पातगभी-

1. 'अपि' नास्ति—इ। 2. दह्यमानं—इ।
3. 'कण' नास्ति—इ।

रम्[1], अनवरतवेगवन्निपातजनितामितखड्गझङ्कारघोरगम्भीरनिस्वनम्, निरन्तरदुरन्तशरधारासारमयम् अकालप्रलयदुर्दिनमाविरासीत् ॥३५॥

ततश्च मुहुर्मुहुरितस्ततः पलायमानानां वृक-वराह-वारण-वानर-वन-बिडाल-वञ्चक-व्याल-वनमानुष-वयसां, कोक-कुम्भि-कण्ठीरव-कालशारकुम्भीनस-काद्रवेयाणां, चमूरु-चमरी-चीनमुख मृग-महिष-महामातङ्गानां, शृङ्गखुर-रदन-वदनघोणाघन[2]घर्घर--घूत्कृति-चीत्कृति-हूङ्कृतिविचित्रध्वनिमयमभूत-चरश्चरम-समयसमुचितं विचित्रं किमपि कम्पयामास[3] भूवलयम् ॥३६॥

अनन्तरञ्च प्रचुरशरसञ्चारविध्यमानेषु सारङ्गसङ्घेषु, खरतर- खड्ग-लताखण्ड्यमानेषु च खड्गमण्डलेषु, श्येनमुख-पतत्रिचञ्चु-चरणाभिघात-पात्यमानेषु च पतगेषु, प्रचुरकुन्तकृपाणकाण्डमुख-हेतिहन्यमानेषु महावराह-महिषमातङ्गेषु, ज्वलज्ज्वलनज्वालाजालभीषितेषु च जालपतनसंयम्यमानेषु शशक-शल्की-शम्बर-शालावृकेषु, झटिति महाकाननान्निःसरन्तम्, अतिपव-मान-मानसरंहसम्, विकच-पद्म-पद्मराग-नवपद्मबान्धवमरकत-महेन्द्रनीलहेम-हीर-हरिदश्वोपल-हिमकिरण-मणिहारहारिविचित्रचित्रमय-कान्तकान्तिच्छटा-च्छुरितदिग्वलयम्, जाज्वल्यमानलोचनयुगतरलतारकान्दोलनेन दिवापि तारकामयमिव मुक्ताफलमयमिव व्योमाशावलयं वितन्वानम्, अतितर-विजृम्भमाणमहावेगतया गगनतलमात्रसञ्चारमिव दृश्यमानम्, महेन्द्र-चाप-चयावकीर्णमिव तडिल्लतापुञ्जसञ्छादितमिव नभो दर्शयन्तम्, अम्बरकासार-सलिलपिपासयोत्प्लवन्तमिव निरपराधबाध्यमाननिजान्वयस्य महाराज-स्याविनयमावेदयितुं चराचराधीश्वराय, गोलोकतलोत्पतनाय कृतोद्यममिव, मयीदृशरूपगुणगरिमशालिनि किमिति हरिणान्तरमपि पीयूषकिरणाङ्क-मारोहतीति हिमकिरणाङ्कमिवोद्दिश्य कृतोत्पतनं, भूवलयसमग्रतृणरसमास्वाद्य नन्दनवनघासप्रयासतया महेन्द्रनगराय कृतप्रयाणमिव विविधमनोहरकिरण-धोरणीदेदीप्यमानम्, पश्चिमाशाभिमुखमभिद्रवन्तं महामृगं ददर्श ॥३७॥

1. गम्भीरम्—इ। 2. घनघन—प २।
3. कल्पयामास—इ।

ततश्च समन्ताद् इत इतः, ततस्ततः, पुरतः पुरतः, पश्चात् पश्चात्, वामे वामे, सव्ये सव्ये, ऊर्ध्वमूर्ध्वम् , अहो नेक्ष्यत इदानीम्,अहो निभृतमालोक्यताम्, अर्क किरणजालान्तरिततया दुरालोकतामावहतीति सत्यं सत्यम्, अयमयम्, इत इतः, कुतः कुत इति भाषमाणानां निवृत्तमृगान्तरानुसरणानाम् अतितरप्रयत्नविहितपार्ष्णि-कशाङ्कुश-पाश[1]पात-द्विगुणितजवपवनगुणित-चतुरतुरग--करि सञ्चारिणामूर्द्ध्वविलोकननियोजित-जननिवहावेदिततन्मृग[2]तादृशगमनसरणीनां, धावनवेगश्रमजनितातिशयितक्षुत्पिपासाक्षाम-कण्ठानां तदासादनमहाव्रतसम्पादनविषयमात्रसमुत्कण्ठानां, धावतां महावीराणां, खनखनायमान-तुरगखुरनिस्वनेन, श्रमभरखिन्नवाह-सफेनफूत्कारतारतर[3]-निनदेन वेगवशाद् विसंष्ठुलचपलचर्म-चन्द्रहास-चाप-कवच-विशृङ्खलशृङ्खलाप्रेङ्खोलनजनितझणत्कारघोरनादेन वधिरीकृतमिव चराचरं तस्थौ ।।३८।।

संवृत्ते मृगयाविहारकुतुके श्रीचित्रसेने नृपे
मन्ये तन्मुखनिर्जितामृतरुचेरातङ्कलोलाङ्कतः ।
प्रभ्रष्टोऽयमतीवशङ्कितमनाः सारङ्गशावो[4] महा-
वेगो धावति विष्णुधामनि निरातङ्कं पदं प्रार्थयन् ।।५२।।

अथवा—एतस्मिन्नतिनिर्दयं नरपतौ श्रीचित्रसेने मृगा-
नुच्चैर्निघ्नति तद्यशोमुखपराभूतं विलोक्याश्रयम् ।
पीयूषांशुसमाश्रितो मृग[5]शिशुस्तस्माच्च्युतः शङ्कया
शङ्के धावति विष्णुधामनि निरातङ्कं पदं प्रार्थयन् ।।५३।।

अपिच—एतस्मिन् मृगयारतौ नरपतौ श्रीचित्रसेने मृग-
श्चित्रश्चित्ररयस्तनोति परितश्चित्रा गतीश्चित्रदृक् ।

---

1. 'पाश'-नास्ति—प २, इ । 2. 'तन्मृग' नास्ति—इ ।

3. 'तर'-नास्ति—प १ ।

4. सारङ्गमुख्यो—प २ । 5. मृगवरः—प २ ।

एतद्वेगवपुर्विलोकनचमत्कारान् समालोकय-
ल्लोँको विस्मयविस्मृतान्यविषयश्चित्रायते सर्वतः ।।५४।।

एवमनेकविधानि तत्र तत्र[1] काननकेतन-कवि-निवहसमुच्चारितानि समाकर्णयन्, आकर्णपूर्णशरासनमण्डलमध्यारोपितसायको धरणिनायकोऽपि तमतिधावन्तमनुधावन् विडम्बयन्निवाङ्गीकृतसारङ्गशरीरं सरोजसम्भवमनुधावन्तं शशाङ्कशेखरं, महीदुहितृमोहनाय मायामयमनोहर-मृगमूर्ति-मारीचमनुधावन्तं भगवन्तं श्रीरामचन्द्रमिवानुकुर्वाणः, मदनोन्माद-वशान्मैथुन्याय मृगमूर्तिधरं मुनीन्द्रमनुसरन्तं मनुजराजं विचित्रवीर्यं वैचित्रवीर्यमिवानुकुर्वन्, मृगरूपधरमतिद्रुतविद्रुतं दक्षाध्वरमनुविद्रवन् रुद्रानुचरो वीरभद्र इव, अरणीसहितमन्थदारुहारिणं हरिणमनुसरन् धर्मराज इव, अतीतसमस्तसामन्तचक्रः शक्र इव क्षीरनीरधिसम्भवमर्वन्त-मुच्चैःश्रवसमधिरूढः, उच्चैस्तरां त्वरयंस्तुरङ्गमराजम्, अनालोचयन् लोचनपथवर्तीन्यपि नानाजनपदजनगणनगरविपणिभवनोपवनविटपिपटल-परिपाटीपल्वलपुष्करिणीसरित्सरसीसरसीकृतानि वर्त्मानि, तन्मृगरूप-रयविलोकनव्याकुललोललोचनः, विस्मयविशेषचमत्कारभारमन्थरमानसः सुदूरमनुसरन् अविज्ञातानेकशतयोजनमात्रमध्वानं विलङ्घयामास ।।३९।।

अथ विश्रान्तातिमहाजवपवमानायमानतुरङ्ग-मात्रद्वितीयस्य अद्वितीय-महिममहनीयस्य महीमहेन्द्रस्याभूतचरं श्रमभरमवलोक्य परमकारुणिक-तया भक्तवत्सलतया च रोषावेशारुणित इव सहायतामिव कुर्वाणः, पश्चिमा-शाभिमुखमभिद्रवन्तं तं प्रति सारङ्गं प्रजवितसप्ताश्ववेगद्विगुणसमाकृष्य-माणस्यन्दन इवाभिधावन्नग्रे सरो भगवान् सहस्रकिरणोऽपि झटिति पश्चिमा-चलशिखरसीमामवाप ।।४०।।

अथ चरममहीधरशिरःसरसी-ताम्रसरसीरुहे महति मिहिरमण्डले मुद्रामिवोपगच्छति सुविततकिरणपटलच्छल-सहस्रसङ्कोचभाजि, माध्वीक-

1. 'तत्र' नास्ति—इ ।

धानन्निराशतयेव तत उड्डीया[1]शान्तरान्तरान्तरालमवलम्बमानेषु ज्वलिष्यत्-प्रोषितपतिकादुरन्तदुःखदवदहनधूमायमानेषु तिमिरसमाजव्याजरोलम्ब-कदम्बेषु, चतुरदूतीजनसङ्केतोदितसङ्केतकेतनसंक्रान्तकान्तोदन्ततया स्फुरित-नितान्तसन्तोषसन्तानतरलहृदयास्वभिसारिकासु, सुचिरसहवासप्रेमपरम्परा-परिचितचक्रवाकतरुणीनववियोगदुःखदर्शनादिव म्लानिमुपयान्तीः पद्मिनीर-पहाय सहासकुमुद्वतीरभिधावत्सु मधुपसमूहेषु, स हरिणयुवा सहस्र-किरणेनेव समं चरमगिरिगुहामतीत्य लोचनपथं प्रविशन्निवान्तर्धान-मियाय ॥४१॥

अतीते च तस्मिन् हरिणतरुणे लोचनसरणिं, सङ्कुचितसमस्तकिरण-कलापे च भगवति मयूखमालिनि, समन्तात् सञ्चारितदृष्टिप्रसरो नर-पतिरनवलोक्य[2] तं मृगम्, आलोच्य च वासरावसानसीमसमयं, मृगया-व्यापारनिवृत्तचित्तवृत्तिरन्तरीक्षतोऽपि निराकृतनेत्रसञ्चारः, समन्तात् समासन्नभूमीवलयमवलोकयामास ॥४२॥

संस्पृष्टापि करैः सुधासहचरैः शीतैः कलानां निधेः
संयाते चरमाचलस्य शिखरं चण्डत्विषि प्रेयसि ।
एषा सम्मलिनीकरोति नलिनी भावं स्वभावाद्भुतं
कर्तव्या कृतिभिः प्रसन्नमतिभिर्मैत्री पुनस्त्वीदृशी ॥५४॥

अपि च—चक्रीर्मुखनि चक्रवाकनिकरे भृङ्गेषु पद्माटवी-
मानं मानवतीषु पान्थनिवहे सञ्जीविताशामपि ।
दैन्येनातिदयार्द्रभावजनुषा भूमीरुहाः प्रोच्चकैः
क्रन्दन्तीव कुलायलीनवयसां रावैस्तुषाराश्रुभिः ॥५५॥

किञ्च,—सुस्नाताः सरसीसरित्सु कुसुमान्याहृत्य भूमीरुहां
तन्वानाश्च दिगम्बरार्चनविधिं क्षामास्तपोभिः किमु ।

1. उच्छ्रीया—इ । 2. अतः परं 'च' इत्यधिकः पाठः—इ, प २ ।

वराहनिवहघोणाघूनकृति-मृग[1]मृगराजमृगादनभल्लगण्डकपुण्डरीकगणघनघन--घर्घरनिनादनिकरं, भरितसमीपशैलगुहाकुहरं प्रतिध्वानसम्पूर्यमाणरोदसी-विवरं शुश्राव ॥४५॥

तेन च[2] सत्वरमाहूयमान इव पुरतो हिन्तालतालतमालतालीप्रायैः, एकतश्च शिंशपाशिरीषशाल्मलिशालशल्लकीसरलसहकारसिन्धुवारसर्जार्जुनाञ्जनबहुलैः, अन्यतश्च काञ्चनकुरुवककदम्बकुटजकिरातकेतककुन्दमुचुकुन्दकक्कोलक्रमुककालागुरुकङ्केलिकुठेरकभूयिष्ठैः, अपरत्र च लवलीलवङ्गलोध्रवनसपलाशपीतशालपाटलिपुन्नागनागकेशरपिप्पलप्रियङ्गुप्रधानैः, निरस्तचन्द्रार्ककरप्रवेशैः पातालनलैरिव, सलिलाहरणार्थमागतैर्महामेघसमूहैरिव, निरवधिविविधफलपल्लवभारभूषितविश्वम्भरैर्महाभागवतैरिव, निरन्तरफलकुसुमसन्तान-सन्तोष्यमाणशाखाचरणविन्यस्तनिश्चलहृदय-श्रुतिमधुरध्वाननिपुणद्विजसमाजैर्महाधार्मिकैरिव, प्रभाकररथपथरोधनाय गगन[3]मुत्पतद्भिर्विन्ध्याचलशिखरैरिव, महामहीरुहैः श्मामायमानमनिप्रमाणं नयनपथातीतसीमानं चतुरस्राकारं सारमिव वसुन्धराया द्वीपविशेषमिव भूखण्डं ददर्श ॥४६॥

ततश्च सुविमलशिशिरसलिलशीकरासारशीतलेन कमलकुमुदकुवलयकल्हारहल्लकमुखकुसुमसञ्चयमाध्वीकमधुरेण तीरतरुतनुतरकुसुमसञ्चयसञ्चारणचतुरेण अभ्यागतमहीपतिसभाजनाय प्रेरितेनेव दूतभूतमारुतेनालिङ्ग्यमानः, नीरतीरभूरुहनिलयसारसकलहंसकारण्डवकोककङ्ककलविङ्ककुररकेकिकोकिलकोयष्टिककुक्कुटककुभकपोतकपिञ्जलादिद्विजकुलमञ्जुलकल[4]कलकोलाहलैः स्वागतप्रश्नपुरस्सरं सादरमाहूयमान इव, मृगमृगराजमृगादनवानरवराहवारणवञ्चकवृषवृषदंशहंससारसवकजीवञ्जीवकचमूरुचमरीचीनचातकचरणखुरनखराङ्कपङ्कपङ्कजशैवलमृणालकुवलयकुमुदकह्लारैः समन्ततोऽवकीर्ण-

---

1 'मृग' नास्ति—इ।
2 'च' नास्ति—इ।
3 गगनतल—प २।
4 'कल' नास्ति—प १।

रनुमीयमानाम्; अतिसरल[1]सरलशल्लकीशालदेवदारुपिप्पलपनसपलाशरसाल-पीतशालतमालतालखर्जुरार्जुनाञ्जननारिकेल-कक्कोलक्रमुकमुचुकुन्दचम्पकजम्बीरजम्बूकदम्बपुन्नागनागकेशरप्रमुखतरुणतरुप्रचयमयवीथीद्वयमध्यनिकाय-भूतशिशिरच्छायामनोहरभूभागविरचितसुचिरान्छस्फटिकमयदेदीप्यमानविनानाम्, पदवीमदवीयसीमवलोकयामास ।।४७।।

ततश्च तदनुसरणेन आसादितावकाशो दूरादेव पारदरसधारामयमहाभुवनवितायमानशारदराकारोहिणीरमणकिरणधोरणीविद्योतमानं सुधौतसूक्ष्मचीनांशुकाच्छादितमिव, नारदसारदाशङ्करसङ्कर्षणशेषसोमशरीरसमूहसम्बाधं सुधापूरप्लावितमिव, सौधसन्दोहमतिविशदतया पाण्डरतन्तुसन्तानमिव निरूप्यमाणं निपुणनिपुणमपि निरीक्ष्य मुहुर्मुहुरतिमात्रविवर्धमानकुतूहलतया वितर्कयामास ॥४८॥

समुपजातकुतूहलश्च प्रजविततुरङ्गमो निमेषमात्रेण तत्प्रदेशमाससाद ॥४९॥

ततश्च निखिललोकपालभवनोपान्तसीमापर्यन्तसन्ततान्तरालसान्तरीक्षक्ष्मामण्डलमण्डनायमानम्, प्रचण्डपवनदोधूयमानम्, अखण्डपाण्डरपटमयमहामण्डपमिव, द्रवितसुधौतकलधौतधारासारमयमहासागरमिव, भूतिभरभूषितभैरवभूतनाथभवानीगुरुभूधरभारतीभानुभरभरितमिव, शङ्करसङ्गीतश्रवणद्रवितचराचरकारणमयकारणनीरपूरमिव, सरोजन्म[2]-जन्मभूमिभूतमहासरोजकाननप्रभवभवन[3]महासरोवरमिव, महाप्रलयविशेषप्लवमानक्षीरोदमयैकार्णवपयःप्रचयमिव, त्रैलोक्यनाथसम्प्रदानकनिरुपधिभुवनत्रयसम्प्रदानसम्पादितानुक्षणोपचीयमानं पातालतलादुत्तिष्ठमानं दानवनिकरशिरोमणिवैरोचनियशःप्रवाहमिव, भूतभर्तृभवनभूतभूमीधरभुजगभूपालयोर्मिथः स्पर्धया धावन्निजनिज[4]धामधाराधोरणिमयमहासिन्धुद्वन्द्वसम्भेदमिव,

---

1 'सरल' नास्ति—इ ।  2 सरोजब्रह्म—प १ ।

3 'भवन' नास्ति—प १ ।  4 'निज' नास्ति—इ ।

ऐन्द्रजालिकविद्यामयमिव गोचरीक्रियमाणभुवनत्रयवृत्तान्तं; समीरसञ्चार्यमाणनीरशीकरकदम्बतया सुविमलविपुलमुक्ताफलजालमयानीव दिक्पालभवनतोरणानि तन्वानम्, आश्चर्यज्योतिश्चक्रमिव तुलाविहीनम्, अनादिपुरुषचरितमिव मीनकूर्ममहावराहानेकविक्रमनरहरिरामलक्ष्मणावताररमणीयं शङ्खचक्रगदाभिरामं मकरकुण्डलिकमलालङ्कृतमनन्तभुजगराजभोगपर्यङ्कञ्च, सौरभविशेषानुमीयमानभ्रमर-सञ्चयसञ्छादितप्रकाण्डशतसहस्रपत्रपुण्डरीक--कैरवगहनं, कोककामिनीकुलकुलायभूतनवीननीरजबान्धवबिम्बकदम्बायमानकोकनदकाननं, निर्विशेषरूपत्वेन नेत्रानिर्णेतव्यविशेषतया कलरुतमात्रानुमीयमानाचञ्चलचञ्चरीकसञ्चयसमुपचीयमानमहानीलोत्पलगहनं, सुरतसम्भोग-परिश्रमापनिनीषु-पुरन्दर-पुलोमजा-पीयूषपूरपानोत्तराचमनावकीर्णतत्तत्करतल-गलितामृतशेषलेश-मन्दारहारव्यतिकर-वर्धितनिसर्गहारिपरिमलसम्भारभारमन्थरतया साहङ्कारैरिव अव्यामोहनिजनिजनिकेतनावस्थानावस्थयैव निष्पाद्यमाननिरन्तरनीरनिर्वाहणीयावगाहनसन्ध्योपासनतर्पणपानाचमनादिभिः सनकादिभिर्मरीचिमुखैश्च[1] सप्तर्षिभिराशीर्भिरभिसंवर्ध्यमानैरिव तत्तत्करतलविगलितकुशकुसुमाक्षतदूर्वाकिसलयसनाथैर्गोलोकसुखोषितसुरभीप्रमुखगवीपिपासा--खेदापनोदनस्नपनसंक्रान्त–तत्पयःपूरतद्गतसमुखफेनपिण्डातितरमधुरपाण्डरसुरभीकृतैः स्वाभिसम्बन्ध[2]निबन्धनातिप्रेमसाध्वसवशादिव पाशपाणिभवनावरणमहाप्राकारतया परिणमद्भिर्महातरङ्गैरुद्द्योतमानं, हैमवतीस्तनयुगलमिव गजेन्द्राननास्वाद्यमानपयोधरं, कामिनीहृदयमिव स्फुरन्मकरकेतनम्, अनेकधा पितामहमाधवमहेशमाहेश्वरीमिहिरमातङ्गमुख-महासेन-मन्मथ-महेन्द्र-मारुत-मुखमरुन्मण्डली–मन्त्रमुखरावगाहनमज्जनोन्मज्जनलीला-पुरस्सर-परस्परविरचितरुचिरकरयन्त्रनिःसार्यमाणनीरधारा--सहस्र--सन्ताडन--सन्तरणसन्ध्योपासनमननपरिपूजनध्यानाध्ययन--विधानतीर्थतीर्थकृतं, राजसूयाध्वरराजदीक्षितद्विजराजत्रिसवनावगाहनसंक्रान्त-

---

1 'च' नास्ति—इ। 2 सम्बन्धनिबन्धनिबन्धना—इ।

तदङ्गसङ्गलितामृतसारसञ्चारस्वादुस्वादुतरीकृतपयःप्रवाहम्, अनेकशतसंवत्सरनिर्वाहणीयव्रतव्रातनिर्वाहणाय सवालिखिल्यसप्तर्षिसनकादिभिश्चिररात्रोषिततीरालङ्कृतत्वष्टृसृष्ट[1]सन्ततनिस्तमोरजस्कभवनोपवनं, दाक्षायणीविरहदूनमहेश--देहदाहमहौषधीभूतनीरशीकरासारकैरवपुण्डरीकदलमृणालशैवलतीर-पादपालवालं, क्वचन श्रीभागवतमहापुराणमिव दलितकुवलयापीडवकधेनुकतृणावर्तकृष्णसारचरितं, क्वचन सच्चिदानन्दमयमिव परमहंसास्वाद्यमानरसमद्वितीयं देदीप्यमानमन्तःप्रतिबिम्बितविश्वप्रपञ्चमपारमविकारञ्च, क्वचन पार्वतीवदनबिम्बमिव नीलकण्ठास्वाद्यमानपीयूषाधिकपरमरसधारं, चित्रलेखाप्सरोविरचितमहाचित्रपटवितानमिव, स्फुटतरोपलभ्यमानसपरिवारेङ्गिताकारचतुर्दशभुवनभवनोपवनवृत्तान्तं, पारावारमिव प्रबलतिमितिमिङ्गिलमहामकरकुम्भीरशिशुमारम्, अन्तरुल्लासितानन्तपुण्डरीकलोचनं, प्रकटितविराटमूर्तेरिव भगवतो नारायणस्य कायच्छायावलोकनविपुलादर्शमण्डलं, सिद्धसाधनस्थलमप्यदूषणावकाशं, निखिलव्याप्तिमत्तया निर्णीयमानमप्यसत्प्रतिपक्षमप्यसाधारणं, दृश्यमानबहुवयोविस्तारमपि सुकुमारम्, अतितरलमपि महागम्भीरं, विजृम्भमाणजीवनमपि निरन्तरतरङ्गवाचालमपि मीनकेतनसञ्चारचञ्चलाशयमप्यचेतनं, निजनिजाशावस्थितैरेवाशास्तम्बेरमैः सुखसम्पीयमानसलिलसम्पातं, भुवनाद्भुतमदृष्टचरमनाकर्णितपूर्वमपूर्ववृत्तान्तसंघं महातरङ्गं "सतसङ्गं"[2] नाम महासरः समालोकयामास ॥५०॥

विलोकनमात्रादेव अपगतनिखिलश्रान्तिसन्तानो विगलितनिःशेषनिखिलचिन्तासन्तानसन्तापतया च विशदीभूतान्तःकरणकरणो मुहूर्तमात्रं ध्याननिमीलितलोचनो निश्चलनिर्मलमानसः समुत्पन्नसमाधिरिव कामपि परमामननुभूतचरीम्परमप्रेमानन्दपरम्परासहचरीं निर्वृतिमाससाद ॥५१॥

निर्वृतनिभृतमानसश्च चिन्तितवान्—अहो कोऽयमतिमनोहरोऽयं सरोवरो

1 -तत्त्वष्टृसृष्ट – इ । 2 'सत्सङ्गं' नास्ति—इ ।

यदवलोकनमात्रेणैव स्नपिताप्यायितसर्वेन्द्रियान्तःकरणात्मनो विगलित-विषमविषयवासनापाशस्य किमपि कमनीयमनास्वादितचरमतिमनोहर-मत्यद्भुतमश्रुतपूर्वममृतमिवास्वादयतः सुखमतीव समतीत्य वाङ्मनसयो-रध्वानमन्तरुल्लसति ॥५२॥

मन्ये च यास्ताः कलानिधिकला बहुलपक्षक्षपासु हीयन्ते, ताः खलु तत आदायात्रैव महासरसि पुञ्जीक्रियन्ते प्रजापतिना। कथमन्यथा बाह्या-भ्यन्तरीणसन्तापसन्तानापहरणानामगणितरसरूपान्तराणामतिमनोहराणाम-दृष्टान्तानामीदृशानां पयसां सम्भवः ॥५३॥

शङ्के चात्यन्तमसृणतया लोचनपथेनैव प्रविश्यान्तरान्तरात्मानमपि स्नपयति पाययति निर्वापयति चान्तःसन्तापसन्तानमेतदीयमम्भः ॥५४॥

आलोकयतश्च शोभातिशयमेतस्य सरसः सर्वमन्तर्हितमिव, न स्मृति-सृतिमावहति किमपि, क्वचन राज्यं मन्त्रिराजो वा, करितुरङ्गरथसेना वा, ते ते राजपुरुषा वा, नगरोद्यानानि कोषभवनानि वा। न किमपि तादृशप्रेमलेशोऽपि स्पृशति ॥५५॥

अन्यच्च—मन्ये शुद्धसत्त्वगुणेन सत्यव्रतेन निष्कामकलितपुण्यपुञ्जेन साधुसमूहशीलजालेन च भगवता स्वयमेव नारायणेनेयमुत्पादिता सरसी ॥५६॥

आश्चर्यं यदत्र तिर्यञ्चोऽपि रोषहिंसादिककालिममालिन्यमुक्तात्मानो मुक्तात्मान इव परानन्दमयरसधारामास्वादयन्ति। तथाहि—विकच-पुण्डरीकाणीव पुण्डरीकमुखानि जिघ्रन्ति कृष्णसारशिशवः, प्रफुल्लसारस-पत्राणीव सारसपत्राण्यास्फालयति खञ्जरीटपोतः, दैवताधिदैवतं पञ्चाननमिव पञ्चाननं सिञ्चति पुष्करसलिलेन मातङ्गः, चतुर्दन्तं नागेन्द्रमिव नागेन्द्र-मारोहति[1] कौशिकः, प्रियक्रोडमिव क्रोडमालिङ्गति तरक्षुतरुणी, भगवतो नीलकण्ठस्येव नीलकण्ठस्य कण्ठमलङ्करोति भुजङ्गराजः सहदेवसहोदर-नकुलस्येव नकुलस्य मुखं प्रेम्णा चुम्बति चक्री, जलमानुषवनमानुषयोरपि

1 नागेन्द्रशिरारोहति—इ।

परमा मैत्री, जलदैवतवनदैवतयोरपि नितरामिति विचित्रचमत्कारधारावधारणविस्मापितमानसं मानसमपि सरो न प्रयाणेनेदृशमिति चिन्तितवान् ॥५७॥

किञ्च, अस्य सरसो नीरतीरसम्भवानां कुसुमानां सौरभभारहारिणा शीकरासारसञ्चारचारुशीतलेन परिणतफलकदम्बपातननिपुणेन निरन्तरतटभुवनशोधनसेचनशीलेन समीरणेनैव निष्पादितातिथिसपर्यापर्याप्यायिताः[1] सुखमिह परममनुभवन्ति पान्थसम्प्रदायाः[2] ॥५८॥

किञ्च—सम्पूर्णा सरसीरुहैर्निरवधिक्रीडन्महासारसी
क्रीडन्ती वरशीकरैरिव नभोलक्ष्म्या च दिक्पङ्क्तिभिः।
ऊर्ध्वाधस्तनपारसीमरहिता निस्तुल्यतामीयुषी
चेतो मे सरसीकरोति सरसी नेदीयसी नेत्रयोः ॥६०॥

अपि च—अहो आश्चर्यं, मम हि मृगतृष्णामिव कामपि मृगयां समभिधावतो मृगयमाणस्य च मृगविशेषं, सरस एतस्यावलोकनक्षणादेव दासीव समग्रप्रपञ्चमयविषयवासना प्रतिभाति, यत् सत्यं श्रीगुरुचरणसरोजप्रसादा एव जयन्ति, तत् सर्वथा कृतकृत्योऽहमिति श्लाघमान एवात्मानम्, अवरुह्य व्यपनीतपर्याणन्तुरङ्गमम्, आत्मानञ्च विमुक्तकवचायुधोष्णीषभूषणं विधाय, निधाय च तीरतरुमूलस्फटिकालवालवेदिकायां सर्वं, तुरङ्गमञ्च सरसीमवतार्य स्वेच्छाविहितमज्जनोन्मज्जनं पीतसलिलमपि निजकरकमलविरचिताञ्जलिपुटसलिलासारेण सरसीकृत्य, उत्तार्य सञ्जातकोमलतृणसञ्चयशालिनि क्वचन तीरतरुमूलप्रदेशे संस्थाप्य संयम्य च तन्मूलशाखायां, स्वयमपि सरोऽवततार ॥५९॥

अवतीर्य तत्सरःसलिलसंस्पर्शानन्दभरनिर्वृतचेता निःस्पन्दनिमीलितलोचनो मुहूर्तमात्रं तस्थौ ॥६०॥

तत उत्थाय, विधाय पश्चिमसन्ध्यावन्दनं, निमीलिताक्षः किमपि

---

1 -प्यायितः—इ। 2 -सम्प्रदायः—इ।

कमनीयमभिमतमवलोकयन् रूपविशेषं, मुहूर्तद्वयञ्जजाप तुष्टाव च, सन्तुष्टमानसः प्रणनाम च मुहुर्मुहुरष्टाङ्गम्[1] ॥६१॥

कृतसायन्तनकृत्यकलापश्च चिन्तितवान्—अये किमिदानीं विधेयम्, एषा समुपस्थिता रजनी, निर्जनश्चायम्प्रदेशः, क्व स्थेयं, कथं वा किमासने कतमाहारेण वेति ॥६२॥

अनन्तरञ्च अमृदुमृदङ्गशङ्खध्वनिसम्बलितनान्दीनादमुखरं कमपि कलमविकलमतिमनोहरं वचनमाकर्णयामास ॥६३॥ यथा—

राजन् स्वागतमास्यतां वनमिदञ्चेदं सरः पूरियं
रम्योद्यानवती प्रपूरितमहाकोषा महासञ्चयैः ।
पूर्णा दैवतसिद्धचारणगणैर्विद्याधरैः किन्नरै-
रत्रैवाद्य सुखं निवत्स्यसि निजं सर्वं तवेदं ध्रुवम् ॥६१॥

अपि च—मूर्त्तेनैव गुरुप्रसादपरमाभीष्टेन भाग्योदयं
साक्षात्कारमुपेयुषा मृगवराकारेण कृत्वा बलात् ।
सत्सङ्गं परमं सरस्त्वमधुना सम्प्रापितस्तत्फलं
सद्यः पश्य पुरीमुपेत्य परमां भक्तिं कृतार्थो भव ॥६२॥

ततश्च केनेदमाभाषितमिति शङ्कमानस्त्वरितमभिधावद्भिर्महामणिमयं ज्वलन्महौषधिमयञ्च दीपसहस्रं धारयद्भिरपरैश्च वेत्रपाणिभिः समुद्घुष्यमाणजयशब्दैर्निजनिजकायकान्तिसन्ताननितान्तनिर्भर्त्स्यमानघनान्धकारैः पाद्यार्घ्यपाणिभिरपि कतिपयैरादरावनमितमौलिभिः सविनयमागत्य "स्वागतं महाराजस्य, एषा भगवती सुरासुरदेवब्रह्मर्षिभिरभ्यर्थ्यमाननिमिषार्धमात्रसङ्गा प्रेमलक्षणा भक्तिरुत्कण्ठितहृदया समाकाङ्क्षते त्वदवलोकनाय। तत्त्वरतां महाराजः। इयञ्च नातिदूरे एतस्य सरसः पश्चिमतीरोपवने देदीप्यमाना महती(महा?)मणिमयमहासौधप्राकार[2]प्रकारमयी चतुर्दशभुवनभावनातिग[3]परमशोभा 'परमशोभा[4]' नाम मिहिरहिमकरकोटिकान्तिप्रचय-

1. मुहुर्मुहुरपि साष्टाङ्गम्—इ ।
2. प्रकारप्रकर—इ ।
3. भवनातिग—इ ।
4. 'परमशोभा' नास्ति—इ ।

वप्रचया विरिञ्चिवृषभध्वजाभिवाञ्छितवासप्रवेशा निखिलदुर्गमदुर्गसहस्र-वलयवती महती पुरी" इति ( कथितं ? ) समाकर्ण्य पीयूषसम्पातेनेव तेन सादरसरसाभिभाषितेनाप्यायितमनाः परदैवतधामेत्यनारूढतुरग एवाहूतानु-चलिततुरङ्गमो यथाज्ञापयथेति प्रतिगृह्य स्वागतप्रमुखातिथिसपर्यापर्यायमग्रे-सरैस्तैरेव दर्शितसरणिः प्रतस्थे ।। ६४ ।।

ततश्चोभयपार्श्ववितत स्फटिकहाटकरजतालवालकुल-चम्पक-रसाल-शाल-नारिकेल-क्रमुकमयक्रमविरचितवीथीसहस्रप्रत्येकावरणकाञ्चनरजत--मरकत-पद्मराग-- महेन्द्रनीलमयानत्युच्चप्राकारचयविराजमानामविरलसोपानपरम्परां पदवीमासादयामास ॥६५॥

अहो किमयमपूर्वोऽद्य सञ्जातो मम चेतसः प्रसादो येनायमन्तरात्मा घनाभ्रंलिहमहामहीरुहव्यूहमये प्रचण्डगण्डपुण्डरीकमण्डलभल्लभुजङ्गमभीम-भूतसञ्चयसञ्चारघोरतरे महाकानने महामेघमण्डलीविवर्धितदुर्दर्शदर्शनिशीथ-समयापादितदिङ्मोहान्धीभूतस्यैकलस्यैव सञ्चरतः[1] सहसा महासहायभूत-सहजबान्धवमहाजनसमाजमयमहानगरासादनं, क्षुत्तृट्क्षामस्य प्रचण्डमार्तण्ड-संतापसन्तापितस्येवाभिमतसुशीतलच्छायभवनपानभोजनासनशयनसम्प्राप्तिः, अदृष्टधनलाभस्येव सहसा स्पर्शमहामणीन्द्रलाभः, दुर्वासःशापप्रतापभीताया इव पाञ्चालतनयायाः प्रार्थिताहूतश्रीकृष्णचन्द्रचरणारविन्दद्वन्द्वसन्दर्शनं, ग्राहग्रस्यमानस्येव गजेन्द्रस्य प्रार्थितपरमपुरुषासङ्गः, चतुर्दशहायनोत्तरं श्रीरामचन्द्रसमागम इव श्रीभरतस्य, वाङ्मनसयोरप्यगोचरमतीवानन्द-भरमनुभवति। तत् किन्तु खलु प्रभावोऽयं[2] सरसोऽस्य, किं वास्य प्रदेशस्य, आहोस्विदेतदधिदेवतायाः, किमथवा भगवत्याः प्रेमलक्षणाया भक्त्या इति सञ्चिन्तयन्तमेवैनमशरीरा वाणी पुनरपि प्रबोधयामास ॥६६॥ यथा—

आदौ श्रीलगुरुप्रसादवशतः शुद्धस्वभावं मही-
खण्डम्पश्यति तत्प्रभाववशतः सत्सङ्गसंज्ञं सरः।

1. सञ्चरितः—प १। 2. प्रभावोऽयं नास्ति—प १।

पीत्वैतत्सलिलञ्च याति पदवीं स्वान्तप्रसादाभिधा-
मायासच्युतिमुत्तरोत्तरमहानन्दन्ततो विन्दति ॥६३॥

अपि च—प्रत्यक्षीकुरु भूमिपाल पुरतः सम्पीड्यमानं महा-
भागं कञ्चन कैश्चिदद्य तु समासङ्गान्महत्या भुवः।
मुक्तप्रायमयुक्त[1]बन्धनमपि प्रोद्दामकारागृहाद्
घोरात् पथ्यमपथ्यमेव सततं मन्वानमत्याकुलम् ॥६४॥

इत्याकर्ण्य च पुनरतीव विस्मयविस्फारितलोचनः पुरतो विद्योतमानानेक-वातायनम् अनेकविधद्वारम् उपरि दोधूयमाननीलपताकामण्डलं रथाङ्गद्वया-लंकृतं महारथमारूढमसहायमसारथिमवाजिनमतिमनोहरं सुकुमारं कुमार-मतिमहत्याऽतिजरत्याऽतिभयङ्करया वज्रायमाणातिदारुणारुणनीलशुभ्रकान्ति-महारज्जुत्रितयेन संयतग्रीवं, निष्करुणदारुणेन च शर्वरीचरमिथुनषट्केन निरन्तरप्रहारव्याकुलीक्रियमाणम्, अग्रेसरमहाचञ्चलैकतरमहावञ्चकपुरुषा-नुयायिभिः पञ्चभिरतिविप्रलम्भकैः परुषपुरुषैश्चातिदीर्घतरातिदारुणदृढपाशैरेकै-कशो बद्ध्वा प्रलोभ्य चैन्द्रजालिकविद्योपपाद्यमानघनान्धकारभरितगम्भीर-वीभत्सविवरेषु निजनिजाभिमतेषु मुहुर्मुहुरभिनिपात्यमानं, दुर्वारदारुण-श्वापदसञ्चारदुर्गमनिःसीमसुभीमगहनेऽपरिमितमधुकुसुमफलच्छायाप्रलोभनेन सञ्चार्यमाणम्, अन्तरा स्यन्दनमन्तरीक्षचरीं समस्तपरमवस्तुस्तोमनिधान-भूतां जरामरणक्षुत्पिपासाधिव्याधिनिःशेषनिर्मूलनमहौषधिभूतमकरन्दसन्दोह-भरितां जाज्वल्यमानज्योतिर्ज्वालाजालनिरस्यमानवाह्याभ्यन्तरीणदुरन्त-तिमिरसञ्चारामनिद्रामम्लानिमनश्वरीं महासरोरुहवनीमन्धमिव रत्नदीपा-वलीमनासादयन्तं महाभीमान्धतमसे च परिभ्रमन्तं तदानीञ्च सद्योविमुच्य-मानप्रायजरतीगृहीतासितलोहितपाशद्वयतया विवर्धमानवरमानन्दपरम्परा-परिचयविस्मयातिशयक्षुब्धमानसमिव विलोकयामास॥६७॥

तदानीञ्च तत् सर्वमालोकयत एवास्य स्वप्नमयमिवैन्द्रजालिकमयमिव प्रतिबिम्बमयमिव निमेषमात्रेण सर्वन्तिरोबभूव॥६८॥

---

1. मुक्त—इ।

तदनन्तरञ्च तत्रैव—

विश्राम्याद्य पुरे मनोहरतरे श्रीप्रेमभक्त्या महा-
देव्यास्तां प्रणिपत्य तद्विरचितातिथ्येन पूर्णान्तरः ।
तत्कारुण्यवशेन पश्य सविधे विद्योतमानां श्रियं
श्रीवृन्दावनसंश्रयां श्रुतिगिरामत्यन्तदूरे स्थिताम् ॥६८॥

इत्याकर्ण्य च प्रणम्यताममानुषीं गिरं शिरसा बहु मन्यमान एवात्मानं कुतूहलभरतरलमानसः प्रचुररोमाञ्चसञ्चयसञ्चारद्विगुणीकृतकलेवरः शनैः शनैर्व्रजन पुरतः पुरमालोकयामास ॥६९॥

अपरिचितं रजसा तमसा च हिंसारोषादिभिरप्यखिलदूषणगोष्ठीभिः, सत्त्वगुणेन च बहिर्द्वारप्रकोष्ठसम्मार्जनाधिकारपरमप्रीतेन दूरत एव समुपास्यमानं हिमशैलमन्दरमेरुमहेन्द्रगन्धमादनमलयहेमकूटप्रायसमुच्छ्रायैर्महाप्रासादैर्मन्दार-हरिचन्दनप्रमुखाणाममरमहीरुहाणामेकैकमयमहोपवनशतसहस्रापरिमितपरिखापरार्धपरिपाटीपरिवृतमतिशयितचतुर्दशभुवनं पवनदोधूयमानपताकाशतसहस्रकोटिचुम्बितगोलोकभवनं पुरमतिमनोहरम्प्रविवेश ॥७०॥

प्रविश्य च प्रतिद्वारनियमितैः प्रतीहारैरुपदिश्यमानमार्गः, बद्ध्वा तुरङ्गममवान्तरद्वारसमीपविटपिमूलशाखायां, क्रमेणातिक्रम्य द्वारशतकोटीः, कोटीन्दुभानुसङ्काशे चतुर्दशभुवनाद्भुतमहामणिनिकरविराजमानमहासिंहासने सतूल[1] दिव्यशुभ्राम्बरवितानविद्योतमाने विरचितासनां, सुरासुरसिद्धविद्याधरगन्धर्वगुह्यककिन्नररजनीचरचारणयक्षसुन्दरीभिः शतसहस्रकोटिपाण्डरचामरैर्वीज्यमानचरणसरोजां, रजतमहारजतमौक्तिकमरकतपद्मरागहीरकमहेन्द्रनीलमुखमहामणिनिवहविरचितविविधालङ्कारसञ्चारहारिदेदीप्यमानमहावयवां, सुधासुधाधामधाराधिकधवलाम्बराम्, अचिन्त्यमहामहिममहनीयाम्, अमृतमयीमिव, परमप्रेममयीमिव, सुषुप्त्यवस्थामयीमिव, परब्रह्मानन्दसन्दोहसाक्षात्कारधारामयीमिव, निखिलजनाखिलमनोरथमयीमिव, वासव-

---

1. नूतन—इ ।

विरञ्चिविश्वेश्वरमुखमुखपङ्कजोदीरितस्तुतिशतसभाज्यमानाम्, परमपुरुषार्थसार्थाधिकार्थप्रदपदकमलाम्, अमलाकृतिचरिताम्भगवतीम्प्रेमभक्तिं ददर्श ॥७१॥

ततश्च तत्तत्परमपरमाभीष्टपदार्थसार्थावलोकनान्तरक्षणक्षणाधिकाधिकोत्तरोत्तरविवर्धमान[1]प्रबलपुलकास्रधारासारसञ्चारगद्गदस्वरं कृताञ्जलिपुटः साष्टाङ्गप्रणतिस्तुतिसन्ततिभिः सपरिजनां देवीमतिसन्तोषयामास ॥७२॥

सन्तोषितमनसा देव्या स्वयमुत्थाय प्रणामपतितं भूमिपतिमुत्थाप्य दृढञ्च परिष्वज्य निर्भरनिःसीमपरमानन्दधाराप्यायितान्तःकरणं निस्पन्दसर्वावयवं मूर्छितप्रायं निजसिंहासनसविधे समुपवेश्य समाश्वास्य च परिजनाहृतैः[2] पीयूषाधिकस्वादुभिरपूर्वफलमूलादिभिरमृतशिशिराधिकसुमधुरशीतलैश्च 'सतसङ्ग'-सरःसलिलैः सन्तर्पयामास ॥७३॥

असौ तु देव्या स्वयमुपनीतानि तानि[3] तान्यनास्वादितपूर्वाण्यास्वाद्य आसादितपरमतृप्तिरुत्थाय गत्वा बहिराचम्य पुनरपि देव्याः समीपमाजगाम ॥७४॥

ततश्च देव्याः पर्यङ्कसमीपोपकल्पिततल्पान्तरे तदनुरोधवशाद् विनयभरेणातीव संकुचितकलेवरो निषसाद ॥७५॥

तथा समासीनञ्च निजकरकमलेन लालयन्ती सप्रेमस्तिमितमधुराक्षरमुवाच महादेवी यथा—महाराज, मुक्तोऽसि, इदानीं दारुणेभ्यः संसारपाशेभ्यः। अनादिजनिकोटिभिरनुशीलितास्मि भवता। मम तु भवानतीव प्रेमपात्रम्। अयञ्च पीयूषपाण्डरद्युतिमनोहरो महारयो हयः तेनैतेन पवमानमपि न समानतया गणयामि किमुतैरावतमुच्चैःश्रवसं वा। इममतिदवीयांस[4]मसुलभममरसमाजस्यापि मदीयाश्रममनेनैवातिरंहसा सम्प्रापितोऽसि। नातः परं निमिषार्धमपि विना भवता स्थास्यामि। त्वमतः परं

1. लक्षणाधिकोत्तरविवर्धमान—इ। 2. परिजनाकृतैः :—प १।
3. 'तानि' नास्ति—ई। 4. इदमभिदवीयांस—इ।

मयैव सहारुह्य मम महाविमानमनेन हयोत्तमेन संयोज्य सुखं विचरिष्यसि। श्वस्तु भवन्तं श्रीवृन्दावनं दर्शयिष्यामि। त्वमिदानीमत्रैव तल्पे सुखस्वापमुररीकुरु। इत्याकर्ण्य सप्रणामाञ्जलिर्यथाज्ञापयति भगवतीति तच्चरणतलोपरचितशयने सुष्वाप ॥७६॥

अनन्तरञ्च पूर्वाशासम्भोगसंक्रान्तसिन्दूरकुङ्कुमलाक्षारसलोहितायमाने भगवत्याशारमणे, मानवशान्म्लानचन्द्रमण्डलमुखायाम्पश्चिमाशायां, प्रमुक्त[1]तारकानिकरव्याजकण्ठहारमुक्ताफलकलापखचितगगनाङ्गनायां, नीहारनीरबिन्दुनिवहव्याजतदस्रकणजालस्तिमिते च महीवलये, कलहंसकोकिलकलकण्ठकलकण्ठभाषितमिषतदीयरोदनध्वाननिकरैर्भरिते च रोदसीविवरे, बहिर्द्वारप्रकोष्ठावस्थितसाध्यसिद्धविद्याधरचारणगन्धर्वैरुद्गीयमानेषु च देवीस्तुतिपुरस्सरजयशब्दमिश्रितप्राभातिकमङ्गलेषु, मही[2]महेन्द्रः शयनादुत्थाय विहिततत्समयविधेयसपर्याविशेषः प्रणम्य च भगवत्यै विधाय चानन्तरकरणीयानि सहतुरङ्गमः 'सत्सङ्ग'सरःसमीपमाजगाम ॥७७॥

तत्र चादृष्टचरमहामनोहररूपावयवान, प्रकटविद्योतमानातिमहःसमूहानुमीयमानमहाप्रभावान, अवगाहनार्थमागतान् सुरासुरसिद्धविद्याधरकिन्नरगन्धर्वचारणान् समालोकयामास प्रणनाम तुष्टाव च मनसैव ॥७८॥

तैरपि सप्रेमादरस्मितमधुरभङ्गीभिः सभाज्यमानः, निभृतमात्मगोष्ठीषु संकीर्त्यमानकुलकर्म[3]कलापकौशलकीर्तिकर्तव्यविशेषः[4], कृतावगाहनसन्ध्यावन्दनतर्पणपरदैवतपरिपूजनः, उत्थाय पुनरप्यागत्य देवीसकाशं तामपि पुष्पाञ्जलिभिरभ्यर्च्य कृतप्रदक्षिणप्रणामस्तुष्टाव ॥७९॥

सन्तुष्टया च तया निर्भरम्परिरभ्यमाणस्तदाज्ञया विहितपर्याणन्तमेव तुरङ्गमं तस्या विमानराजे संयोज्य देदीप्यमानमतिरमणीयन्तमेव देव्या सह

---

1. प्रयुक्त—इ।
2. 'मही' नास्ति—इ।
3. 'कर्म' नास्ति—इ।
4. कर्तव्यावशेषः—प १।

समारुरोह। ततश्च वियति शङ्खमृदङ्गभेरीनिनादपुरस्सरं जयशब्दसम्बलितमङ्गलवचनानि शुश्राव ॥८०॥

निरन्तरनिपतितकुसुमासारमप्यालोकयामास ॥८१॥

ततश्च तुरगराजरयजनितमहावेगेन विमानराजेन व्रजन्तमवनीपतिं तत्तद्देशप्रदेशान् सविशेषान् विज्ञापयामास भगवती ॥८२॥

यथा—

राजन् गौडमहीमतीत्य पुरतः पश्याङ्गदेशो महान्
एषा चम्पकमालिनी च नगरी कर्णस्य यासीत् पुरा।
देशोऽयं मगधो विभाति पुरतो यस्मिन् गया गण्डकी
पुण्या चापि पुनःपुना विजयते भूलोकनिस्तारिणी ॥६६॥
क्षेत्रं हारिहरं वदन्ति कृतिनः श्रीगण्डकी-गङ्गयोः
सम्भेदं सुरसिद्धचारणगणैः संसेव्यमानं पुरः।
अस्यैवोत्तरतो विभाति मिथिला नात्यन्तदूरे स्थिता
यस्यां श्रीयुतरामचन्द्रमहिषी प्रादुर्बभूव स्वयम् ॥६७॥
शोणम्पश्य महानदं नरपते तीर्थं महापावनं
पादं विन्ध्यमहीधरस्य विततं वामे समालोकय।
धर्मध्वंसकरीं नदीञ्च पुरतस्तां कर्मनाशां बुधा
याम्पश्यन्ति महाधियः समदृशास्तीर्थं महापावनम् ॥६८॥
तीर्त्वैतां पुरतः प्रपञ्चविटपिप्रोद्दामघोराटवी-
मूलोन्मूलनकर्तरीञ्च नगरीं पश्यान्धकध्वंसिनः।
यां योगेन परेण यान्ति पदवीं कालेन संक्लेशिता-
स्तामेषा विदधाति जीवनभृतामन्त्यक्षणे हेलया ॥६९॥
पश्यैनं ध्वजमिन्दुमौलिनगरीलक्ष्मीकराम्भोरुहा-
कारं श्रीयुतबिन्दुमाधवमहाप्रासादमूर्ध्नि स्थितम्।
अस्यालोकनमात्रतो जिगमिषोर्वाराणसीमुत्सुकैः
प्रेमानन्दपरम्पराहितमहामूर्छा च संवीक्ष्यताम् ॥७०॥

श्रूयन्ताञ्च परितो वाराणसीमभिधावतां महाकवीनामनेकविधानि सुभाषितानि श्रवणीयानि । इति तत्तदाकर्णन[1] समुत्सुककर्णतया समुत्तस्थौ ॥८३॥ ततश्च—

भवोद्भूता सूते भवनिवहमेव प्रतिलवं
भवैकान्तप्रेमास्पदमपि भवध्वंसनकरी ।
अपूर्वा कापीयं चरमपरमानन्दपदवी
कदा भूयात् काशी मम नयनवर्त्मातिथिरपि ॥७१॥
अनिर्वाणं ज्योतिर्दधदपि च निर्वाणमनिशं
न कालप्रारम्भं दधदपि महाकालविभवम् ।
कदा काश्याख्यानं पुरमपि पुरारिप्रियतमं
चिदानन्दाकारं नयनपथवर्ति प्रभविता ॥७२॥
विधत्ते पाश्चात्यामतिरुचिरवेणीं लघयते
प्रभासप्रारम्भं हसितविलसत्पुष्करमुखा ।
विलासिश्रीकण्ठा रुचिरमणिकर्णाभरणभृत्
प्रियेवान्या शम्भोर्मयि भवतु काशी सकरुणा ॥७३॥
उदञ्चद्वेदान्तध्वनिमधुपझङ्कारसुमनाः
परानन्दोद्रेकप्रणवनवसन्मञ्जरियुता ।
चतुर्वर्गाभिख्यप्रबलफलसञ्चारचतुरा
लतेव श्रीकाशी विघटयतु सन्तापमखिलम् ॥७४॥
त्रिलोकालोकाय स्फुरदुरुमहातारकतया
सदा नक्षत्रेशद्युतिदलितघोरान्धतमसा ।
दधद्द्वन्द्वातीतस्फुरदुरुमहाचक्रसरसीं
निशेव श्रीकाशी कवलयतु सन्तापमखिलम् ॥७५॥
विराजन्त्यब्जेशद्युतिदलितदावानलरुचिः
स्फुरत्केदारश्रीज्र्वलदतुलरत्नेश्वरमही ।

1. तत्तदाकर्णयन्—प १ ।

व्रजद्दुःखद्वन्द्वस्फुरदुरुमहाचक्रसरसी
दिवेव श्रीकाशी शमयतु तमः सर्वज्जगताम् ॥७६॥
अकुण्ठं वैकुण्ठं परिहसति चारुद्युतिमिषा-
दपूर्वं पूर्वाद्रिं मलयमलयं यत् प्रतिदिनम्।
तदेतत् काश्याख्यं नगरममितानन्दसदनं
कदाऽहं द्रक्ष्यामि स्मरविजयिनः प्राणसदृशम् ॥७७॥
अनङ्गारिप्रेयस्यपि जनसमूहं विदधती
सदानङ्गं तस्मै किमपि कमनीयं ददद्पि।
पुरी काशी नेत्रभ्रमरनलिनी हन्त भविता
कदा भूयो दैवद्विपदलितबुद्धेः क्षणमपि ॥७८॥
लसद्दिव्याकाराः स्फुरदुरुगुणग्रामनिलयाः
समीहन्ते यस्मादिह विरतिमुद्दाममतयः।
गुणातीतं हीनाकृति किमपि गन्तुं पदमहो
न विद्मस्तत् काश्यां किमिह परमं वस्तु वसति ॥७९॥
जनुर्धारामित्रं मृतिमिह विहातुं कृतधियां
समूहः श्रीकाशीं श्रयति यदिमां कालभयतः।
महाकालो यत्र प्रथयति महामृत्युपदवीं
पुनर्भूविश्रान्त्यै तदियमतिचित्रैकमहिमा ॥८०॥
कदाऽहं मध्याह्नद्युमणिकिरणोद्दीपितशिराः
प्लुतः स्वेदाम्भोभिः सरणिसरणव्यग्रचरणः।
कियद्दूरे काशी पथिकमनुजानास्यनुपदं
वदन् भूयो भूयः श्रममपि विनेष्यामि निखिलम् ॥८१॥
श्रान्तः पान्थजनैर्दृगङ्गुलिपरिक्षेपैः पुरः प्रेक्षितां
काशीं सौधकदम्बचुम्बितनभोलक्ष्मीमुखाम्भोरुहाम्।

---

1. सति—इ।

वीक्ष्योद्यत्पुलकालिपीवरतनुः प्रेमास्रधाराप्लुतो
भूयासं सहगामिनिर्भरपरीरम्भामृतैर्निर्वृतः ॥८२॥*

श्रीवाराणसि विश्वनाथनगरि श्रीनाथभक्तिप्रदे
श्रीकण्ठातिमनोविनोदजननि श्रेयःश्रियां धारिणि ।
पञ्चक्रोशि करोषि पञ्चवदनं पञ्चत्वमात्रादहं
जल्पन्नेव कदा प्रणामनिवहैर्यास्यामि हास्यानिलः (?)॥८३॥

मदुद्भवदिनावधिप्रथितरोषमभ्युद्यतं
प्रचण्डमपि पण्डय प्रवरदण्डमद्यान्तक ।
महादुरितसङ्ख्यया त्वमपि चित्रगुप्तोत्कवां
पुरी नयनगोचरीभवति मेऽद्य वाराणसी ॥८४॥

इत्यादीनि प्रेमार्द्रहृदयः शुश्राव ॥८४॥

ततो विमानादवतीर्य राजन्, द्विजराजशेखरराजधानीं वन्दस्व अवगाहस्व च श्रीमणिकर्णिकोत्तरवाहिनीसम्भेदे ॥८५॥

धन्यैषोत्तरवाहिनी विजयते स्वर्वाहिनी यन्महा-
माहात्म्यं कथयन्ति दैत्यरिपवो मन्दाकिनीरोधसि ।
सैषा श्रीमणिकर्णिका सुरधुनी यत्सङ्गमाकाङ्क्षया
तेपे दुश्चरमुग्रमद्भुततपो मन्वन्तराणां शतम् ॥८५॥

इति देव्याज्ञया सहैव तया विहितवाराणसीकृत्यकलापो देव्या पूर्वमलंकृतं विमानमारुरोह ॥८६॥

ततश्च पुनरपि देवी प्राह ॥८७॥—

राजन् पश्य पुरः कलिन्दतनयास्वर्वाहिनीसङ्गजं
तीर्थं गुप्तसरस्वतीव्यतिकरं त्रैलोक्यनिस्तारणम् ।
सम्प्राप्ते मकरं निदाघकिरणे ब्रह्मेशनारायणा
अत्राऽऽयान्त्यरुणोदये प्रतिदिनं स्नातुं समस्तामरैः ॥८६॥

---

* 'इ' 'प-१' इति सङ्केतितयोरुभयोरेवाऽऽदर्शपुस्तकयोः द्वाषष्टितमश्लोकात् परतः श्लोकाङ्कन्यासभ्रमो दृश्यते, विशेषस्तु भूमिकायां द्रष्टव्यः । सम्० ।

इति। तत्रापि विमानादवतीर्य विहिततत्तीर्थकृत्यकलापः पुनरपि देव्या सह विमानमारुरोह ॥८८॥

ततश्च पुनरपि सुविस्मयप्रेमार्द्रहृदया सपुलकाश्रमङ्गुल्या दर्शयन्ती देवी प्राह ॥८६॥

प्राहुस्तारकमद्वितीयमहिम ब्रह्मेति मन्त्रं विभो-
र्यस्येशोऽपि विधाय[1] साधनचयं मन्वन्तरैर्भूरिभिः।
सिद्धिम्प्राप परां तदेव वितरन् काश्यां मुमूर्षोः श्रुतौ
निर्वाणं विदधाति योगनिवहैर्दुष्प्रापमत्यद्भुतम् ॥८७॥

तस्यैषा नगरी विभाति सरयूतीरे जगत्पावनी
राजन्नुत्तरतो विलोकय विभोः श्रीतारकब्रह्मणः।
श्रीमद्भास्करवंशभूषणमहाराजस्य दूर्वादल-
श्यामोद्दामकलेवरस्य करुणासिन्धो रघूणाम्पतेः।८८॥

राजा तु तदाकर्ण्य समुज्जृम्भमाणमहाकुतूहलतरलमानसः सप्रणामाञ्जलि[2]स्तस्मिन् विमान एवोत्तिष्ठन् विलोकयामास ॥६०॥

ततश्च महाजवतया विमानराज्ञो[3] नानाजनपदानतीत्य सुदूरमनुससार ॥६१॥

ततश्च व्रजभुवनतमालतरुस्तोमसमेधमानमहामहीरुहव्यूहघनगहनाकारदुर्वारमहान्धकारावहेलनकुपित इव लोहितायमाने हेलिनि, निजगुरुगुरुकोपोपशमनानुगमनाय कलिन्ददुहित्रेवाम्बरतलमभिधावितेषु निजतरङ्गनिकरेषु तिमिरपटलेषु, निजानुग्राहकनाथं दिननाथं तथाविधमवस्थान्तरमासादयन्तमवलोक्य समुत्पन्ननिर्वेदखेदतया विहाय सहचरीः प्रव्रजत्स्विव चक्रवाकनिकरेषु, प्रोषितपतिकतया मुद्रितपद्ममुखास्विव पद्मिनीषु, समीरसञ्चारनिपतितकुसुमासारतया शाखाविवरनिकेतनविविधविहङ्गमसङ्कूजिततया गलित-

---

1. विधान—प १। 2. सप्रणामाङ्गुलि—प १

3. विमानराजस्य—प १।

बन्धननिबन्धननिपतत्परिणतफलजालतया च सायन्तनसपर्यापर्यायम्पर्याचरत्स्विव द्रुमनिवहेषु, पशुपशिशुजालकाल्यमानानां गवां धवलिमधारया धवलीक्रियमाणधरामण्डलया विडम्ब्यमानेष्विव सगरसन्तानसन्त्राणानुकम्पावर्धितरंहस्तरङ्गतरलेषु भागीरथीस्रोतोनिकरेषु, पश्चिमाशाभिमुखमभिधावन्तीनाञ्च गवां हम्बारवैराहूयमान इव तत्खुरजनितरजःपुञ्जस्य पूर्वाशाभिमुखस्य सन्ध्यारागारुणितस्य व्याजेन तत्क्षणमुदयाचलशिखरप्रस्थाप्यमानकरनिकर इव दिवाकरे, हंसयानहरिहरिणाङ्कतरणिविराजमानासु सुरनगरसभास्विव कालिन्दीतीरभूमिषु, कमलकाननमपहाय तटतरुकुसुमसञ्चयमभि[1] गोपालजालविरचितसायन्तनानलबहलधूमपटलविजिगीषयेव धावत्सु भ्रमरसमाजेषु, तदुभयविजयस्पर्धया वर्धमानास्विव घनगहनमहीमहाश्यामिकासु, प्रलयविशेषप्लवमानैः कालिन्दीपयःपूरैरिव प्लावितेषु रोदसीविवरेषु, अतितरविजृम्भमाणकैरवकाननसुविमलपरिमलगरिमलङ्घनाय विहायसमुत्पतितेष्विव रजनिगन्धाकुसुमगन्धसन्दोहेषु, दीप्यमानास्विव वनदेवताभवनदीपावलीषु स्वल्पाल्पसमुन्मीलदमलदलासु चम्पककुसुमराजिषु, चिरविरहज्वरजर्जरनिर्जरराजहरिदतिकोपकलितचरणप्रहरणलग्नलाक्षारस - लेपलोहितायमाने च हरिणलाञ्छने, तारकानिकरव्यतिकरविराजमानगगनाङ्गनानुचिकीर्षयेव प्रकटितप्रोन्मीलदनेकविधविपुलकुसुमसमाजे, व्रजभुवनमण्डनायमानमहाकानने विमानादवतीर्य साह स्म—राजन्, सेयमशेषनिगमनिगर्व(?)निवहानिर्वचनीयमहामहिमसमूहमहनीयतया मही परममोक्षमुख्योपायनिकायसप्तकमूर्धन्यभूतमथुरामण्डलमण्डनायमानापि परमनिर्वृतिनिर्वाहण[2] परमपुण्यकेतनद्वादशारण्यवरेण्यवृन्दारण्यमयी ॥६२॥

यत्र श्रीवृषभानुभानु[3]तनयाप्रोद्दामलीलालसत्-
कल्लोलैस्तरलीकृतो विहरति त्रैलोक्यचूडामणिः ।

---

1. मिति—इ ।
2. 'परम' 'निर्वाहण' नास्ति—इ ।
3. 'भानु' नास्ति—इ ।

निर्मज्ज्येव रसार्णवेषु निभृतं नित्यं तपत्युच्चकै
राधावल्लभनाम तत्फलमपि प्राप्तः किमप्यर्थयन् ॥८६॥ (इति)

ततश्च श्रीवृन्दावनपरमशोभातिशयसमवलोकनजनितां गलिताञ्जनपुञ्ज[1]-श्यामलितां त्रैलोक्यलक्ष्म्याः प्रेमास्रधारामिव, तत्तदवान्तरभुवनविहरण-चतुरकिशोरशिरोमणिमयशरव्यसञ्चार्यमाणां श्रीमद्वृषभानुतनूजाकटाक्षपर-म्परामिव, व्रजभुवनपरमपरिमलपटलानुसारनिपतितां मन्दाकिनीकमल-काननमन्दारवनचरभ्रमरधोरणीमिव, सुमधुरमुरलीनिनादश्रवणद्रवितनिप-तितां महेन्द्रपुरमण्डलमहेन्द्रमणिमण्डलीमिव, अतितरचतुरमनोहरमुरहर-वचनामृतनिर्भरधारानिर्वाप्यमाणकिञ्चित्प्रणयापरा[2]धैधितप्रियतमाकोपदहन-महाधूमलेखामिव, [3]श्रीमत्किशोरकिशोरीमुखमण्डलस्मितकरचरणनखर-किरणलहरीभिर्निःशेषनिर्मूलनमात्मनो विशङ्क्य प्रणतिनिपतितां शरणमुपेयुषीं चतुर्दशभुवनान्धकारपटलीमिव[3] निरन्तरविजृम्भमाणमहाविहाररसमयपर-ब्रह्मानन्दसन्दोहसाक्षात्करणविगलितनिखिलकरणान्तःकरणतया निःसहनिप-तिततनूलतायाश्चतुर्दशभुवनाधिदेवतायाः स्खलितनिपतितां कवरीमिव, क्रीडा-विनोदनाय महेन्द्रेण सम्प्रेषितां मन्दाकिनीमहानीलोत्पलगहनपरम्परामिव, श्रीराधावयवपरमसौन्दर्यलहरीपरमपरिचयातिशयसमुचितप्रेमविशेषद्रवित-नन्द[4]नन्दनकलेवरललामलावण्यधारामिव, श्रीराधामाधवचरणसरोजराज-सभाजनाय पातालतलनिलयसपरिवारवैरोचनिकरनिकरसमुद्धूयमानां मेचक-चामरपरम्परामिव, विकचसरोजकैरवरक्तसन्ध्यकसौगन्धिकमुखकुसुमगन्ध-सन्दोहसञ्जनिताद्भुतसौरभसम्भारतया नागलोकलोकोपरचितां बहलकालागुरु-धूमलेखामिव, निखिलभुवनवनदेवताभिरुपचितां[5] श्रीवृन्दावनवसुन्धरायाः प्रसाधनदिव्याञ्जनपुञ्जमञ्जुलसारङ्गमदमयमहापत्रलेखामिव, सुविकचकुसुम-

---

1. 'पुञ्ज' नास्ति—इ। 2. परावेधित—इ।
3—3. 'श्रीमत्'-इत्यारभ्य 'पटलीमिव' इत्यन्तं नास्ति—इ।
4. 'नन्द' नास्ति—इ। 5. रुपरचितां—इ।

कोकनदहल्लककल्हारसहस्रदलकमलतया समुदितविविधताराताराँ[1]पतिमण्डलाम्प्रणतिनिपतितां नभःस्थलीमिव, कविनिवहोपवर्ण्यमानमात्मना(त्मनः?) श्रीराधाकेशपाशकेशवकायसादृश्यमत्यन्तविसदृशमित्यपराधवाधितमात्मानं मन्यमानाम्प्रणतिनिपतितां महामेघमण्डलीमिव, प्रलम्बमानप्रलम्बदानवनिधनावसरसमेधमानमहाकलेवरस्य नीलाम्बरस्य स्खलितनिपतिताम्बरलक्ष्मीमिव, निराकृतपुष्करप्रभावामपि पुष्कराक्रान्तां, पावनसलिलामप्युशुचिजलां, प्रबलवाहिनीमपि भङ्गरलाम्, आप्यायिताश्वासितजगतीमपि कालरूपां, कृतान्तसोदरामपि पातकभयध्वंसिनीं, चण्डांशुसम्भवामपि सुशीतलां, कृष्णामपि विशदां, दृश्यमानाधोभुवनामपि गम्भीरां, सत्त्वबहुलामपि तमोमयीमिव दृश्यमानां, सगरसन्ततिपरमनिर्वृतिहेतुभूतामपि न भीष्मजननीम्, अश्रान्तरासरसश्रान्तश्रीराधामाधवश्रमशीकरनिकरव्यतिकरविवर्धमाननीरपूरां, निरन्तरनिर्भर-निपतद्-गोवर्धनशैलेन्द्रनिर्झर-नीरधारासारघनझात्काररवक्षुभितमीनमकरशिशुमारकुम्भीरचक्रान्दोलितगम्भीरनीरपूरां, तरलमहातरङ्गमालाचुम्बिताम्बरविवराम्, अतिगम्भीरजलां कालिन्दीन्ददर्श ॥८९॥

सम्भूता दिननायकाद्भगवतस्त्रैलोक्यचूडामणे
रासश्रान्त्यपनोदिनी मुररिपोः श्रीराधिकाया अपि ।
तत्तत्क्रीडनकुञ्जपुञ्जरुचिरश्रीतीरभूमण्डला
सेयं श्रीयमुना पुनाति जगतीं तीर्थौघचूडामणिः ॥९०॥

अपि च—

पीतान्यञ्जलिभिः स्वयम्भगवता रामेण सञ्चारण-
श्रान्तेनापि गवां पयांसि मधुराण्यत्यर्थशीतान्यपि ।
यस्याः सङ्गवशात् प्रयागमतनोत्तीर्थाधिराजं पुरा
देवानान्तटिनी विभाति यमुना सेयं जगत्पावनी ॥९१॥
स्वनीरकृतमज्जनप्रचुरगोपसीमन्तिनी-
तनूततितडिल्लताप्रचयचारुसञ्चारिणी ।

1. 'तारा' नास्ति—इ ।

धरावलयलम्बिनी किमु नवीनकादम्बिनी
कलिन्दगिरिनन्दिनी पतितपावनी पातु नः ॥६२॥
प्रतीरतरुमूलभूनिलयराधिकामाधव-
स्फुरच्चरणलाञ्छनप्रचुरमाधुरीचुम्बिनी ।
व्रजक्षितिविहारिणी त्रिविधतापसंहारिणी
कलिन्दगिरिनन्दिनी पतितपावनी पातु नः ॥६३॥
महेन्द्रमणिमण्डलीकिरणधोरणी किं स्फुर-
न्महामरकतस्थली किमथ नीलपद्माटवी ।
नवाञ्जनमहीधरद्रवविडम्बिनी सर्वदा
कलिन्दगिरिनन्दिनी पतितपावनी पातु नः ॥६४॥
वृषारिवृषभानुजाचरणचारिचन्द्रावली-
मयूखपरिरम्भिणी व्रजसुधारसास्वादिनी ।
स्मरद्रुमविनाशिनी[1] रसपयोधिसंवर्धिनी
कलिन्दगिरिनन्दिनी पतितपावनी पातु नः ॥६५॥
महाविषयवासनाविषमनागपाशावली-
कठोरतरबन्धनव्यथितजीवनिस्तारिणी ।
तरङ्गतरलीकृताम्बुजवनी मनोहारिणी
कलिन्दगिरिनन्दिनी पतितपावनी पातु नः ॥६६॥

इति तुष्टाव च । ततो विमानादवतीर्य स्वयमवगाह्य राजानमप्याज्ञापयामास । राजा तु यथाज्ञापयति भगवतीति सप्रणामादरमवतीर्य वगाह्य विहितसायन्तनकृत्यकलापः कमपि परमानन्दमभिनवमनुबभूव । पुनरपि तथैव स्वान्तप्रसादभूमौ दृष्टचरं सुकुमारं कुमारं रथमारूढं बहुभिर्बाधितपूर्वं सम्प्रति विगलितजरतीगृहीतपाशद्वयमवशिष्टतदालम्बितशीर्णप्रायैकसितपाशं रथस्थमप्यस्पृष्टरथमिव समुन्मज्जन्तं ददर्श ॥६७॥

1. 'विलासिनी'—प १ ।

क्षणेन च तत्सर्वं तिरोबभूव। राजा तु जिज्ञासुरपि तद्विशेषवृत्तान्तं सहसा तत्सर्वमेव विसस्मार। ततश्च दूरत एव केनचिदधीयमानां कामपि स्तुतिगाथां शुश्राव ॥९५॥

यथा—

सान्द्रानन्दभरातिमन्थरतरैरिन्द्रादिवृन्दारकै-
रम्भोजासनशङ्करप्रभृतिभिर्यश्चिन्त्यते सन्ततम्।
जीयाद्विश्वशरण्यचारुचरणद्वन्द्वारविन्दद्वयो
वृन्दारण्यवरेण्यसागरविधुर्गोविन्ददेवप्रभुः ॥९७॥

तालीतालतमालजालरुचिरे शालव्रजालंकृते
गुञ्जन्मञ्जुवलिपुञ्जकुञ्जभवने वृन्दावने सम्प्रति।
यः संसारयते पुराणचरितं स्वीयं पुराणोदितं
भक्तानां जयति त्रिलोकतिलको गोविन्ददेवप्रभुः ॥९८॥

यद्वेदान्तनितान्तसूक्ष्मविलसत्सिद्धान्तसन्तानकै-
र्मृग्येतापि यमीन्द्रमानसचयै रात्रिन्दिवं यत्नतः।
तद्रूपं किमपीह लोचनपथं दीर्घानुकम्पावशा-
न्निन्ये स्थूलदृशामसौ विजयते गोविन्ददेवप्रभुः ॥९९॥

यः श्रीमद्वृषभानुजान्तरचरः प्रेमाम्बुधेश्चन्द्रमा
नित्यं यः[1] किल भानुजातटमहारत्नावतंसाकृतिः।
यश्चन्द्रावलिसान्द्रसन्ततमहामानान्धकारोत्कर-
ध्वंसी भानुरसौ व्रजे विजयते गोविन्ददेवप्रभुः ॥१००॥

राजा तु सादरं प्रेमस्तिमितमाकर्ण्य सगद्गदं भगवन्तं गोविन्ददेवं प्रणनाम। इदमचिन्तयच्च ॥९६॥

अहो!

मन्येऽगण्यसुपुण्यजन्यमहिमा धन्यो वरेण्यः सतां
यः स्वान्तेऽपि सकृत् करोति सुकृती यस्यार्चनं भक्तितः।

1. 'यः' नास्ति—इ।

कालिन्दीसलिलावगाहनवशात् पूतात्मनां तत्पद-
द्वन्द्वाराधनकर्मणां[1] सुकृतिनां किं वाऽपरं ब्रूमहे ॥१०१॥
अहो वृन्दारण्यप्रभवनवकुन्दादिकुसुमै-
रमन्दैर्वासन्तीवकुलकुमुदेन्दीवरचयैः ।
समाराध्य श्रीमद्व्रजभुवनरत्नाकरविधुं
कृतार्थानां ब्रूमः कमिह महिमानं कृतधियाम् ॥१०२॥

ततो निखिलदेवर्षिब्रह्मर्षिदैवतदानवादिभिः प्रभासपुष्करमुखैश्च मूर्तिमद्भिर्दशकोटिभिरन्तरीक्षक्षौणिस्वर्लोकनिकेतनैर्महातीर्थैर्विरचिताञ्जलिभिः सप्रणामैर्दूरत एव संस्तूयमानमतिमहनीयमहामहिममहःपुञ्जमयमिव, निखिलपावनपदार्थसार्थसारमयमिव, पुण्यद्रुमनिर्यासमयमिव, पीयूषपाथोनिधिमन्थनजनितनवनीतरसमयमिव, श्रीराधामाधवप्रेमरसमाधुरीपूरपूरितमिव भूषितभूखण्डं श्रीराधाकुण्डं श्रीश्यामकुण्डञ्च ददर्श। ततो देव्याज्ञया तयैव सह प्रथमं श्रीराधाकुण्डे तदनु श्यामकुण्डे च ममज्ज ॥९७॥

तत्र च तमेव कुमारमुन्मज्जन्तं गलिताखिलबन्धनं ताञ्च वर्षीयसीं तान्यपि रात्रिञ्चरमिथुनानि सर्वमेव भस्मीभूतं तानपि षट्पुरुषानस्य दासीभूतान् निजमपि तुरङ्गमं तस्मिन् देव्या विमाने विलीयमानन्ददर्श ॥९८॥

ततो विस्मयविस्फारितलोचनो न किमपि ददर्श, केवलं भगवतीं तञ्च विमानराजं ददर्श ॥९९॥

ततश्च विस्मयानन्दभरमन्थरहृदयो विहिताञ्जलिसप्रणामं भगवतीं पप्रच्छ ॥१००॥

"भगवति, कोऽयमतिसुकुमारः कुमारो रथमारूढोऽतिमहत्या जरत्या सितासितलोहितैर्वज्रनिष्ठुरैस्त्रिभिरतिदीर्घरज्जुभिः संयमितग्रीवो दारुणेन च रात्रिञ्चरमिथुनषट्केनाग्रेसरीकृतवञ्चकपुरुषपञ्चकेनातिचञ्चलेनैकेन च सकलाज्ञापकेन सर्वाग्रे सञ्चारिणा बहुधा विप्रलोभ्य सम्पीड्यमानः शुद्धस्वभाव-

1. तदपरां—इ।

भूमौ दृष्टपूर्वविगलितप्रायासितलोहितरज्जुद्वयो रथान्तराले चास्पृष्टरथं किमपि कमनीयं कमलकाननं तेनाप्यनुपलभ्यमानं तदानीञ्च गन्धर्वनगराकारतया मदीयतद्गतसंस्कारेण सहैव तिरोबभूव। तञ्च पुनरपि कालिन्दीसलिलावगाहनानेहसि समुन्मज्जन्तं विशीर्णप्रायजरतीगृहीतसितैकपाशं विगलितासितलोहितपाशद्वयं रथारूढमप्यस्पृष्टरथमिव देदीप्यमानं दृष्टवानस्मि। तत् तर्हि तर्हि च समये जिज्ञासोस्तद्गतसंस्कारमादायैव तिरोबभूव। तञ्च पुनरप्यत्र कुण्डद्वये विहितावगाहनं विगलिताखिलबन्धनं ताञ्च जरतीं तान्यपि मिथुनानि भस्मीभूतं सर्वमपरांश्च कठोरपुरुषान् विनयावनता[1]नस्य दासीभूतान् पश्यतो मम स तुरङ्गमो दृश्यमान एव भगवत्या विमानराजे विलीनः, तच्च कुमारादिकमखिलमेव तिरोभूतम्। तदनुगृह्णात्वाज्ञापयतु भगवती कोऽयमतिसुकुमारः कुमारः, का वा सा जरती, के च ते सितासितलोहिताः पाशाः, कानि वा तानि कर्बुरमिथुनानि, के च ते वञ्चकाः पञ्चपुरुषाः, कश्च तेषामग्रेसरोऽतिचञ्चलः पुरुषः, किं निमित्तञ्चानेकैरेक एवासहायो बहुधा बाध्यमान आसीत् सुकुमारः कुमारः,[2] कश्चास्य रथो निरश्वो निःसारथिरनेकवातायनो बहुद्वारः, किञ्च तत्तेजोमयमाश्चर्यभूतमम्भोजकाननम्, कथञ्च मुक्तबन्धनः सः, कथमेतेऽपि भस्मतामपरे च दासतामायाताः, कथं वा मदीयस्तुरङ्गमो भगवत्या रथ एव दृश्यमानो विलीनः, स चापि कः स च कुमारः कथमन्तर्हितः, क्व वा वसतीदानीम्। यदि दासजनपरम्परापरिगणनीयतयाऽनुकम्पनीयोऽयं तदाज्ञापयतु सविशेषवृत्तविवरणेनेति पादयोः पपात ॥१०१॥

ततश्च प्रेमस्तिमितहृदया देवी प्रणतमवनीपतिमुत्थाप्य निर्भरमालिङ्ग्य प्रत्युवाच ॥१०२॥

यां मायां समुदीरयन्ति कृतिनोऽनाद्यामविद्यां तथा
सेयं घोरतराकृतिः सुमहती वर्षीयसी वीक्षिता।

---

1. विविनयावनतानस्य—प १। 2. 'कुमारः' नास्ति—इ

कामाद्याः षडमी रतिप्रभृतिभिः पञ्चापि बुद्धीन्द्रिया-
ण्येषामग्रसरं मनोऽतिचपलं क्ष्मापालचूडामणे ॥१०३॥
प्राहुः सत्त्वरजस्तमांस्यपि गुणांस्त्रीन दारुणान दुस्त्यजान
पाशान विद्धि तनूमथातनुमिमां जानीहि चित्रं रथम्।
तत्रानेकतनूजकूपकुहरैर्वातायनैरिन्द्रिय-
द्वारद्वारचयो विभाति नृपते पादौ रथाङ्गद्वयम् ॥१०४॥
बद्धन्तत्र विचेष्टमानमनिशं निष्कारणद्रोहिभि-
र्दुर्वारैरपि पीड्यमानमवशं तैरेव रात्रिन्दिवम् ।
स्वात्मानं समवैहि पङ्कजवनीं तत्रापि तेजोमयीं
षट्चक्राणि सुपक्वसाधनमहायोगीन्द्रगम्यान्यपि ॥१०५॥
चेतस्ते नृपते तुरङ्गमवरस्तेनासि सम्प्रापितः
सारङ्गेण च केनचिन्नरपते सत्सङ्गसंज्ञं सरः ।
तत्र च्छिन्नरजस्तमाः प्रकलयन सत्त्वैकपाशं पुनः
कालिन्दीसलिलावगाहगलितप्रायं स्वयं दृष्टवान् ॥१०६॥
श्रीराधाश्यामकुण्डान्तिकभवनसमासङ्गतस्तच्च पाशं
छिन्नं चेतस्तुरङ्गं मिलितमपि महासाधनाख्ये रथेऽस्मिन ।
आलोक्यावैहि सद्यो दलितकलिमलन्तीर्णसंसारसिन्धुं
जीवन्मुक्तं कृतार्थं स्वमपि नरपते नास्त्यतः प्रार्थनीयम् ॥१०७॥
भस्मीभूतमनोजमत्सरमदक्रोधादिदोषोत्करो
मुक्ताशेषदुरन्तबन्धनचयः स्वाज्ञाविधेयेन्द्रियः ।
जीवन्मुक्तिमुपागतोऽसि नृपते नातः परं कर्मणां
सामर्थ्यं त्वयि किञ्चिदङ्कुरलवप्रोद्भेदनेऽपि ध्रुवम् ॥१०८॥
वृन्दारण्यरहस्यमद्य परमं[1] लीलाविलासाद्भुतं
प्रत्यक्षीकुरु तुभ्यमक्षियुगलं दिव्यं ददान्यद्भुतम् ।

---

1. मद्यमपरं—इ ।

नैतत् स्थूलदृशां विलोचनपथातिथ्यं कदापि व्रजे-
दित्याभाष्य तदा ददौ नृपतये देवी सुदीप्तेक्षणे ॥१०६॥
आकीर्णं सुमनोमनोहरमहासन्तानसन्तानकैः
श्रीवृन्दावनरासमण्डलमहीहारायमाणं पुरः ।
रम्यन्तत्र ददर्श काननमतीवाश्चर्यरूपन्ततः ।
कूजत्कोकिलकेकिषट्पदकुलं क्ष्मापालचूडामणिः ॥११०॥

ततश्च पारिजातचन्दनहरिचन्दनसन्तानमन्दारकल्पद्रुमाणां रसाल-शालचम्पकाशोक-कदम्ब-काञ्चन-पुन्नागनाग-केशर-कुरुवक-वकुलवकर्किंशुक--जम्बू-जम्बीर-वरुण-करुण-पीतशालार्जुनाञ्जनतिलककेतककेतकीनामेकैकमय-वलयविभ्रमाणि विततानि महाकाननानि देव्या सह समालोक्यालोक्य सुदूरमनुससार ॥१०३॥

तदनु काञ्चन काञ्चनशाखिना-
न्ततिमतीवमनोहरपल्लवाम् ।
घनकलापकलापसमुज्ज्वलां
परभृतैर्निभृतैरभिघोषिताम् ॥१११॥
नवकदम्बकदम्बविराजितैः
सुमुकुलैर्वकुलैर्विरवाकुलैः ।
विपुलशालविशालमहीरुहां
घनवनीं नवनीरदसन्निभाम् ॥११२॥
विततमालतमालतमोमयीं
द्रुमनिशामनिशान्तमितप्रभाम् ।
विषमसायकसायकभीषिता
विविशुरुत्कदृशां सुदृशां[1] गणाः ॥११३॥

---

1. सदृशां—इ ।

अपि वतंसयति स्म विसारयन्
रुचिरमंशुकमंशुकविस्तरम् ।
नवघनाघनकाननकेशवं
हिमकरो मकरोज्ज्वलकुण्डलम् ॥११४॥
स[1]मधुनीतधुनीतटभूरुहां
सुमनसां निवहानिव हापयन् ।
मधुपसङ्गमसङ्गतमुच्चकैः
सुनिगमो निगमोपममारुतः ॥११५॥
अनिलचञ्चलशाखिदलान्तरै-
र्विगलितो बहुधा हिमदीधिते ।
अनुकरोति करोऽतिसमुच्छ्रयं
किमु रुचामुरुचामरजन्मनाम् ॥११६॥
स्फुटसरोजसरोजलशीकर-
व्यतिकरस्तिमितो वनमारुतः ।
व्यतनुतातनुतापितचेतसां
व्यजनतां जनताम्परिमुञ्चताम्[2] ॥११७॥
सहरिचन्दनचन्दनकाननं
स्फुरदनल्पसुकल्पमहीरुहम्[3] ।
विजितकेशरकेशरसौरभं
वनमलोकत लोकतमोऽपहम्[4] ॥११८॥
घनवनीनवनीलमहामणि-
प्रचुरसौधमहानगरान्तिके ।

---

1. समधुनीतमधुनी—इ । 2. परिमुच्यताम्—इ ।
3. महीरुहाम्—इ । 4. तपोपहम्—इ ।

तुहिनदीधितिदीधितिसञ्चयः
स्फुटमराजत राजतभित्तिवत् ॥११९॥
ततो मणिमयीं महोमतिमहीयसीं सर्वतो-
विसारिनवहाटकप्रवरवप्रसुप्रावृताम् ।
कदम्बतरुभिस्तथा बकुलभूरुहैर्भूषितां
महारजतविद्रुमस्फटिकसौधजालोज्ज्वलाम् ॥१२०॥
क्वचिन्नवनवोदितद्युमणिबिम्बकोटीशत-
प्रभाः क्वचन रोहिणीरमणबिम्बपुञ्जोपमाः ।
क्वचित् प्रबलदुर्दिनाद्भुतकुहूनिशीथद्विषः
क्वचित् प्रचुरचञ्चलाचटुलकान्तिकान्तार्चिषः ॥१२१॥
ददर्श नृपसत्तमस्तदनु चारुसौधावली-
र्द्विजैः श्रुतिमनोहरोच्चरणचारुभिः पूरिताः ।
ततो भरितरोदसीविवरमध्यभागम्पुरो
निराकृतदिनक्षपं कमपि तेजसां सञ्चयम् ॥१२२॥
एकन्तप्तसुचारुकाञ्चनमहासौदामनीसञ्चय-
च्छायञ्चापरमिन्द्रनीलजलदप्रायन्तदेतत् पुरः ।
तेजोद्वन्द्वमतीव राजतितरां दूरीकृतान्योदयं
शङ्के चाव्ययमद्वितीयममलं ब्रह्मेदमेव ध्रुवम् ॥१२३॥
इत्यानन्दपरम्परामनुभवन् प्रेमास्रधारामहा-
रोमाञ्चाञ्चितकाययष्टि निपुणं[1] संवीक्ष्य दिव्येक्षणः ।
कोटीन्दुद्युमणिद्युतीन् सुनिभृतान्[2] सत्कल्पवल्लीमयान्
कुञ्जानम्बरचुम्बिनो मणिमयप्रोद्दामवेदीभुवः ॥१२४॥
तेषामेकतमत्र मेरुशिखराकारं सुरक्ष्मारुहं
व्योमव्यापिनमत्र मण्डनचयानूर्ध्वोर्ध्वतः संस्थितान् ।

---

1. विपुलं—इ ।  2. स्तुतिभृतान्—प १ ।

एकैकत्र सविद्युदम्बुदमयीं मालां मनोहारिणीं
गौरश्यामलकोमलामलमहाकान्तीः समातन्वतीम् ॥१२५॥

तमालतरुमण्डली तरुणहेमवल्लीचयैः
किमिन्द्रमणिमण्डली नवहरिन्मणिश्रेणिभिः ।
नवीनघनमण्डली किमु तडिल्लतासञ्चयै-
रितिप्रचुरशङ्कया तरलितं मनो[1] भूपतेः ॥१२६॥

तस्योद्दामकिरीटमण्डनमहारत्नद्वयीमद्वयीं
गौरश्याममयूखपुञ्जखचितब्रह्माण्डभाण्डोदरीम् ।
एकीभूततनुं मिथो भुजलतासंयम्यमानोभय-
ग्रीवां रिङ्गदपाङ्गभङ्गिविशिखैः प्रोच्चैर्मिथो निघ्नतीम् ॥१२७॥

दीप्तां काञ्चन काञ्चनव्रततिकां तत्रापि पूर्णं विधो-
र्बिम्बं चारुफलं नवाम्बुदघटाकीर्णं लसद्विद्रुमम् ।
चञ्चच्चञ्चलखञ्जरीटयुगलं तत्रोल्लसत्ताण्डवं
भूपालः समलोकयत् किमिति च प्रोच्चैर्वितर्काकुलः ॥१२८॥

च्युतमिवाङ्कगतं शरणागतं
हरिणशावमसौ व्रजकानने ।
अनुसृतोऽद्य विहाय विहायसं
जयति पूर्णसुधाकरमण्डलः ॥१२९॥

किमथ मध्यमवेक्ष्य मृगाधिपं
समभिशङ्क्य तदङ्गकुरङ्गकः ।
इह ममज्ज सुधाकरमण्डले
स्फुटविशालविलोलविलोचनः ॥१३०॥

विहरणं बहुधा वहिरत्र किं
व्यतनुतामवहिश्च समीहितुम् ।

---

1. मत्वा—प १ ।

श्रुतिपथं निभृतं समुपाश्रितौ
विचरतो वरलोचनखञ्जनौ ॥१३१॥
अधृतमौर्वितयेव मुरद्विषः[1]
परिभवातिविजृम्भितगौरवम् ।
विजयते किमपीह मिषाद्भ्रुवो
धनुरनन्यजनेर्मणितोरणम् ॥१३२॥
श्रुतिमनोहरनिस्वनहेतुभिः
सुनिभृतैर्यदसौ समुपास्यते ।
द्विजगणैः सततं द्विजराजता
विजयते तदमुष्य सुनिश्चितम् ॥१३३॥
रससुधाम्बुनिधौ वदनाम्बुजे
स्मितमहोर्मिचयैस्तरलात्मनाम् ।
मकरकुण्डलिनामतिमज्जनं
किमतिचित्रमचिन्तयदित्यपि ॥१३४॥
स्मरविजित्वरमोहनमोहिनी-
तनुभृतोऽपि मनोऽतिविमोहनम् ।
किमपि रूपमिदं वृषभानुतः
समुदितं न गिराम्पथि वर्तते ॥१३५॥
हरिनखाङ्कुरकारणनिःसृत-
प्रचुरमौक्तिकवारणकुम्भकम् ।
इव सुमेरुतटं तदुरःश्रम-
प्रभवबिन्दुसुचारुपयोधरम् ॥२३६॥

मञ्जीराङ्गदहारकङ्कणमहाकेयूरकाञ्चीझनत्-
कारस्फूर्जथुगर्जितं श्रमपयःसम्पातसम्पातनम् ।

---

1. मुरद्विपः—इ ।

व्यामर्दत्रुटितोरुहारलतिकाविस्रंसिमुक्ताफल-
व्याजोद्यत्करकातिवर्षमभवच्चित्रं महादुर्दिनम् ॥१३७॥
श्रीराधाश्रवणावतंसनलिनघ्राणच्छलादाननं
तस्याश्चारुकपोलमूलसरणिं सञ्चारयत्यच्युते ।
शङ्के वारयितुं रुषातिपरुषा सुप्तोत्थिता प्रोच्चकै-
स्तीक्ष्णा द्वारचमूस्तनूरुहततिव्याजा समभ्राजत[1] ॥१३८॥
वीक्ष्यान्योन्यहृदन्तरे निजनिजच्छाये पराशङ्कया-
न्योन्यं व्याक्षिपतोः किमुत्थितमिथःकायप्रवेशेच्छयोः ।
अत्यर्थं परिरम्भदम्भसमरारम्भाय संवल्गतोः
श्रीराधासुरवैरिणोः स्मितसुधासारः सुखायास्तु वः ॥१३९॥
यां मूलप्रकृतिं वदन्ति निगमाः सर्वेश्वराधीश्वरी-
माद्यां शक्तिमुदीरयन्ति परमां विद्यां तथैवागमाः ।
साराणामपि सारतामुपगता सूक्ष्मातिसूक्ष्मात्मिका[2]
सेयं नन्दकिशोरजीवितमयी श्रीराधिका क्रीडति ॥१४०॥
लीलान्दोलनलोलमौलिविगलद्वेणीभरव्याजतः
किम्भाति प्रतिबिम्बिता हरितनोरालिङ्गिताया द्युतिः ।
किं वा श्रान्त्यपनोदनाय यमुना व्रीडावती पृष्ठतः
प्रेम्णाप्याययितुं समागतवती श्रीराधिकायाः स्वयम् ॥१४१॥

किञ्च—

समक्षं राधायाः पिबसि हरिवक्त्राम्बुजसुधां
सगर्वं राधेति स्फुटमभिदधाना मृदुमृदु ।
प्रियात्यर्थं तस्या अपि मुरलि यस्मादसि सखि
त्वमेवैका धन्या विहित बहुपुण्या त्रिजगति ॥१४२॥

1. समभ्राजते—इ । 2. सूक्ष्माम्बिका—इ ।

अपि च—

तव क्वाणे प्रोन्मीलति मुरलि निस्पन्दमखिलं
जगद्ध्यानारूढं स्थगितचकिताश्वो रविरपि ।
रवेः पुत्रीस्रोतो वहति विपरीतं पुनरसौ
द्रवद्ग्रावग्रामः परिणमति गोवर्धनगिरिः ॥१४३॥

इत्यादीनि च तत्र शुश्राव ॥१०४॥

ततश्च महीपतिः क्रमशोऽवलोकयामास विहरमाणौ राधामाधवौ । यथा—

क्वचित् सहजसुन्दरे नवनिकुञ्जसौधोदरे
विकाशिसुमनोमनोहरविचित्रतल्पान्तरे ।
मिथोऽतिपरिरम्भणामृतरसाब्धिमग्नान्तरौ
निमीलितविलोचनौ परमयोगभाजाविव ॥१४४॥

क्व चापि ललितादिभिः सहचरीगणैरावृतौ
मृदङ्गमुरजानकध्वनिभिरुल्लसत्ताण्डवौ ।
परस्परकराङ्गुलिग्रथितपाणिपङ्केरुहौ
स्फुरन्मृदुमृदुस्मितौ मधुरहारिगीतामृतौ ॥१४५॥

क्वचित् पणितसस्पृहस्मितसुधारसप्रोल्लसत्-
सुचुम्बपरिरम्भणप्रमुखभूरिकेलीरसौ ।
सखीसदसि सस्पृहौ जयपराजयाभ्यामुभौ
करोल्लसितपाशकौ निपुणमानसं दीव्यतः ॥१४६॥

क्वचित् प्रणयकोपितप्रियतमापदाम्भोरुह-
प्रपन्नमुरवैरिणो हितविधौ विशाखादिभिः ।
कृतस्तुतिसभाजनप्रणतिरीषदीषत्स्मितं
तनोति वृषभानुजा नयनकोणलीलालवम् ॥१४७॥

क्वचिद्विषमसायकप्रचुरसङ्गराडम्बर-
श्रमातिविनिमीलितेक्षणसुनिःसहाङ्गीं प्रियाम् ।

विलोक्य तनुते स्वयश्चरणचारुसंवाहनं
सुवीजयति चामरैरपि महापराधोपमः[1] ॥१४८॥
क चापि यमुनातटीनिभृतकुञ्जमध्यस्थले
तदीयलहरीचयप्रचुरशीकरैः शीतले।
मिथः कथयतोः कथाः सपरिरम्भयोः शृण्वतो-
रनादरवशादिव द्रुतमियाय दीर्घा निशाः ॥१४९॥
वेणीपूततनुश्च पुष्करमुखासङ्गीकृतद्वारको
दुष्पारश्च गभीरमेष गतवान् मायापुरं मानसम्।
काञ्चीस्पर्शनयोग्यतापि किमहो नात्रास्ति चन्द्रानने
व्यक्तं ब्रूहि विशत्वसौ वलिगृहानि[2]त्याह कृष्णः कचित् ॥१५०॥
कचिन्निकुञ्जमन्दिरे प्रसूनतल्पविस्तरे
महामणीन्द्रचत्वरे महेन्द्रसौधजित्वरे।
मिथो विमर्दनस्खलत्प्रसाधनादिसाधन[3]-
प्रवर्तमानमानसं सहासमाह माधवम् ॥१५१॥
क भूषणानि सन्ति मे क च द्वितीयमम्बरं
क केशपाशबन्धनं क वा कपोलचन्दनम्।
त्वया हृतानि तानि मे दुरन्तचौरचातुरीं
विहाय देहि सत्वरं विधेहि वेह चोत्तरम्[4] ॥१५२॥
सुविश्रुता हि ते पदोस्तुलादिकोटिशून्यता[5]
विहारहारिभूषणौ स्तनौ तवापि सुन्दरि।
अनङ्गदौ तु ते करौ समस्तलोकविश्रुतौ
पुरो द्वितीयमम्बरं समस्तलोकविस्तरम् ॥१५३॥
इदञ्जगाद सादरं तथा तदङ्गसङ्गतं
चकार चारुभूषणव्रजं व्रजेन्द्रनन्दनः।

---

1. पराध्वोपमः—इ। 2. वणि गृनि—ई। 3. राधन—इ।
4. सत्वरम्—इ। 5. प्रसिद्धमेव पादयोस्तुलेव नास्ति ते त्वये—प१।

क्वचिन्निमेषवर्जितप्रसारिताम्बुजेक्षणौ
परस्पराङ्गमाधुरीं निरीक्षताञ्च विस्मितौ ॥१५४॥
क्वचिच्च पुरुषायितां प्रियतमां वहन् वक्षसा
स्वयञ्च ललनाकृतिर्भवति वेपमानाकृतिः ।
न चालपति भीतवत् सशपथं निरस्यन्नमू-
ममूमुचदिवाकुलो निजमुखान्मुखं सुभ्रुवः ॥१५५॥
क्वचित् फणिवधूगणैर्निजफणामणीन्द्रोत्करैः
सतारककलानिधिद्युमणिवीतिहोत्रादिभिः ।
सभाजनपरायणैर्विहितचारुनीराजनौ
रराजतुरुदञ्चितस्मितमनोहरश्रीमुखौ ॥१५६॥
मयूरचमरीचयैर्मधुरवेणुनादाहृतैः
प्रसारिततरैर्मनोहरकलापसच्चामरैः ।
समेत्य परितः स्थितैः समभिवीज्यमानौ मुदा
ददर्श मनुजेश्वरः क्वचन मञ्जुकुञ्जोदरे ॥१५७॥
क्वचित्त्रिदशनायकोपवनदेवताभिः समं
समस्तवनदैवतैर्विविधपुष्पहारादिभिः ।
विभूषितकलेवरौ मलयभूधराधीश्वरी-
विनिर्मितविलेपनोत्तमविचित्रोज्ज्वलौ ॥१५८॥
क्वचित् पवनपुञ्जित प्रचुर सान्ध्यमेघान्तर-
स्फुरत्प्रचुरचञ्चलानवमहापयोदप्रभौ ।
जवाकुसुमकुङ्कुमारुणविकीर्णफल्गूत्करैः
समावृतकलेवरौ सह सखीभिरत्युन्मदौ ॥१५९॥*
परस्परजिगीषयोच्चरितचारुगीतध्वनि-
प्रचारकृ[1]तमूर्छितत्रिभुवनैर्मृगाक्षीगणैः ।

---

* इदं पद्यं नास्ति—इ ।　　1. प्रचय—इ ।

सुचित्रमयकृत्रिमैरिव समन्ततः संवृतौ
क्वचिद्भुवनमोहनप्रचुरभङ्गिभिर्भूषितौ ॥१६०॥
सुरसद्मजिति स्फुटपद्मनिभे
घनमञ्जुलवञ्जुलकुञ्जगृहे ।
वृषभानुसुताव्रजराजसुतौ
विधिशङ्करनिर्जरराजनुतौ ॥१६१॥
निगमागमवाङ्मयसारमयौ
भुवनाद्भुतमोहनभावचयौ ।
स्मितभाषितभूषितचारुमुखौ
वररासरसाद्भुतभूरिसुखौ ॥१६२॥
श्रीराधामुखबिम्बमम्बरमहाकासार[1]नीरोदरे
यद्भाति प्रतिबिम्बितं हिमकरं तन्मन्वते मानवाः ।
तत्र स्वेदभरद्रुताञ्जनचयच्छायाः कलङ्कायिता-
स्तत्रुट्यन्मणिहारमौक्तिकचयच्छाया ध्रुवन्तारकाः ॥१६३॥
मल्लीमालतिकारसालबकुलश्रीखण्डभूमीरुहां
वृन्दारण्यभुवां प्रसूनपटलीसौरभ्यसंमिश्रितम् ।
कालिन्दीकुमुदाटवीपरिमलं किम्भूरिभारं वहन्-
श्रान्तो मन्दमुपैति कुञ्जभवनं संमार्जयन् मारुतः ॥१६४॥
एतस्मिन् समये महारसमये मञ्जीरहाराङ्गद-
श्रेणीकङ्कणकाञ्चिकाघनझनत्कारे समुन्मीलति ।
निष्पन्दा जगती तथा स्थितवती राका सराकापति-
र्ब्रह्मानन्दविशेषनिर्वृतिमिवापन्ना महायोगिनी ॥१६५॥
निष्कूजद्द्विजमण्डली स्थितवती चित्रार्पितावस्थया
ध्यायन्तीव निमीलितेक्षणयुगा फुल्लत्तनूजावली ।

1. कार—इ ।

स्तब्धाङ्गा हरिणादयश्च करिणां यूथान्यथान्ये तथा
विश्वे विस्मयविस्मृतान्यविषया मग्नाः सुषुप्ताविव ॥१६६॥
तन्मञ्जीरयुगद्वयध्वनिगतं वैजात्यमत्यद्भुतं
सूक्ष्मं चिन्तयति स्म विस्मयवती मन्ये स्वयं भारती ।
प्रेमैके रसमाधुरीन्तदितरे लावण्यलक्ष्मीम्परे
केचित् सङ्गतसङ्गमङ्गलतिकाभङ्गीम्परे तुष्टुवुः ॥१६७॥
मन्दारप्रमुखप्रसूननिकरासारः समन्तादभू-
द्वयोम्नोऽनाहतदुन्दुभिध्वनिरथो दिक्चक्रमुल्लासयन् ।
गन्धर्वाः सुरसिद्धचारणगणा विद्याधराः किन्नरा
गायन्ति स्म तदावदातमहिमस्तोमन्तयोः प्रीतयोः ॥१६८॥

ततश्च देव्या स्वयमुपगम्य तेषु तेषु निभृतनिकुञ्जेषु गोवर्धनकन्दरेषु वंशीवटभूमिषु धीरसमीरसेतुबन्धसरसीतीरवननन्दभवनवृषभानुनिकेतन-कालियह्रदकूलेषूत्प्रेक्ष्योत्प्रेक्ष्य दर्शयामास ॥१०५॥

ततश्च—

यत्र यत्र नृपतिर्व्रजत्यसौ
प्रेमभक्तिवश[1]चारुमानसः ।
तत्र तत्र नवहेमनीरद-
च्छायकाययुगलं निरीक्षते ॥१६९॥

ततश्च तदानीन्तनमन्दमारुतोपनीतकुङ्कुमसिन्दूरसान्द्रलाक्षारसार्द्रश्रम-नीरशीकरनिकर[2]लोहितायामिव पुरन्दरककुभि, निर्भरपरमलीलासागर-तरल[3]कल्लोलान्दोलननिमग्नमूर्च्छितानान्तत्तद्रहस्यवार्ता इव मिथः समा-वेदयत्सु श्रीवृन्दावनविहङ्गराजेषु, श्रीमत्किशोरीश्वरीतत्कालीनचरण-शोभातिशयजनितपरिभवखेदवशान्निपीतगरलास्विव मित्रमृदुकरमण्डलैः

---

1. वल—इ । 2. निकर नास्ति—इ ।
3. तरण—प १ ।

प्रबोध्यमानासु निजबान्धवपुत्रीप्रेर्यमाणप्रचुरामृतशीकरनिक[1]रजोक्ष्यमानतया किञ्चिदुत्पन्नोन्मेषसमुल्लासितासु निर्यन्मधुकरव्याजेन निपीतमपि हालाहलमुद्वमन्तीष्विव पद्मिनीषु, विपक्षचक्रसमक्षतन्निशावसरविहरणरसिकश्रीमत्किशोरीश्वरीचरणनखरकिरणकणापरिभूतदयिततया खेदवशान्मुद्रितवदनास्विव कुमुद्वतीषु, सुचिरवसुन्धरातलनिखातावस्थितरजत[2]महाभाजनप्रकटकठोरमलिनिमातिशय[3] इव चिरतरसहवाससमासन्ननीललोहितललाटहुतवहशिखासमाजसञ्जनिताञ्जनपुञ्ज इव बहुशो दुरन्तदन्तुरविधुन्तुददन्ताभिघातजनितकिणचक्र इव समुज्जृम्भमाणे च[4] हरिणलाञ्छनलाञ्छने[5] श्रीमत्पौर्णमासीप्रमुखमुखोच्चार्यमाणेषु प्राभातिकमङ्गलगाथाप्रबन्धेषु, निकुञ्जभवनेभ्यो निःसरन्तीनाञ्च मणिमयमञ्जीरहारकङ्कणध्वानैः पराभूयमानेषु शब्दान्तरग्रहणसामर्थ्येषु, भगवती राज्ञा सह कालिन्दीतटमवततार ॥१०६॥

प्राह च राजानं—"राजन्, सम्प्रति जलस्थलसम्भवानि कुसुमानि स्वयमुपचिनु कोमलानि च मनोहरपल्लवानि विशेषतश्च तुलसीमालूरदलानि दूर्वाकिसलयान्यपि। ततश्चास्मिन्नरुणोदयसमये श्रीमदरुणसारथितनयायामवगाह्य अत्रैवैतदीयतरलतरङ्गशीकरनिकरचारुसञ्चारशीतले शाखितले विपुलशिलामयविशालवेदिकायामुपविश्य विहितावश्यककरणीयकलापः सुरासुरसिद्ध-विद्याधर-गन्धर्वगुह्यकमनुजभुजगकिन्नररजनीचरसेव्यमानचरण[6]-सरोरुहस्य भगवतः श्रीगोपीश्वरस्य पूजनप्रणमनस्तवनादिकं विधाय तदाज्ञाप्रसादमासाद्य सद्य एव मया सह स्वाभीष्टदैवतचरणसरोजसन्निधानमासादयिष्यसि" ॥१०७॥

राजा तु यथाज्ञापयति भगवतीति तानि तानि कुसुमानि पल्लवानि दूर्वादलानि च स्वयमाहृत्य कालिन्द्यामवगाह्य विरचितसन्ध्यावन्दनो विहितपूर्वपूर्वाङ्गो ध्यानावस्थो बभूव ॥१०८॥

1. निकर नास्ति—इ।
2. 'रजत' नास्ति—इ।
3. मणिमतिशय—इ।
4. 'च' नास्ति—इ।
5. लाञ्छने—नास्ति—इ।
6. चरण—नास्ति—प१।

यद्वैरोचनियज्ञखण्डनकरस्त्वं नो मखध्वंसका
माऽस्मान् मोहय भिन्नशब्दनिवहैरेकार्थसंवादिभिः ॥१७२॥
पादाम्भोजमृणालितामरधुनीदेदीप्यमानाकृति-
स्त्वं गङ्गाधरतान्तनोषि न किमु त्रैलोक्यचूडामणे ।
मध्याद्यन्तविहीन नाच्युततयानान्त्याजताभ्यां पुन-
स्त्वं विभ्राजसि मा विमोहय जनानेकार्थनानापदैः ॥१७३॥
यर्हि त्वं भगवान् पुमान् सहचरी पद्माथ वाग्देवता
द्वारि भ्राजति ते जयश्च विजयो देवेन्द्रवृन्दस्तुतः ।
त्वश्चेद्योषिदहो तदा भगवती सा भारती श्रीस्तथा
स्यादेवं विजया जया च विजयः सोऽयं जयस्तत्परः ॥१७४॥
दधानो व्यालोलं बहलहलमुद्दाममुषलं
भुजाभ्यां भीमाभ्यां रुचिरहिमचन्द्रद्युतिधरः ।
कदापीच्छावेगादपि विरचितैरुज्ज्वलभुजै-
स्त्रिशूलादीन् धत्से त्वमिह शितिकण्ठः सुरपते ॥१७५॥
नव्याम्भोधरसान्द्रसुन्दररुचे धत्से चतुर्भिर्भुजै-
र्मुण्डश्चाभयमप्यसिं वरमहो आलम्बिताशाम्बरम् ।
लीलामेत्य कदापि कामपि तडित् पीताम्बरः सुन्दरः
शङ्खञ्चक्रमथो गदां सरसिजं तैरेव धत्से भुजैः ॥१७६॥
कदापि मृतशोणितप्रवरघोरधाराधरां
दधासि दनुजाननप्रकरमालिकां कामपि ।
कदापि सुरभीकृतव्रजमहीमहीन्द्रोपमां
स्रजम्भजसि सुन्दरीमखिलसुन्दरीभिर्वृतः ॥१७७॥
कदापि वकधेनुकप्रवलके[1]शिकंसादिभिः
करोषि रणमद्भुतं नवपयोदकान्तिद्युते ।

---

1 कौशि—इ । कैशि—प १ ।

कदापि महिषासुरोद्धत निशुम्भशुम्भादिभिः
प्रसीद करुणाम्बुधे मयि कृपाकटाक्षं क्षिप ॥७८॥
मिथ्योद्यज्जगदैन्द्रजालिकमहाशैलूषयद्भूमिकां
त्वं नानेह तनोषि नाद्भुतमिदं त्रैलोक्यचूडामणे ।
निर्मायेदृशमज्ञमाकुलधियं मायागुणेनासकृद्-
बद्ध्वा यत् क्षिपसीह मोहजलधौ किं ते महत्त्वं ततः ॥१७९॥

इत्याकर्ण्य ससाधुवादं बहुधा प्रशशंस भगवती ॥११३॥ भूपालस्तु—

त्रिलोकीत्रातारं त्रिभुवनगुरुं त्र्यक्षरमयं
त्रिमूर्तिं त्रैगुण्यातिगपरमतत्त्वाकृतिमयम् ।
त्रयीतत्त्वं तूर्यं तुहिनगिरिपुत्रीप्रणयिनं
तमःश्यामग्रीवं त्रिपुरहरमीडे त्रिनयनम् ॥१८०॥

गिरीशं गौरीशं गणपतिगुरुं गीष्पतिनुतं[1]
गुरुं गीर्वाणानां गगनचरगीताद्भुतगुणम् ।
गुणातीतं गूढं गलितगरलं गानतरलं
गुहप्रेमाम्भोधिं गगनवसनं नौमि गिरिशम् ॥१८१॥

प्रपन्नार्तिध्वंसं परमपुरुषार्थामरतरुं
पिनाकं बिभ्राणं परमपुरुषं पञ्चवदनम् ।
पुरारातिं पञ्चाशुगशमनदृष्टिं पशुपतिं
प्रपञ्चक्षौणीजप्रथमपृथुबीजम्भज मनः ॥१८२॥

मुरारातेर्मित्रं मिहिरविधुनेत्रं मृतिहरं
मृगाङ्कालङ्कारं मरकतमणिश्यामलगलम् ।
मनोजन्मारातिं मधुरमृगमुद्राङ्कितकरं
महामायाकान्तं मुकुरमणिकान्ति स्मर मनः ॥१८३॥

---

1 तनुं—इ ।

पञ्चास्यं पशुपाशमोचनकरं पूर्णेन्दुकोटिप्रभं
पार्वत्या दयितं प्रपन्नजनताभीष्टप्रदं पावनम् ।
पूर्णानन्दमयं पुराणपुरुषं पञ्चाशुगध्वंसनं
प्रोन्मत्तं पितृकानानान्तरचरं प्रेतैः परीतं भजे ॥१८४॥

सिद्धीनां सुरशाखिनं[1] सुरपतिं स्वर्वाहिनीमौलिनं
सान्द्रानन्दमयं सुधाकरकलाचूडं श्मशानप्रियम् ।
शार्दूलाजिनवाससं स्मरहरं शेषाङ्गदं शाश्वतं
सर्वं सर्वमयं शिवं शिवमयं सेवे शिवावल्लभम् ॥१८५॥

भ्राम्यद्भैरवभैरवीभिरभितो भूतैः प्रभूतैर्वृतं
भूतेशं भृशभूतिभूषिततनुं भीमं भवध्वंसनम् ।
भक्तानामतिभानुभूभयहरं भालेक्षणं भव्यदं
भ्राजद्भास्कर-मेश्वरानलदृशं[2] भक्त्या भवं भावये ॥१८६॥

केलीकल्पितकालकूटकवलं कङ्कालकाकोदरा-
लङ्कारं करुणार्द्रकोमलमतिं कामद्विषं कामदम् ।
काशीशं कलिकालकल्मषहरं कुन्देन्दुकम्बुप्रभं
कान्ताक्रान्तकलेवरार्धमनघं कामेश्वरं भावये ॥१८७॥

वन्दे मन्दरकन्दरोदरचरं कैलासशैलेश्वरं
देवेशं करिपुण्डरीकविलसच्चर्माम्बरं सुन्दरम् ।
राजत्काञ्चनपुष्पयुग्मरचितश्रोत्रावतंसोज्ज्वलं
भक्ताभीष्टकरं वराभयकरं सर्वेश्वराधीश्वरम् ॥१८८॥

प्रपद्यन्ते ये त्वां प्रणवपदसारं सुरगुरुं
श्रुतीनां सर्वस्वं प्रणमदखिलार्थार्पणपणम् ।
न तेषां दुष्प्रापं क्वचिदपि कथञ्चित् किमपि च
प्रभुत्वं सर्वेषामुपरि विबुधानां विजयते ॥१८९॥

इत्यादीनि च व्याजहार ॥११४॥

---

1 सुरशाखिनां—इ । 2 दृशां—इ ।

तत्रैवावान्तरभुवनभूषायमाणां सरणिमतिमनोहरां सुनिभृतां समासाद्य देवी प्राह—महाराज! किमिदानीमत्र पश्यसि? राजा तु स प्रणामाञ्जलि प्रत्याह—॥११५॥

पश्याम्यत्र महासरोजमभितो देदीप्यमानं महा-
तेजोराशिमयञ्च योजनगणायामं किमप्यद्भुतम्।
हंसास्तत्र चरन्ति किन्तु निभृतश्चाभ्यस्तमौनव्रता-
श्चाञ्चल्यं मरुतोऽपि नात्र किमिदं चित्रं कृपाब्धे वद ॥१६०॥

ततश्च सुमधुरस्मितप्रसन्नवदना देवी प्राह—॥११६॥

मथुरामण्डलमेतद् भूपसहस्रारपङ्कजं विद्धि।
श्रीवृन्दावनभुवनं परमं तत्कर्णिकारञ्च ॥१६१॥
हंसास्तत्रमहान्तो भक्ताः संसारसागरोत्तीर्णाः।
एतत्तत्त्वमगम्यं योगिभिरपि जन्मकोटिभिः ॥१६२॥

इदानीन्तु ध्यानावधानसुधीरचेता विषयान्तरसञ्चारविधुरमतिः समागच्छेति करेणावलम्ब्य राजानम् प्रयान्ती पुरो[1] दर्शयामास ॥११७॥

राजन् पश्य महामहीरुहवनं विश्वैकविस्मापनं
नानारत्नविचित्रमूलभुवनं विद्योतमानं पुरः।
बालार्कद्विजराजमण्डलनिभ-श्रीमत्प्रसूनोत्करं
सान्द्राम्भोधरवृन्दमेदुरमहाशाखावितानोज्ज्वलम् ॥१६३॥
पश्येमाः सरसीरसीमललिताः प्रोत्फुल्लदिव्योत्पल-
श्रेणीः कूजदनन्तहंसनिवहाः स्वान्तप्रसादप्रदाः।
पश्योद्दामलताः प्रफुल्लकुसुमा रम्याणि हर्म्याणि च
श्रीचिन्तामणिमण्डपञ्च पुरतो यत् सर्गसीमायितम् ॥१६४॥
अस्याभ्यन्तरचारिणं सुरतरोर्मूले निसर्गोज्ज्वले
पश्यद्व्यष्टदलाम्बुजाकृतिमहासिंहासनं शोभनम्।

1. पुरे—प १।

अस्मिन पश्य किमप्युदारमहिमस्तोमं महोमण्डलं
नास्त्यत्रावसरो गिरां परिचितप्रायन्तव क्ष्मापते ॥१६५॥
श्रुत्वा काञ्चनचम्पकाचिररुचिस्तोमोरुकान्तिच्छटां
दिव्येन्दीवरनव्यनीरदघटानीलोत्पलश्यामलाम् ।
दीप्तिं काञ्चनकाञ्चनोज्ज्वलमहामाणिक्य-मुक्ता मया-
लङ्कारैः खचितान्तरे सुमधुरस्मेराननाम्भोरुहे ॥१६६॥
भूपालो निपुणं[1] निभाल्य निभृतं निर्णीय विस्फारित-
श्रीमन्नेत्रसरोरुहो विनिपतत्प्रेमास्रधाराशतः ।
देव्याः पादयुगे निपत्य बहुशः साष्टाङ्गपातानतैः
स्तुत्या गद्गदया मनोज्ञपदया तुष्टाव तुष्टान्तरः ॥१६७॥
दूरादेव निरीक्ष्य सुस्मितमुखौ श्रीप्रेमभक्ति महा-
देवीं श्रीवृषभानुजाम्बररिपू सन्दर्शितात्यादरौ ।
एह्येहीति मुहुः प्रसारितभुजद्वन्द्वौ समालिङ्गना-
रम्भाडम्बरराजमानपुलकौ प्रोच्चैः समाजुह्वतुः ॥१६८॥
आदावेव सखीगणैः सुनिभृतं विज्ञापितं श्राविता-
ख्यानं कीर्तितकीर्तिनिचयं क्ष्मापालचूडामणिम् ।
देव्याङ्गीकृतमित्यसीमपरमप्रेमार्द्रदृक्प्रेङ्खितैः
सान्द्रानन्दसुधारसैरिव समुत्क्षिप्तैः स्म[2] संसिच्यतः ॥१६९॥

ततश्च प्रेमभरमन्थराम् प्रणतान्तां समुत्थाप्य युगपदेव निर्भरमालिलिङ्गतुः, पप्रच्छतुश्च स्वागतमपि क्षेमोदन्तसन्तानं विनयमसृणं विहिताञ्जलि चेदमाहतुः—यथा देवि त्वदधीनोऽयं जनोऽनन्यपरायण इति सममेव ॥११८॥

देवी तु सप्रणामाञ्जलि प्राह—त्वदीयास्मीत्येतावन्मात्रमेव मम गौरवं, किन्तु मत्प्रेमपात्रं प्राणमिव द्वितीयं भूमिपति मेन मनुकम्पयतु । ततो दूरादेव भूमिनिपतितं भूमीपतिं सादरमाहुतम् पुनश्चरणान्तिके भूमण्डलमण्डनाय-

1. निपुणो—इ । 2. स्मयं सिञ्चितः—प १ ।

मानकलेवरं समवेव निजनिजभुजद्वन्द्वनिर्भरपरिपीडितञ्च विधाय स्वस्व-वदनाम्बुजताम्बूलरसधारामस्य प्रसारितेऽञ्जलिपुटे प्रददौ ॥११९॥

असौ तु कृतार्थोऽस्मीति प्रसादीकृताममृताधिकास्वादरमणीयां तां समास्वादयामास ॥१२०॥ ततश्च ( भगवती )—

राजंस्त्वं कृतकृत्य एव भवतो यद् यन्मनोऽभीप्सितं
सर्वं पाणितले विभावय निजे दीर्घायुरास्तां तव ।
शीघ्रं प्राप्नुहि सन्ततिं समुचितां कीर्तिं तथा सम्पदो
राज्यं सुस्थिरमस्तु यावदवनी वंशे त्वदीये ध्रुवम् ॥२००॥

तदिदानीं कृतकर्तव्योऽसि, साम्प्रतमनयाऽस्मदाराध्यया श्रीप्रेमभक्ति-महादेव्या महाविमानमारुह्य निजराजधानीं प्रति प्रतिष्ठमानः श्रीमदुत्तर-कोशलां ममापि राजधानीमवलोक्य भगवत्या समादिष्टेन पथा विशालां नगरीं प्रति सम्प्रति प्रतिष्ठस्व ( इत्युवाच ) ॥१२१॥

ततश्च विहितबहुप्रणतिनुतिसमाजं यथाज्ञापयतीति तदायतनसीमान-मतीत्य देव्या सह विमानमारुरोह ॥१२२॥

ततो देवी तत्तत्प्रदेशमवलोकयन्ती राजनमपि दर्शयन्ती प्राह यथा— ॥१२३॥

राजन्—वृन्दारण्यमिदं विलोकय ततो भाण्डीरसंज्ञन्ततः
ख्यातं तालवनञ्च काम्यकवनं गोवर्धनोऽयं गिरिः ।
अत्रोलूखलबन्धनं त्विह हता सा पूतना राक्षसी
चात्राघानि वकासुरोऽत्र च तृणावर्तोऽपि विध्वंसितः ॥२०१॥

अत्राघासुरघातनं पुनरितः सम्मोहनं ब्रह्मणः
पानञ्चात्र हुताशनस्य निहतो वत्सो वृषोऽत्रापि च ।
अत्राध्वंसि च धेनुकोऽत्र च हतो घोरः प्रलम्बासुरः
पश्यैतद् वनभोजनस्थलमिदं ख्यातं त्रिलोकीतले ॥२०२॥

राजन् पश्य पुरो विभाति महती श्रीरामकेलिस्थली
यस्या नास्ति तुला समस्तभुवनेष्वेषा कलिन्दात्मजा ।

अक्रूरोऽत्र रथे हलायुध-हरी संस्थाप्य नीरान्तरे
दृष्ट्वा तौ तत उत्थितोऽपि रथगौ तुष्टाव तुष्टान्तरः ॥२०३॥

एषा श्रीमथुरा मनोहरपुरी राजन् पुरा श्रीमता
शत्रुघ्नेन निवेशिता भगवता हत्वा महावैरिणम् ।
दुर्वारं लवणं महेश्वरमहाशूलायुधं तत्पुरः
श्रीशत्रुघ्ननिकेतनं निरुपमम् तीर्थं समालोकय ॥२०४॥

एतत् तत् परमं पदं ध्रुवमहाभागस्य यत्राभवत्
सान्निध्यं करुणाम्बुधेर्भगवतस्तस्मिन् प्रसादोऽपि च ।
एतन्मल्लनिपातनस्थलमितश्चापस्य भङ्गः पुरः
कंसध्वंसनमत्र मागधचमूविध्वंसनं भूपते ॥२०५॥

इति दर्शयन्ती विमानादवतीर्य राजन् वन्दस्व मधुपुरीमित्युवाच । राजा तु यथाज्ञापयति भगवतीति तथा कृत्वा पुनरपि देव्या सह विमानमारुरोह । ततः पुनरपि देवी प्राह ॥१२४॥

राजन् पश्य पुरी[1] विभाति महती हिण्डीरपिण्डोपम-
स्फूर्जत्पाण्डरसौधमण्डलमयी देदीप्यमानप्रभा ।
प्राकारैः परिखाभिरुज्ज्वलपरीणाहा पताकाकुलै-
रुड्डीनैः सरयूतटे विजयते श्रीमद्रघूनाम् पतेः ॥२०६॥

ततश्च पुरीसविधमागत्य विमानादवरुह्य सरयूमवगाह्य पुरीमध्यमागत्य तत्र च प्रसादमध्यविराजमानमहासिंहासनाधिष्ठितं श्रीसीतासौमित्रि-समीरसूनुभरतशत्रुघ्नमूर्तिसहितं चतुर्दशभुवनाधिपतिसमाजसम्पूज्यमानं श्रीराजराजेश्वरविग्रहं ददर्श, सन्दर्शनहर्षभरगद्गदमानसश्च तुष्टाव यथा— ॥१२५॥

पद्मायताक्षं कमलासनस्थं
श्यामं नवाम्भोधरकान्तिकान्तम् ।

---

1. पुरो—प १, इ ।

राजाधिराजं जगदेकनाथं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२०७॥

स्मेराननं पद्मपलाशनेत्रं
किरीटिनं चन्द्रपरार्द्धकान्तिम् ।
श्रीजानकीनाथमनाथनाथं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२०८॥

विभीषणाराधितपादपद्मं
सुग्रीवसौमित्रिनिषेविताङ्घ्रिम् ।
दशाननध्वान्तसहस्रभानुं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२०९॥

महाभुजं कुण्डलमण्डितास्यं
पीताम्बरं कोटिदिवाकराभम् ।
आजानुबाहुं विधुभानुनेत्रं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१०॥

श्रीपार्वतीशङ्करगीतकीर्तिं
ब्रह्मादिसंपूजितपादपद्मम् ।
यं तारकं ब्रह्म वदन्ति वेदा
स्तं रामचन्द्रं शरणं प्रपद्ये ॥२११॥

वेदान्तपाथोजलसाङ्ख्यसारं
सर्वागमाम्भोनिधिरत्नमेकम् ।
महानुभावं महिमाम्बुराशिं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१२॥

अपारसंसारसमुद्रसेतु-
भूताङ्घ्रिपङ्केरुहमप्रमेयम् ।
कारुण्यसिन्धुं कमनीयमूर्तिं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१३॥

प्रचण्डमार्तण्डसहस्रजित्वर-
प्रतापसन्तापितवैरिमण्डलम् ।
असङ्ख्यचन्द्रोज्ज्वलकीर्तिमण्डलं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१४॥

वेदान्तवेद्यं प्रणवैकगम्यं
योगैकसारं यमिनां शरण्यम् ।
अचिन्त्यमव्यक्तमनन्तमाद्यं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१५॥

यन्नाम काश्यां मणिकर्णिकायां
मुमूर्षतां श्रोत्रपुटे महेशः ।
ददाति मुक्तौ करुणाम्बुराशिं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१६॥

महामहोदारपराक्रमाढ्यं
मोहापहं भक्तमहोदयञ्च ।
महामहोल्लासविलाससिन्धुं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१७॥

साकेतपुर्यां वरहर्म्यमध्ये
महार्हसिंहासनराजमानम् ।
राजश्रियाऽलङ्कृतमेकवीरं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१८॥

संवीज्यमानं भरतेन भक्त्या
शत्रुघ्नसौमित्रिविभीषणाद्यैः ।
सच्चामरैः कुन्दतुषारशुभ्रैः
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२१९॥

हनूमताराधितपादपद्मं
संस्तूयमानं सनकादिभिश्च ।

वीणाकरैस्तुम्बुरुनारदाद्यैः
सङ्गीयमानं रघुनाथमीडे ॥२२०॥
संबृंहितैर्मत्तकरीन्द्रवृन्दैः
सहेषितैस्तुङ्गतुरङ्गसङ्घैः ।
सानन्दमुद्ग्रीवमुदीक्ष्यमाणं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२१॥
वैतालिकैः कुण्डलमण्डितास्यैः
समागधैर्नव्यसुचारुकाव्यैः ।
संस्तूयमानं रघुवंशकेतुं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२२॥
बद्धाञ्जलीनां नतकन्धराणां
दिगीश्वराणां निकरैः समन्तात् ।
प्रकीर्यमाणं कुसुमैरनेकैः
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२३॥
विद्याधरीणां सुरसुन्दरीणां
सकिन्नरीणां निकरैः पुरस्तात् ।
तौर्यत्रिकैः सम्परितोष्यमाणं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२४॥
वक्त्रैश्चतुर्भिश्चतुराननेन
पञ्चाननेनाननपञ्चकेन ।
षड्भिर्मुखैश्चैव षडाननेन
संस्तूयमानं रघुनाथमीडे ॥२२५॥
वेदैश्चतुर्भिर्धृतचारुदेहै-
र्मन्त्रैस्तथा विग्रहवद्भिरुच्चैः ।
संस्तूयमानं प्रणवेन सार्द्धं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२६॥

आद्यैर्मरीचिप्रमुखैर्मुनीन्द्रै-
रामीलिताक्षैर्गलदस्रधारैः ।
निरीक्ष्यमाणाङ्घ्रिसरोजयुग्मं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२७॥

कन्दर्पकोटिद्युतिदेहकान्ति-
सम्मोहिताशेषसुराङ्गनाभिः ।
निमेषहीनैर्नयनैरजस्रं
निरीक्ष्यमाणं रघुनाथमीडे ॥२२८॥

वृन्दारकैरम्बरतोऽवतीर्णै-
र्मन्दारसन्तानकदामवृन्दैः ।
सम्पूज्यमानाङ्घ्रिसरोजयुग्मं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२२९॥

इन्द्रादिवृन्दारकवन्द्यमान-
पादारविन्दं[1] जगदेकवन्द्यम् ।
आनन्दकन्दं निजलोकबन्धुं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३०॥

वीणादियन्त्रैर्मृदुमन्द्र[2]नादैः
क्षिप्तस्वरग्रामकमूर्च्छनाभिः ।
गन्धर्वराजैरुपगीयमानं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३१॥

मृदङ्गभेरीपटहप्रणादै-
रा'लोकयालोकय'तारशब्दैः ।
स्वस्तीति शब्दैर्जयशब्दमिश्रैः
सन्तोष्यमाणं रघुनाथमीडे ॥२३२॥

---

1. पदारविन्दं—इ । 2. मन्त्र—इ ।

दौवारिकावेदितभूमिनम्र-
सोपायनक्ष्मापतिवृन्दमुच्चैः ।
प्रसारितापाङ्गमवेक्ष[1]माणं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३३॥

स्मितावलोकेन च तर्पयन्त-
माश्वासयन्तं करपल्लवेन ।
प्रजाः प्रजानाथमुदारसत्त्वं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३४॥

कटाक्षपातेरितकोषनाथ-
विकीर्णनानाविधरत्नजातैः ।
कृतार्थयन्तं निखिलार्थिसार्थं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३५॥

श्रीलक्ष्मणावेदितराजकार्य-
माकर्णयन्तं चलकुण्डलेन ।
श्रोत्रेण सङ्कोचितलोचनान्तं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३६॥

अनन्त-कर्कोटकतक्षकाद्यैः
समुज्ज्वलद्भिः स्वफणामणीन्द्रैः ।
नीराज्यमानाङ्घ्रिसरोजयुग्मं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३७॥

वाण्या भवान्याऽम्बुधिकन्यया च
कन्याभिरन्याभिरमर्त्यजातैः ।
प्रदीपमालाभिरुदारभाभि-
र्नीराज्यमानं रघुनाथमाडे ॥२३८॥

---

1. अवेक्ष्यमाणं—प १ ।

किरीटरत्नद्युतिनिर्जिताभि-

स्ताराभिराराधनतत्पराभिः ।

नीराज्यमानं मणिरत्नदीपैः

श्रीरामचन्द्रं शरणं प्रपद्ये ॥२३९॥

मुखेन्दुबिम्बद्युतिनिर्जितेन

ताराधिराजेन नराधिराजम् ।

नीराज्यमानं निजचन्द्रिकाभिः

श्रीरामचन्द्रं शरणं प्रपद्ये ॥२४०॥

दिनप्रदीपेन कुलप्रदीपं

सहस्रसंख्यैः किरणप्रदीपैः ।

नीराज्यमानं निजयोरुकान्त्या

विराजमानं रघुनाथमीडे ॥२४१॥

पादाम्बुजद्वन्द्वसुचारुशोभा-

लोभाकुलैर्भृङ्गकुलैः समन्तात् ।

झाङ्कारघोषैः स्तुतपादपद्मं

श्रीरामचन्द्रं शरणं प्रपद्ये ॥२४२॥

मन्दाकिनीमानसराजहंसै-

रपूर्वपाथोजधियातिहृष्टैः ।

उपास्यमानाङ्घ्रिसरोजयुग्मं

श्रीरामचन्द्रं शरणं प्रपद्ये ॥२४३॥

अमन्दवैदग्ध्य[1]रसप्रवाह-

विलोलितापाङ्गतरङ्गितेन ।

श्रीजानकीवक्त्रमवेक्षमाणं

श्रीरामचन्द्रं शरणं प्रपद्ये ॥२४४॥

---

1. वैदग्ध—इ ।

प्रचण्डकोदण्डसकाण्डतूण-
विराजमानोभयपार्श्वदेशम् ।
सुरासुरैरर्चितपादपद्मं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥२४५॥

इति स्तुत्वा प्रणम्य देव्या सह विमानराजमारुरोह । ततश्च पुनरपि देवी प्राह ॥१२६॥

राजन् पश्य पुरो विभाति सरयू-स्वर्लोककल्लोलिनी-
सम्भेदोऽयमुदाहरन्ति कृतिनस्तीर्थं महापावनम् ।
क्षेत्रं [1]दुर्दुरसंज्ञितं पुनरिदं रम्यो महानाश्रमो
वाल्मीकेश्च्यवनस्य च त्रिपुरतो धन्या विदेहक्ष्मा ॥२४६॥

एतत्तज्जनकपुरं वदन्ति धीरा
यत्रासीज्जनकमहीपतिर्महात्मा ।
योगीन्द्रस्त्रिपुरनिसूदनेन चापं
विन्यस्तं स्वयमपि यत्र तोषितेन ॥२४७॥

तस्माद् वेगवशात् क्षणेन परमं श्रीगण्डकीगङ्गयोः
सम्भेदं समुपेत्य तत्र विहितस्नानादिकृत्योत्करः ।
प्रोत्तीर्यामरनिम्नगां जववशादासाद्य विद्योतितां
रम्यां फल्गुतटे गयामवतरन् क्ष्मापालचूडामणिः ॥२४८॥

दृष्ट्वा विष्णुपदं विधाय परमां पूजाञ्च तस्यादरात्
तत्तीर्थाखिलकृत्यमाचरितवान् देव्याज्ञया भक्तितः ।
आरुह्याथ विमानराजमतुलं दिव्यं मनोरंहसं
मन्दारे मधुसूदनं परमया भक्त्या नृपो दृष्टवान् ॥२४९॥

तं तुष्टाव ननाम देव्यनुमतस्तस्मात् प्रयातस्तरन्[2]
दूरादेव ददर्श काननवरं श्रीवैद्यनाथाश्रमम् ।

---

1. दर्दुर—इ । 2. स्त्वरन्—प १ ।

दृष्ट्वा तं परिपूज्य शान्तहृदयः श्रीवैद्यनाथं विभुं
नत्वारुह्य विमानमैक्षत ततो वक्रेश्वरं शङ्करम् ॥२५०॥
कृत्वा तत्परिपूजनस्तुतिमती[1] श्रीपञ्चकूटे गिरौ
दृष्ट्वा श्रीरघुनाथ-लक्ष्मणमहीपुत्री-समीरात्मजान् ।
भक्त्याऽपूजयदुत्तमस्तुतिशतैः सन्तोषयन् दण्डवन्-
नत्वा रामपदाङ्कमैक्षत मुदा तञ्चार्चयद् भक्तितः ॥२५१॥
आरुह्याथ विमानमुत्तमजवं शीघ्रं प्रयातोऽम्बिकां
दृष्ट्वाथो जगदम्बिकां भगवतीं सिद्धेश्वरीमार्चयत् ।
तस्मादेत्य नवाधिकाररुचिरां श्रीगुप्तिपल्लीपुरीं
श्रीवृन्दावनचन्द्रमैक्षत तथा श्रीरामचन्द्रं विभुम् ॥२५२॥
भक्त्या तौ परिपूज्य शीघ्रमगमच्छ्रीमत्त्रीवेणीतटं
स्नात्वा तत्र नृपो जगाम झटिति श्रीमद्विशालां पुरीम् ।
तत्रागत्य विमानराजसहिता राज्ञा समभ्यर्चिता
देवी प्राह महीपते तव हृदि स्थास्याम्यहं निश्चला ॥२५३॥
राजन्नस्तु सुदीर्घमायुरपि ते शीघ्रन्तथा सन्तति-
र्योग्या चाक्षयतामुपैतु परमा श्रीः कीर्तिरप्येधताम् ।
आधि-व्याधि-विपक्षपक्ष-विपदां निःशेषनिर्मूलनात्
प्राज्यं राज्यमतीवमोदतरलो नीत्या चिरम्पालय ॥२५४॥
किन्तु— श्रीवाणेश्वरसंज्ञितं द्विजवरं सर्वात्मनैवाश्रितं
प्रेम्णाप्याययय येन निर्वृतमनास्तिष्ठेत्तवैवान्तिके ।
एष प्रत्यहमेव ते वितनुते भूत्यै तथैवापदां
शान्त्यै स्वस्त्ययनं त्वदाश्रिततया ख्यातश्च भूमण्डले ॥२५५॥
अन्यप्रतिग्रहनिवृत्तिकरीञ्च वृत्तिं
ग्रामान्वितामुभयकीर्तिविवृद्धिहेतुम् ।

---

1. नतीरिति शुद्धः पाठो भवेत् ?—सम् ।

सेतुश्च खेदजलधेरयमिच्छतीह
सन्तोष्यतां द्रुतमसौ समुपाश्रितस्त्वाम् ॥२५६॥
जीयान्माणिक्यचन्द्रस्तव सचिववरः पुत्रपौत्रप्रपौत्रै-
र्धन्यः श्रीरामचन्द्रार्चननिभृतमनोवृत्तिरुद्दामकीर्तिः ।
एतेनात्यर्थयुष्मत्प्रणयनयभृता शौर्यगाम्भीर्यवीर्य-
प्राचुर्याश्चर्यचर्याचयजितगुरुणा पाहि भूमीश्चिराय ॥२५७॥

इत्युक्त्वा च तेन विमानराजेन परमसाधनाख्येन देवी हृदयमवनीपतेर्विवेश ॥१२७॥

ततश्च प्राभातिकमाङ्गल्यमृदङ्गशृङ्ग[1]शङ्खपटहध्वनिभिर्वन्दिवृन्दनान्दीनादैश्च व्यपनीतनिद्रो महीमहेन्द्रः पर्यङ्कादुत्तस्थौ ॥१२८॥

उत्थाय च कृतनित्यक्रियः श्रीगुरुदेवसन्निधौ भूमीसुरसभायां शाण्डिल्यमभिमुखीकृत्य तदशेषतः स्वप्नवृत्तान्तमावेदयामास ॥१२९॥

सर्वे च सविस्मयमाकर्ण्याशीर्भिस्तं संवर्धयामासुः ॥१३०॥

यथा— चेतश्चन्द्रकचूडचारुचरणे चन्द्राभचञ्चन्नख-
श्रेणीचारुविभूषणे चरतु ते चाञ्चल्यहीनं चिरम् ।
चण्डी चन्द्रकलाविलासिमुकुटा चूर्णीकरोत्वापद-
श्चण्डान् विद्विषतश्चराचरगुरुस्त्वां पातु चक्रायुधः ॥२५८॥
आसीद् भूपतिचक्रमौलिमुकुटो यः कृष्णरामः कृती
तत्पुत्रो जगदादिरायसुकृती ख्यातो धरामण्डले ।
तस्माद्द्भुतकीर्तिचन्द्रकिरणश्रेणीनिरस्ताखिल-
ध्वान्तौघेऽजनि कीर्तिचन्द्रसुकृती क्ष्मापालचूडामणिः ॥२५९॥
यद्दानेन च दैन्यशून्यमभवद् भूमण्डलं सर्वतः
स्वप्नेऽपि स्मरति प्रतीपनृपतिर्यद्दोर्द्वयीविक्रमम् ।

1. शृङ्ग—नास्ति, इ ।

समः—प्रिये साधु मन्त्रितं त्वया, किन्तु त्वामपहाय प्रयातुर्यदि तावज्जीवितं तिष्ठति। ( इति सनिश्वासमश्रूणि विमुञ्चन्नधोमुखस्तिष्ठति )।

रेवा। ( सभयं ) नाथ,

अविधेयं विधेयं स्याद् यत्र भर्ताऽनुरज्यति।
कुलस्त्रीणामयं धर्म इति धर्मविदो विदुः ॥२५९॥

ईदृशानि भणितानि शृण्वतो
नाथ कस्य न मनो विदीर्यते।
आत्मगौरवमुदस्य दूरतो
भर्तुरीप्सितकरो हि किङ्करः ॥२६०॥

तद् यथा रोचते प्रभविष्णवे तदेवानया विधेयम्।

अन्योन्यमित्थमथ चित्तगतं लपन्तौ
विच्छेदकम्पिमनसी दधतुः कथञ्चित्।
नानासरोवरसरोजविहारभाजौ
कोकाविव प्रणयिनौ दिवसावसाने ॥२६१॥

नमन्मौलि गलद्बाष्पमधोमीलितलोचनः।
बद्धकण्ठमुरःकम्पमिदमूचे प्रियां समः ॥२६२॥

अत्र चेदयि वसामि गोपितः
स्नेहतो हि जननी विपद्यते।
त्वां विहाय यदि यामि निर्घृणो
जीविते खलु तदा गतस्पृहः ॥२६३॥

जानीहि वामनयने तव किङ्करत्व-
मङ्गीकृतं चिरमनेन न चापरास्याः।
सेवाविधानविधुरो यदि दैवतः स्यां
क्षन्तव्यमेतदपि मे प्रियया कृपाभिः ॥२६४॥

निशम्य रेवा करुणोदितानि
विहाय गन्तुं कृतमानसस्य।

म्लानाङ्गवल्ली चिरमास दूना
दम्भोलिदग्धा नवमालतीव ॥२६५॥

निद्रायितां सहचरीमनुभूय याताः
सख्यश्चिरेण भयवत्सलताढ्यचित्ताः ।
आरात्तदिङ्गितमति-प्रतिबोधनाय
सम्भूय वासभवनान्तिक एव तस्थुः ॥२६६॥

अथ तां रेवामानन्दकरम्बितामुन्नीय परस्परम्—

दूराद्भानु-रथाग्रचारिकिरणे पूर्वाचलं चुम्बति
श्रेणीभूय मधुव्रतेषु नलिनीसन्धानलुब्धात्मसु ।
अस्याः कैरपि दुर्निवेद्यविषयैरस्माभिरुन्नीयते
शृण्वत्या इव चक्रवाकनिनदं चक्राङ्गनायाः क्रमः ॥२६७॥

ता दूरतः समभिवीक्ष्य समः प्रियायाः
पाणिद्वयं हृदि विधाय करद्वयेन ।
स्वे कर्णपद्म (?) अभिलिख्य निजां समस्या-
मस्यां निधाय च तिरोऽभवदश्रुदिग्धः ॥२६८॥

अन्योन्यमित्थमनुभूय मिथोऽनुराग-
मानन्दकन्दलितमेव मनो यदासीत् ।
कान्ते गते निजगृहं तदभूच्च यादृक्
तद्भावबद्धहृदयाः परिवर्णयन्तु ॥२६॥

गतवति यदुवीरे क्षौमरुद्धाखिलाङ्गी
क्षणमपि विरहं सा नैव सोढुं समर्था ।
प्रियमिलनरसार्द्रा लब्धपाथोदधारा
क्षितिरिव नवशस्या चण्डभानुप्रतापम् ॥२७०॥

दिशि दिशि सममूर्त्तिं पश्यतीवायताक्षी
हृदयनिहितमेनं श्लिष्यतीवादरेण ।

स्वपुरत इव कान्तं मन्दमन्दं बभाषे
प्रतिवचनमथेयं नैव लब्ध्वा मुमोह ॥२७१॥
अनुनयचतुरास्ताः क्षिप्रमभ्येत्य सख्यः
किमिति किमिति मुग्धाः कम्पमानाखिलाङ्ग्यः ।
परिचरति च काचित् कापि रोदित्यजस्रं
क्षितिपतिपुरमन्या वक्तुमाशु प्रतस्थे ॥२७२॥
दैवादहं क्षितिविलोकनकौतुकाय
स्तोकं गतः क्षितिपतेर्दमनस्य पुर्याम् ।
अभ्यर्च्य मां स कथयंस्तनयातदाधि-
मन्तःपुरं धृतकरं सहसा निनाय ॥२७३॥
तत्रैव बालां मलिनां कृशाङ्गीं
तां मुक्तकेशीं क्षितिलग्नदेहाम् ।
संमीलिताक्षीं श्वसितानुमेय-
जीवां निरीक्ष्याशु चमत्कृतोऽस्मि ॥२७४॥
तत्कर्णमूलमधि तस्य समस्य वृत्त-
मामूलतः कथयितुं मयि भिन्नवक्त्रे ।
उत्थाय धैर्यमवलम्ब्य कियत् कुमारी
कृच्छ्रादसौ सपदि मत्पदयोः पपात ॥२७५॥
ततोऽम्बयाऽस्याः सहचारिणीभि-
र्बद्ध्वाऽञ्जलिं मच्चरणे निपत्य ।
ऊचेऽहमेतत् कृपया मुनीन्द्रो
मन्त्रं पुनर्जल्पतु कर्णमूले ॥२७६॥
आश्वास्य ताः किञ्चिदितो निधाय
दूरे मया सा शनकैरवादि ।
यं स्वप्नवद्वीक्ष्य विमुह्यसि त्वं

त्वदोष्ठबन्धूकमुखाम्बुजाभ्यां
नासातिलेनाङ्गुलिचम्पकेन ।
विलोचनेन्दीवरकोरकेण
पञ्चेषुणा तन्वि निहन्यते सः ॥२७८॥

जानाति विद्याञ्च मयैव दत्तां
गन्तुं तथागन्तुमलक्षितोऽन्यैः ।
त्वां द्रष्टुमत्युत्सुकमानसोऽपि
शङ्के न शक्तश्चरितुं कुमारः ॥२७९॥

किं वर्णयामस्तव तन्वि दैव-
माकाङ्क्ष्यते यः सुरकामिनीभिः ।
स एव ते याचकतामवाप्तः
पञ्चेषुणा नीत इमामवस्थाम् ॥२८०॥

त्वां चित्रितां सोऽपि विधाय यत्नाद्
विनोदयत्यक्षियुगं मृगाक्षि ।
पृच्छन्नलब्धप्रतिवाक् तदानीं
करोति यत्तन्नहि वर्णनीयम् ॥२८१॥

एतन्निशम्यैव वचो मदीय-
माश्वस्य किञ्चित् स्थितमेतयाऽपि ।
भावानुबन्धं रहसि स्थिताया
विज्ञातुमन्तर्हितवानहञ्च ॥२८२॥

शून्यं चुम्बति जल्पति प्रतिवचः स्वच्छायमाश्लिष्यति
धर्तुं धावति पश्यति प्रतिदिशं निस्पन्दयत्यक्षिणी ।
ईषत् कुप्यति शीत्करोति सुदती रोदित्यथो मूर्च्छती-
त्येवं कातरकातरेण मयकाऽप्यालोकितं तद्रहः ॥ २८३ ॥

अथ सख्यः सम्भूय तामाश्वासयन्ति । कापि—

सखि ! यद्भगवता महर्षिणा जप्तं तदवश्यम्भावि ।

तथाहि—

चन्दनं करिकरेण भज्यते
पावकेन सबलोऽपि दह्यते ।
नीरदस्य कृपया किमेतयो-
र्भूय एव नहि वर्धतेऽङ्कुरः ॥ २८४ ॥
अचिरं वा चिरं वेति सन्दिह्य मम जल्पिते
सखीभिर्लब्धबोधाऽपि चित्रितेव चिरं बभौ ॥ २८५ ॥

आश्वास्य तां तज्जनके निवेद्य स्वयंवरार्थं दुहितुर्द्रुतञ्च ।
कलिन्दजाकर्णकुतूहलाय द्वारावतीमागत एष देवः ॥२८६॥

भूतं भवद्भावि चराचरेषु
जानाति सर्वेषु सदा स्थितो यः ।
पृच्छत्यमुं सोऽप्यनभिज्ञवद्वेद्
वाचालता मे प्रथिता पुरैव ॥२८७॥

ध्येयं योगिभिराहितं कमलया वक्षोजयोः क्षालितं
ब्रह्माण्डाकृति वर्धितातितरसा स्वर्वाहिनीपाथसा ।
स्पृष्टं शम्भुविरिञ्चिमौलिमुकुटैर्जुष्टं तुलस्याः स्रजा
दृष्टन्तच्चरणारविन्दममलं दिष्ट्या विभो मादृशैः ॥२८८॥

यः कीदृक् क च संस्थितो जगदिदं किंहेतुना कल्पते
मायादामभिरात्मनोऽपि तनुते कस्मादिदं बन्धनम् ।
एतच्चिन्तनघूर्णनाहतधियो मुह्यन्त्यहो योगिनः
सोऽप्येवं गृहितां श्रितो यदि सुतोद्वाहेऽपि यत्नस्तदा ॥२८९।

तदनु मम विवाहोदन्तसंजातहर्षा
नगरनगरनारीनागराः कौतुकेन ।
यदुपतिभुजगुप्ता नृत्यगीतप्रवृत्ता
अपि वत शिशुवृद्धा यूथशः संप्रयान्ति ॥२९०॥

इत्यानन्दलतिकायां प्रथमं कुसुमम् ॥

द्वितीयकुसुमम्

मन्दं मन्दं क्षिपति चरणं चिन्तयन् प्रेम तस्या-
स्तूर्णं तूर्णं किरति नयनं पृष्ठतस्तद्भ्रमेण ।
वारं वारं जपति निभृतं भाषितानि प्रियाया
दीर्घं दीर्घं श्वसिति च समः कम्पमानाखिलाङ्गः ॥१॥

कर्णौ तस्या वचनसुधया लोचने कान्तकान्त्या
जिह्वां तत्तच्चरितलपितास्वादनानन्दवृन्दैः ।
पाणिद्वन्द्वं सविनयपरीचर्यया तोषयन् स्वं
लब्धं चित्तं प्रभवति समो नैव मोक्तुं कथञ्चित् ॥२॥

क्षीण-क्षीणः कथमपि पुरं कृच्छ्रतोऽभ्येत्य धीरो
म्लानम्लानानन-हिमकरो विश्लथदेहवल्लिः ।
झञ्झावातप्रहिततृणवत्तिर्यगावर्त्ति-पाद-
स्तल्पागारं सहचरकरन्यस्तपाणिर्विवेश ॥३॥

तस्यावस्थां सपदि परितश्चिन्तयन्तो वयस्या
नैवाभिज्ञा विरहविधुरस्याशये कातराक्षाः ।
अन्योन्यन्ते निभृतनिभृतं वीक्षमाणा मुखानि
त्रासस्नेहग्लपितहृदया मोहमापुश्चिराय ॥४॥

कश्चित्तालव्यजनपवनैः कश्चिदिन्दुद्रवेण
कश्चित्तूर्णं नवकिसलयैश्चन्दनोषीरलेपैः ।
कश्चित् पादद्वयमृदुकरद्वन्द्वसंवाहनेन
कश्चिद् गानैः सुमधुरपदैस्तोषयामास नाथम् ॥५॥

अथ उद्धवसुतः प्रभृतिनामा सहचर उपसृत्य, भगवन् ! मया कदाचि-द्वसन्तोत्सवव्यपदेशेन देवप्रद्युम्नस्य सदसि गतवता वैरसेनिचरितानि कथयतां सभ्यानां मुखतो वैरिञ्चहंसादरकलितभैमीगुणनिकुरम्बस्य तस्य यादृशी दशा श्रुता, सैव तवेति तर्क्यते । तदामूलतः कथय, अभिज्ञाः

परिचरामः, त्रिजगत्यनवाप्यमपि न पश्यामः। तत् किमिति घननिकरग्लपितहिमकर इव मध्यन्दिनद्युमणिमृदिततमालतरुरिव विगतमहानिधिर्वारिधिरिव प्रतिक्षणं दुनोषि ॥ (क)

समः। सखे! किञ्चित् प्रकृतिमापन्ने मयि प्रष्टव्यमेतत्। संप्रति यथाशक्त्युपचरथ। किं वा मयि तेन। तथाहि—

मनः प्रेमाकाङ्क्षि प्रणयसदनं दूरनगरे
तदप्यत्यन्तं हा ह्यहह परतन्त्रं विधिवशात्।
त्रिलोकीनां रत्नात्तदधिकगुणं रत्नमभव-
दतो जीव-त्यागादपरमिह नास्त्यौषधमहो ॥६॥

प्रभृतिः। भगवन्, अस्माकं कोषरत्नादधिकं धनाधिनाथभवनेऽप्यप्रसिद्धं, तत् किमिति?

समः। सखे, मालवाधिपतेः सदनमलङ्करोति तत्तनयैव। तथाहि—

असौ कान्त्युद्रेकाद्रजनिकरबिम्बं लघयति
तथा वैदग्धीभिर्हसति बलभित्पौरवनिताः।
वपुर्वल्या तन्वी कनकलतिकां निन्दतितरां
जगन्नारीमौलिं क्षितिपतनयारोहति गुणैः ॥७॥

मुखं राकाचन्द्रो नयनयुगमिन्दीवरदले
तदोष्ठो जीवेश्याः कनकलतिकायाः किसलयम्।
स्तनौ कोकद्वन्द्वं दशननिवहो मौक्तिकगणो
नितम्बो भूबिम्बं मनसि मम नृत्यं वितनुते ॥८॥

प्रभृतिः। देव कथमवलोकिता सा?

समः। सखे, सूर्योपरागागतक्षितिपतिभवनानि मुनिदत्तया विद्ययाऽनुप्रविशता क्षीरवारिधिमथनविवर्धितश्रमनिकुरम्बमर्दितमानसैर्गीर्वाणैः पीयूषमिव चिरेण मयाऽपि सा विलोचनातिथिः कृता।

सा हि—

श्रुता हस्तौ पादौ शिथिलयति तन्वी प्रतिदिनम्
स्मृता धैर्यं दूरे किरति धरणीनाथ-तनया ।
मुनीनामप्यन्तर्विकलयति दृष्टिं गतवती
न जाने स्पृष्टा चेद्रचयति किं किं प्रियतमा ॥९॥

प्रभृतिः। देव, सा खलु सर्वाण्यबलाकुलानि जितवती, यया खलु क्षितिवलयविख्यातधीराणामप्यग्रणीर्भवानीदृगवस्थः कृतः। तदामूलतः श्रोतुमिच्छामि तस्यास्त्वयि कीदृशो भावानुबन्धः।

समः। सखे, पुरैव चरमुखतः श्रुत्वा मय्यनुरागिणी सा यादृशीं दशामापन्ना तदावेदने विदीर्यते मे हृदयम्। तथाहि—

पूर्ण-शारद-सुधाकर-कान्तिः
क्षीणहैमनहिमांशुनिभाऽभूत् ।
जातरूपलतिकापि मत्कृते
हा तमाललतिकेव वीक्षिता ॥१०॥

निपतति यदि दृष्टिर्यत्र तत्रैव लग्ना
चलति चरणमस्याः केवलं ह्रीभयेन ।
स्फुरति च करपद्मं पातुराराधने तु
प्रसरति मृदु वाणी मत्कथालापिनीषु ॥११॥

क्वचित्तल्पं चूर्णीकृतकिसलयं वीक्षितमहो
क्वचित् कुल्याः शुष्का मलयज-नवोषीररचिताः ।
क्वचित् सख्यः स्नेहात् पिक-निकरसंवारणरताः
क्वचिद् वाणी तन्व्या निभृतनिभृतं धैर्यजननी ॥१२॥

एवंविधबहुविधपरिचरणशतैः क्षणमुपलब्धनिद्रायां नृपसुतायां शनैः शनैरुत्सवविलोकनाय निर्याताः सख्यः। तदवसरमुपलभ्य बहुविधरत्नावलीपरिमण्डितदण्डं बालव्यजनमादाय तां वीजयितुमासन्नोऽस्मि ।

प्रभृतिः। देवस्य निमित्तमेतदिति कुतो विदितम् ? कुतः—

# फिट्सूत्राणि

## प्रथमः पादः ।

### फिषः* ॥१॥

प्रक्रियाकौमुदीप्रसादः । अथ फिट्सूत्राणि व्याख्यास्यामः । फिषः प्रातिपादिकस्येत्यधिक्रियते ।

फिट्सूत्रवृत्तिः । अथ फिट्सूत्राणि व्याख्यास्यामः । फिट् प्रातिपदिकम् । तस्येत्यधिक्रियते ।

---

* प्राथमिकस्यैतस्य सूत्रस्य पारमार्थिकं रूपं दुःशकमेव निर्णेतुम् । तथाहि फिट्सूत्रवृत्तेः प्राचीनादर्शेषु प्रक्रियाकौमुदीप्रसादे च "फिषः" "अन्त उदात्तः" इति सूत्रद्वितयमुपलभ्यते । शब्दकौस्तुभ-सिद्धान्तकौमुदी-स्वरसिद्धान्त-चन्द्रिकाप्रभृतिषु पुनः "फिषोऽन्त उदात्तः" इत्येकमेव सूत्रम् । अभिरूप-शिखामणिभिः सायणाचार्यैरपि तत्र तत्र "फिषोऽन्त उदात्तः" इत्यैव विलिखितम् । यथा निपाता आद्युदात्ता उपसर्गाश्चाभिवर्जम् इति सूत्रद्वितयं प्रायेण व्याकरणनिबन्धेष्वेकसूत्ररूपेणोद्ध्रियते तथा प्रकृतेऽपि नः प्रतिभाति । हरदत्तमिश्रैः "समुद्रशब्दोऽपि फिषि पाटलापालङ्काम्बासागरार्थानाम् इत्यन्तोदात्त एव" इति काशिकावचनस्य व्याख्यानावसरे "फिषिति आदिमेन योगेन शान्तनवीयं चतुष्कमुपलक्षयति" इत्युक्तम् । पुनरपि "अनुदात्तं पदमेक-वर्जम्" [ पा० ६।१।१५८ ] इति व्याचक्षाणैरुक्तम् "अभेः फिषित्यनेनान्तो-दात्तत्वम्" इति । तन्मते प्राथमिकस्य सूत्रस्य स्वरूपं कथञ्चिद् भिन्नमपि स्यात् ।

यद्यपि सूत्रमेतत् स्वरूपतो महाभाष्ये नोपलभ्यते तथापि तात्पर्यत उपलभ्यत एव । तथाहि अवङ् स्फोटायनस्य [ पा० ६।१।१२३ ] इति सूत्रस्य भाष्य उक्तम्—न त्विदं लक्षणमस्ति प्रातिपदिकस्यादिरुदात्तो भवतीति । इदं पुनरस्ति प्रातिपदिकस्यान्त उदात्तो भवतीति ।

अन्त उदात्तः ॥ १क ॥

प्र० कौ० । प्रातिपदिकस्य । उच्चैः । नीचैः । दृषत्* ।

फि० वृ० । फिषोऽन्त उदात्तो भवति† । किं चेदं फिडिति । फिडिति प्रातिपादिकप्रदर्शनार्थम् । शान्तनवाचार्यः फिडिति प्रातिपदिकसंज्ञां कृतवान् । अर्थवदधातुरप्रत्ययः फिट्‡ । कृत्तद्धितसमासाश्चेति । डित्थः डवित्थः ताम्रः आम्रः कर्ता हर्ता औपगवः कापटवः राजपुरुषः ब्राह्मणकम्बलः । स्वरविधानेऽन्त उदात्त इति प्रक्रान्तम् ।

फिषोऽन्त उदात्तः ॥१॥

शब्दकौस्तुभः । फिष् इति प्रातिपदिकस्य प्राचां संज्ञा । फिषोऽन्त उदात्तः स्यात् । उच्चैः ।

---

* मुद्रितपुस्तके 'दधत्' इति पाठः । स चायुक्तः । अभ्यस्तानामादिः [ पा० ६।१।१८९ ] इत्याद्युदात्तत्वप्रसङ्गात् । तिङन्तस्य दधच्छब्दस्यान्तोदात्तत्वम् उपोत्तमं रिति [ पा० ६।१।२१७ ] इति सूत्रे भाष्यकैयटयोः स्पष्टम् । तत्त्वन्यदेव । दृषच्छब्दस्यान्तोदात्तत्वं तु 'सप्तमीहारिणौ धर्म्येऽहरणे [ पा० ६।२।६५ ] इति सूत्रे न्यासे प्रतिपादितम् ।

† बहुषु वृत्तिग्रन्थेषु "फिषोऽन्त उदात्तः" इति सूत्रम् फिडन्तोदात्तो भवति इति च वृत्तिरुपलभ्यते ।

‡ तथाच पाणिनीयं सूत्रम्—अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । कृत्तद्धितसमासाश्च । १।२।४५-४६ । इति । उदाहरणानीमानि व्याकरणशास्त्रे प्रसिद्धानि । महाभाष्ये डवित्थशब्दो नोपलभ्यते, डाम्भिट्ट इत्येव दृश्यते । काशिकायां पुन र्डवित्थशब्द एवावलोक्यते । डित्थ-डवित्थौ अर्थवदित्यादेरुदाहरणम् । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि इति मतेन प्रकल्प्यक्रिययोस्ताम्राम्रयोरुदाहरणत्वेनोपन्यासः । कर्ता हर्ता च प्रत्यक्षक्रियस्य कृदन्तस्य, औपगवकापटवो तद्धितान्तस्य, राजपुरुष-ब्राह्मणकम्बलौ समासस्योदाहरणानि । एवं राजपुरुषपुत्रपुरुषेत्यादिषु बह्ववयवघटितेषु समासेष्वपि बोध्यम् ।

स्वरसिद्धान्तचन्द्रिका ।

एवं धातुप्रत्ययसमाससम्बन्धिनः स्वराः कथिताः ।
अर्थात् स्वरोऽपि विदितस्तत एव प्रातिपदिकानाम् ॥
अथ यत् फिट्सूत्राभिधमुदितं शन्तनुमहर्षिणा शास्त्रम् ।
तदिदानीं व्याचक्षे तदेकवाक्यं हि पाणिनीयेन ॥
सूत्राण्यष्टाशीतिस्तत्र च चरणास्तु चत्वारः ॥

यद्यपि पाणिनीयेऽपि कृत्तद्धितप्रत्ययबलात् सुज्ञानः प्रातिपदिकस्वरः, समासस्वरस्तु साक्षादेव व्युत्पादितः, तथापि तत्रैव विशेषबोधकत्वाच्छान्तनवशास्त्रस्य तदेकवाक्यत्वम् । तथाहि कनिष्ठज्येष्ठशब्दाविष्ठन्नन्ततयाद्युदात्तौ पाणिनीये व्युत्पादितौ । शान्तनवे तु तयोर्वयस्यन्तोदात्तत्वं विहितम्—ज्येष्ठकनिष्ठयोर्वयसि [ १।२३ ] इति । प्रयोगश्चैवम् ज्येष्ठस्य ज्यैष्ठिनेयस्य [ तै० ब्रा० २।१।८।१ ] इत्यादौ । एवमुणादीनामव्युत्पत्तिपक्ष औणादिकशब्दानां शान्तनवेनैव स्वरनिर्वाहः । व्युत्पत्तिपक्षेऽपि य उणादौ साक्षान्न व्युत्पादितास्तेषां शान्तनवमन्तरेण न सुगमः स्वरः । शान्तनवमपि समासतिङ्स्वरादिसिद्धये पाणिनीयशास्त्रमपेक्षते । एवमनयोरेकवाक्यतामभिप्रेत्यैव भाष्ये हलन्त्यम् [ पा० १।३।३ ] इत्यत्र स्वर्-शब्दे रेफस्येत्संज्ञामाशङ्क्य न्यङ्स्वरौ स्वरितौ [ ४।६ ] इति स्वरितकरणसामर्थ्यान्न भवतीति परिहृतम्* । कर्तृभेदेऽपि सूत्रवार्त्तिकभाष्याणामिव नैकशास्त्रत्वं विरुद्धम् । एवं चोभयोर्विरोधे विशेषेण सामान्यस्य सङ्कोचः । यथा ज्येष्ठकनिष्ठयोर्वयसि [ १।२३ ] इत्यनेन ञ्नित्यादिर्नित्यम् [ पा० ६।१।१६७ ] इत्यस्य । यथा वा बहुव्रीहौ प्रकृत्या पूर्वपदम् [ पा० ६।२।१ ] इत्यादिभिः पाणिनीयैः फिषोऽन्त उदात्तः [ १।१ ] इति शान्तनवस्य बहुव्रीह्यादिभिन्नप्रातिपदिकविषयतया

---

* "इदं तर्हि स्वर् । उपोत्तमं रिति [पा० ६।१।२१७] इत्येष स्वरो यथा स्यात् । स्वरितकरणसामर्थ्यान्न भविष्यति । न्यङ्स्वरौ स्वरिताविति ।" भाष्यम् ।

सङ्कोचः। एवं भूयान् विषय उत्तरत्र व्यक्तीभविष्यति। अत्यन्तविरोधे तु विकल्प एव। क्वचिदन्यलभ्याभिधानमपि कर्तृभेदान्न दोषाय। अत एव उञ्छादीनां च [ पा० ६।१।१६० ] घृतादीनां च [ १।२२ ] वृषादीनां च [पा० ६।१।२०३] ग्रामादीनां च [२।१५] इत्यनयोर्युगलयोरन्तस्यादेश्चोदात्तत्वविधायिनोरन्यतरेणेष्टसिद्धावपि युगलान्तरप्रणयनं कर्तृभेदान्न दोषायेति वृषादीनां च [ पा० ६।१।२०३ ] इत्यत्र मनोरमायां* स्थितमिति दिक्।

फिट् इति प्रातिपदिकस्य शान्तनवी संज्ञा। त्रिरुच्चैः [ तै० स० ६।१।४।३ ]। नीचैर्देवा निवृश्चत [ तै० ब्रा० ३।७।६।१६ ]।

पाटलापालङ्काम्बासागरार्थानाम् ॥२॥

प्र०। पाटला फलेरुहा। अपालङ्क आरग्वधः। अम्बा अक्का। सागरः समुद्रः।†

श० कौ०। एतदर्थानामन्त उदात्तः। पाटला। लघावन्ते—[ २।१६ ] इति प्राप्ते। अपालङ्को वृक्षविशेषः। इहापि प्राग्वत्। अम्बार्थः। माता। उनर्वन्नन्तानाम् [ २।८ ] इत्याद्युदत्तत्वे प्राप्ते। सागरः समुद्रः। लघावन्ते—[ २।१६ ] इति प्राप्ते।

---

* तथाच तत्र आकृतिगण इति प्रतीकमुपादायोक्तम्—"फिट्सूत्रेषु ग्रामादीनाञ्च इति सूत्रितम्। ग्रामादिरप्याकृतिगणः। एवञ्चाविहितलक्षणस्याद्युदात्तस्य वृषादित्वं ग्रामादित्वं वा बोध्यम्। अन्तोदात्तस्य तु उञ्छादित्वं घृतादित्वञ्चेति दिक्। एवञ्च द्वाभ्यामेव सूत्राभ्यां सर्वसिद्धावितरसूत्रद्वयप्रणयनं कर्तृभेदान्न दोषायेति बोध्यम्" इति।

† मुद्रितपुस्तके एतन्नास्ति। अस्माभिर्महता प्रयासेन पुण्यपत्तनस्थ-Bhandarkar Oriental Research Instituteस्थ-हस्तलिखितपुस्तकसंवादेनैतन्निवेशितम्। काशिकावृत्तादावस्य सूत्रस्य समुल्लेखात् प्रक्षिप्तत्वकल्पनमपि न सम्भवति। पाटला पारुल, अपालङ्कः सोन्दाल इति भाषा।

फि० वृ०। पाटला अपालङ्क अम्बा सागर इत्येवमर्थानां शब्दानाम् अन्त उदात्तो भवति। पाटलार्थानाम्। पाटला पालका फलेरुहा सुरूपा*। अपालङ्कार्थानामपि†। अपालङ्कः अवघातकः‡। अम्बार्थानामपि†। अक्का अत्ता अल्ला$। सागरार्थानामपि†। सागरः समुद्रः उदधिः¶॥

स्व० सि० च०। अन्त उदात्तः इत्या पादपरिसमाप्तेरनुवर्तते। अर्थशब्दः प्रत्येकं सम्बध्यते। पाटला सुरूपा। आपालङ्को वृक्षविशेषः। स्वरकौमुद्यामदादिरयं पठितः। आरग्वधः इति पर्यायः। माता यद्वीरम् [ ऋ० सं० १०।७३।१ ]। सागरः। समुद्र इव हि कामः [ तै० ब्रा० २।२।५।६ ]। सिन्धुशब्दस्त्वाद्युदात्तः। स्यन्देः सम्प्रसारणं धश्च [ उ० १।१२ ] इत्युप्रत्ययविधौ निदित्यनुवृत्तेः। यः सप्त सिन्धून् [ तै० ब्रा० २।८।३।८ ]। पूर्वेणैव सिद्धे बाधकबाधनार्थमिदं प्रकरणम्। तलाद्ययोः लघावन्ते— [२।१६ ] इति गुरोरुदात्तत्वं प्राप्तम्। सागरार्थेऽप्येवम्। उनर्वन्नन्तानाम् [ २।६ ] इत्याद्युदात्तत्वम् माता इत्यत्र प्राप्तम् ॥३॥

गेहार्थानामस्त्रियाम् ॥३॥

प्र०। अन्त उदात्तः। गेहम् गृहम्। स्त्रियां तु शाला।

श०। गेहम् गृहम्। नब्विषयस्य—[ २।३ ] इति प्राप्ते। अस्त्रियां किम्। शाला। अत एव पर्युदासाज् ज्ञापकाच्छालाशब्द आद्युदात्तः।

---

* पाटला पालङ्का मरुता A.  † अपिर्नास्ति A.

‡ 'व्याधिघातकः आरेवतः आरग्वधः व्यथान्तकः' इत्यधिकम् B.

$ अम्बा अम्बालिका अक्का अल्ला A. अम्बा अल्ला अक्का अत्ता B.

¶ सागरः उदधिः समुद्रादयः B.

फि० सू०९। गेहार्थानां शब्दानामन्त उदात्तो भवत्यस्त्रियाम्। गेहम् हर्म्यम् हलाहलम्*। गेहार्थानामिति किम्। कुण्डम्† बाह्यम्। अस्त्रियाम् इति किम्। शाला।

स्व० सि० च०। गेहम्। गृहम्। यस्य वै द्वौ पुण्यौ गृहे वसतः [ तै० ब्रा० २।१।२।६ ]। नब्विषयस्य—[२।३] इति प्राप्तमाद्युदात्तत्वम्। वेश्मन्-शब्दे मनिन्नन्तत्वान्नित्स्वरः। उतो वेश्मेव दृश्यते [ तै० ब्रा० २।५।५।६ ]। व्यत्ययो वा। स्त्रियां तु यथा शालायै पत्नसी [ तै० ब्रा० १।२।३।१ ]। अत एव पर्युदासादयमाद्युदात्तः‡।

---

* सर्वेष्वेव पुस्तकेष्वेवम्।

† माधवमतेन कुण्डशब्दस्याजन्तत्वाद् उज्ज्वलदत्तमतेन च ड प्रत्ययान्तत्वात् प्रत्ययस्वरेणान्तोदात्तत्वम्। न्यासपदमञ्जर्योः पुनरस्याद्युदात्तत्वमेव प्रतिपादितम्। तथाहि क्षेपे [ पा० ६।२।१०८ ] इति सूत्रस्य विवरणपञ्चिका—"शकिशम्योर्नित्दिति [ उ० १।१०६ ] वर्तमाने क्वादिभ्यः किदित्यतः किद्ग्रहणे च कुडि दाहे इत्येतस्मात् अमन्ताड्डः [ उ० १।१११ ] इति डप्रत्यये कुण्डमाद्युदात्तम् इति"। पुनः जातिकालेतिसूत्रे [ ६।२।१७० ] कुण्डशब्दोऽयं नब्विषयस्येत्याद्युदात्तः इति। पदमञ्जर्यपि [ ६।२।१०८,१७० ] —कुण्डशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः इति।

‡ यच्च न्यासकृद्भिरुक्तम्—"शल हुल पतॢ गतौ। अस्माद् घञ्। शालाप्याद्युदात्ता। स्त्रीत्वं तत्पुरुषे शालायाम [ पा० ६।२।१२३ ] इति निपातनात्" इति, तच्चिन्त्यम्। तथा सति कर्षात्वतो घञोऽन्त उदात्तः [ पा० ६।१।१५६ ] इति सूत्रेणान्तोदात्तत्वस्य दुर्वारत्वात्। यच्च माधवाचार्यैरुक्तम्—"लस्य [ पा० ३।४।७७ ] इत्यत्र भाष्यकैयटयोः शालाशब्दः श्यतेर्लप्रत्यये व्युत्पादनीयः" तदपि न समीचीनम्, तत्रापि प्रत्ययस्वरेणान्तोदात्ततापत्तेः। अत एवोणादिवृत्तावुज्ज्वलदत्तेनोक्तम्—बहुलवचनात् श्यतेरपि क्लन् इति। समासचरमावयवभूतस्य शालाशब्दस्य स्वरविषये तु महर्षिणा पाणिनिना बहूनि सूत्राणि प्रणीतानि।

## गुदस्य च ॥४॥

प्र० । अन्त उदात्तः । नब्विषयस्य—[ २।३ ] इत्यस्यापवादः ।

श० । अन्त उदात्तः स्यान्न तु स्त्रियाम् । गुदम् । अस्त्रियां किम् । आन्त्रेभ्यस्ते गुदाभ्यः [ऋ० सं० १०।१६३।३,अ० सं० २।३३।४,२०।९६।२०] । स्वाङ्गशिटामदन्तानाम् [ २।६] इत्यन्तरङ्गमाद्युदात्तत्वम् । ततष्टाप् ।

फि० वृ० । गुदस्यास्त्रियामन्त उदात्तो भवति । अगेहार्थोऽयमारम्भः । गुदम् । अस्त्रियामिति किम् । या च ते गुदा [ अ० सं० १०।९।१६ ? ] आन्त्रेभ्यस्ते गुदाभ्यः [ ऋ० सं १०।१६३।३ ] ।*

स्व० सि० च० । गुदस्य मनो मे [ तै० सं० ६।४।१।४ ] । अस्त्रियामित्येव । गुदाभिर्ऋतून् [ तै० सं० ५।७।१७।१ ] । अत्र स्वाङ्गशिटामदन्तानाम् [ २।६ ] इत्यादिरुदात्तः । न च टापि कृतेऽदन्तत्वाभावः । अन्तरङ्गत्वात्† ततः पूर्वमेव स्वरप्रवृत्तेः । गुद पुरीषोत्सर्गे । इगुपधलक्षणः कः [ पा० ३।१।१३५ ] । गुदः ।

## ध्यपूर्वस्य स्त्रीविषयस्य ॥५॥

प्र० । अन्तापेक्षया धपूर्वस्य यपूर्वस्य चान्त उदात्तः । अन्तर्धा जाया माया ।

श० । नित्यस्त्रीलिङ्गस्य धकारयकारपूर्वो योऽन्त्योऽच् स उदात्तः । अन्तर्धा । स्त्रीविषयवर्णनाम्नाम्—[ २।२० ] इति प्राप्ते । छाया । माया ।

---

* A पुस्तके—'अस्त्रियामित्येव' इत्येतावन्मात्रं वर्तते ।

† "स्वाङ्गवाचकत्वस्य टाबुत्पत्तेः प्रागपि सत्त्वात् तस्यान्तरङ्गत्वम् ।" तालादिभ्योऽण् [ पा० ४।३।१५२ ] इत्यत्रापि कौस्तुभः—"पीयूक्षा । लघावन्त—[ २।१९ ] इति मध्योदात्तः । फिष् इत्याधिकारादापः प्रागेव-स्वरप्रवृत्तेः" इति । षष्ठसूत्रस्य पादटीका द्रष्टव्या ।

जाया। यान्तस्यान्त्यात् पूर्वम् [ ३।१३ ] इत्याद्युदात्तत्वे प्राप्ते। स्त्रीति किम्। बाह्यम्। बहिषष्टिलोपो यञ् च* [ पा० ४।१।८५।४ ] इति यञन्तत्वादाद्युदात्तत्वम्। विषयग्रहणं किम्। इभ्या क्षत्रिया। यतोऽनावः [पा० ६।१।२१३] इत्याद्युदात्त इभ्यशब्दः, क्षत्रियशब्दस्तु यान्तस्यान्त्यात् पूर्वम् [ ।१३ ] इति मध्योदात्तः†।

फि० वृ०। धकारपूर्वस्य यकारपूर्वस्य‡ च स्त्रीविषयस्यान्त उदात्तो भवति। धकारपूर्वस्य। श्रद्धा मेधा गोधा§। यकारपूर्वस्य खल्वपि। छाया जाया माया। ध्यपूर्वस्येति किम्। माला। स्त्रीविषयस्येति किम्। बाह्यम्। विषयग्रहणं किम्¶। इभ्या क्षत्रिया।

स्व० सि० च०। नित्यस्त्रीलिङ्गस्य शब्दस्य धकारयकारपूर्वो योऽच् अन्त्यः स उदात्तः। मेधां म इन्द्रः [ तै० आ० १०।४२।१ ]। गोधा कालका [ तै० सं० ५।५।१५।१ ]। स्त्रीविषयवर्ण—[ २।२० ] इति प्राप्ते। यस्य छायामृतम् [ ऋ० स० १०।१२१।२ ]। जायामानीय [ तै० सं० ५।३।७।२ ]। माया मायिनाम् [ ऋ० सं० ३।२०।३ ] यान्तस्यान्त्यात् पूर्वम् [ ३।१३ ] इति प्राप्ते। स्त्री किम्। ते ये बाह्याः [ तै० सं० ७।३।१।२ ]। विषयस्य

---

* बहिषष्टिलोपो यञ् च इति महाभाष्ये पाठः, बहिषश्च इति काशिकायाम्।

† क्षत्रियशब्दस्तु मध्योदात्तः क्षत्राद् घः [ पा० ४।१।१३८ ] इति घप्रत्ययान्तत्वात् इति न्यासः।

‡ धकारयकारपूर्वस्य B K.

§ गाधा A. गाधाशब्दस्यापि गुरोश्च हल० [ पा०३।३।१०३ ] इत्यप्रत्ययेनान्तोदात्तत्वं स्त्रीविषयत्वञ्च।

¶ विषयग्रहणं किम्। गुह्याः इभ्याः क्षत्रियाः B. महाभाष्ये [ ४।१।६३ ] काशिकायां च [ ६।१।१३ ] इभ्या क्षत्रिया इत्येकवचनान्तयोदर्शनात् फिड्वृत्तिकारस्य च प्रायेण काशिकानुसारित्वादेकवचनान्त एव पाठोऽस्माभिः स्वीकृतः। इभं हस्तिनम् अर्हतीतीभ्या दण्डादित्त्वाद् यत्।

किम् । त्वियासि [ तै० सं० १।२।४।२ ]। उभयत्र यान्तस्यान्त्यात् पूर्वम् [ ३।१३] इति स्वरः ॥५॥

खान्तस्याश्मादेः ॥६॥

प्र० । खशब्दान्तस्यान्त* उदात्तः । सुखम् दुःखम् । शकारमकारादेस्तु न । शाखा मखः ।

श० । नखम् उखा सुखम् दुःखम् । नखस्य "स्वाङ्गशिटाम्--"[ २।६ ] इत्याद्युदात्तत्वे प्राप्ते । उखा नाम यवाग्वादिपाकार्थं याज्ञिकैर्निर्मितो भाण्डविशेषः । तस्य कृत्रिमत्वात् खय्युवर्णं कृत्रिमाख्या चेत् [ २।८ ] इत्युवर्णस्योदात्तत्वे प्राप्ते‡ । सुखदुःखयोः "नब्विषयस्य—" [२।३] इति प्राप्ते । अश्मादेः किम् । शिखा मुखम् । मुखस्य "स्वाङ्गशिटाम्—"[ २।६ ] इति "नब्विषयस्य—" [ २।३ ] इति वाद्युदात्तत्वम् । शिखायास्तु दीर्घान्ततया "स्वाङ्गशिटाम्—"[ २।६ ] इत्यस्याप्राप्तावपि अश्मादेः [ १।६ ] इति पर्युदासेनाद्युदात्तत्वं ज्ञाप्यते । तथाच "शीङः खो निद्ध्रस्वश्च"§ [ Cf. उ० ५।२४ ]

---

* खशब्दान्तस्याशकारमकारदेरन्त—ह, खशब्दस्यान्त—मु ।

† अश्मादेरिति किम्—ह ।

‡ लौकिकदृष्ट्या उख गतौ इति धातोः इगुपधज्ञाप्रीकिरः कः [ पा० ३।१।१३५ ] इति कप्रत्यये प्रत्ययस्वरेणोखशब्दस्यान्तोदात्तत्वम् । ततः स्त्रियां टाप्येकादेशस्वरेण तथात्वमेव । ब्राह्मणे तूत्खनतेरुखशब्दो व्युत्पादितः । तत्रापि कृदुत्तरपदप्रकृतिस्वरेणैकादेशस्वरेण चान्तोदात्तत्वम् । "स यदुखा नामैतद् वै देवा एतेन कर्मणैतया वृतेमाल्लोँकानुदखनन् , यदुदखनंस्तस्मादुत्खोत्खा ह वै तामुखेत्याचक्षते परोक्षम् ।" [ श० ब्रा० ६।७।१।२३ ]।

§ "इदं दशपाद्यामुक्तम् । पञ्चपाद्यान्तु शीङः खो ह्रस्वश्चेति पठितम् ।" नागेशः । इदानीन्तनपुस्तकेषु शीङो ह्रस्वश्च इत्येवोपलभ्यते ।

क्षीरतरङ्गिण्यां पदचन्द्रिकायां व्याख्यासुधायां च शीङः किद्ध्रस्वश्च

इत्युणादिषु नित्त्वमुक्तम्। वस्तुतस्तु तदेव शरणम्। "शङ्खो निधौ ललाटास्थ्नि" इति [ अमर ] कोशादस्थिवाचकस्य "स्वाङ्गशिटाम्—" [२।६] इत्याद्युदात्तत्वस्याव्याप्त्या चरितार्थस्याश्मादेरित्यस्य ज्ञापकत्वायोगात्।

खान्तस्याशिखादेः* ॥६॥

फि॰ वृ॰। खान्तस्याशिखादेरन्त उदात्तो भवति। मखः उखः। अशिखादेरिति किम्। शिखा सुखम्।

---

इति पाठ उपलभ्यते। अत्र किदिति व्यक्तमेव प्रमादपाठः, ह्रस्वे कृते कित्त्वस्य सर्वथाऽनुपयोगात्। अमरकोषस्य क्षीरस्वामिटीकायां शीङो ह्रस्वश्च इत्युक्तम्। माधवीयधातुवृत्तौ पुनर्विस्पष्टमेव शीङो निद्ध्रस्वश्च इति पाठ उपलभ्यते, अयमेव च समीचीनतया प्रतिभाति।

यथा तथा वा भवतु प्रचलितपञ्चपादीमतेन शिखा-शब्दस्यान्तोदात्तत्वमेवायाति। तत्तु न समीचीनम्।

* B पुस्तके Kielhorn-महोदयेन मुद्रापिते च पुस्तके खान्तस्याश्मादेरित्येव सूत्रमुपलभ्यते। वृत्तिश्च K पुस्तके—खान्तस्य शब्दस्याशकारमकारादेरन्त उदात्तो भवति। सुखम् दुःखम् नखम् उखा। अश्मादेरिति किम्। शिखा मुखम्। B पुस्तके च—खकारान्तस्याशकारमकारादेरन्त उदात्तो भवति। नखम् उखा।

पदमञ्जर्यामपि [ ६।२।१७१ ] उक्तम् "सुखदुःखशब्दौ खान्तस्याश्मादेरित्यन्तोदात्तौ। अस्यार्थः—खान्तस्य शब्दस्याशकारमकारादेरन्त उदात्तो भवति। नखः उखा। अश्मादेरिति किम्। शिखा मुखम्।" इति।

शकारादेरपि शङ्खादिशब्दस्य मकारादेरपि मखादिशब्दस्यान्तोदात्तत्वोपलम्भात् अशकारमकारादीनां च लेखादीनामाद्युदात्तत्वसन्दर्शनात् फिट्सूत्रवृत्तिसम्मत एव पाठः समीचीनतया प्रतिभाति।

मयूखशब्दस्य मकारादित्वात् मादीनां च [ ३।४ ] इति द्वितीय उदात्तः।

तत् किमत्र चित्रं यत् प्रामादिकं पाठमिमं स्वीकुर्वद्भिर्वेदचतुष्टयभाष्य-

स्व० सि० च० । शकारमकारादिभिन्नस्य खान्तस्यान्त उदात्तः । शमितु-र्नखेषु [ तै० सं० ४।६।८।४ ]। स्वाङ्गशिटाम्—[ २।६ ] इति प्राप्तम् । यदुखा यदुखामुपदधाति [ तै० सं० ५।२।७।१ ]। भाण्डविशेष उखा । तस्य कृत्रिमत्वात् खय्युवर्णं कृत्रिमाख्या चेत् [ २।८ ] इति प्राप्तमित्याहुः* । सुखम् । दुःखम् । नब्विषयस्य—[ २।३ ] इति प्राप्तम् । श्मादेस्तु । शिखा-मनु [तै० सं० ७।४।६।१]। †अन्तरङ्गत्वाट्टापः पूर्वं स्वाङ्गशिटाम्—[ २।६ ] इति स्वरः । मुखाय स्वाहा [ तै० सं० ७।३।१६।१ ] ॥

---

कृद्भिरत्र तत्रागतिकतया कुशकाशावलम्बनन्यायेन यत् किमप्युक्तम् । तथाहि अनवद्यै रभिद्युभिर्मखः सहस्वदर्चति [ ऋ० सं० १।६।८ ] इत्यत्रोक्तम्—"मखः प्रातिपदिकस्वरः" इति । मखस्य ते तविषस्य [ ऋ० सं० ३।३४।२ ] इत्यत्रोक्तम् —"मखस्य । मह पूजायाम् । नहेर्हलोपश्च [ उ० ५।२३ ] इति हलोप इत्यनुवृत्तौ 'महेश्च' इति खप्रत्ययो हलोपश्च । मह्यते पूज्यते सर्वैः इति मखः । 'खान्तस्याश्मादेः' इत्यन्तोदात्तत्वम् । यद्यपि मकारादिर्भवति [ मकारादेर्न भवति—पाठान्तरम् ] तथापि वचनसामर्थ्याद्भवति" इति ।

* कौस्तुभादौ दीक्षितचरणा इति शेषः ।

† "स्वरस्य स्वाङ्गत्वापेक्षत्वादन्तरङ्गत्वं चिन्त्यम् । स्वाङ्गशिटामिति सूत्रेऽन्त-ग्रहणात् सर्वनामप्रातिपदिकसंज्ञाकालिकादन्तत्वमादाय तत्प्रवृत्तिरिति बोध्यम् । एवं पूर्वत्र गुदाशब्देऽपि बोध्यम् ।" इति लघुशब्देन्दुशेखरः । "स्वाङ्ग-त्वापेक्षत्वादिति । न च टाप उत्पत्तौ स्त्रीत्वापेक्षाऽस्तीति साम्यमिति वाच्यम् । प्रातिपदिकसंज्ञाप्रवृत्तिकाले लिङ्गस्याप्युपस्थितिसत्त्वेन लिङ्गाधिक्ये तस्मिन् द्योतनीये टाबादेरुत्पत्त्या लिङ्गोपस्थितेरुभयोत्पत्तिप्राक्कालिकत्वेन न लिङ्गो-पस्थितिकृतं टापो बहिरङ्गत्वमित्याशयात् । एतेन स्वरस्य बहिरङ्गत्वं ध्वनितम् । इदमल्पापेक्षमन्तरङ्गं बह्वपेक्षं बहिरङ्गमितिवादिमतेन । चिन्त्यमिति । अत्रेत्थं चिन्तयन्ति । स्वाङ्गशिटाम्—[ २।६ ] इति सूत्रेऽत इत्येव तदन्तविधिनान्त-

*ह्रिष्ठवत्सरतिशत्थान्तानाम् ॥७॥

प्र० । अन्त उदात्तः । वंहिष्ठः । संवत्सरः । विंशतिः । त्रिंशत् । निशीथः ।

---

पदार्थलाभेऽन्तवचनमुद्दे श्यतावच्छेदकसंज्ञाप्रवृत्तिकालिकमदन्तत्वं सूत्रप्रवृत्तौ नियामकमिति...शिखशब्दस्य यदा प्रातिपदिकसंज्ञा तदैव स्वाङ्गेत्यस्य प्राप्तिः, एकादेशस्य तु टाबुत्पत्त्युत्तरं प्राप्तिः । एतावतैव स्वरस्यैकादेशापेक्षयाऽन्तरङ्गत्वमिह विवक्षितम्" इति भैरवमिश्राः । यथा चास्माकं प्रतिभाति तथा फिट्सूत्रे ऽन्तरङ्गबहिरङ्गादिचर्चा नाद्रियते, तदन्तविधिश्च नाश्रीयते ।

अत एव कीलहर्ण महोदयस्य हस्तलिखिते स्वरप्रकाशे "शिखा । अन्तरङ्गत्वाट्टापः प्रागेव स्वाङ्गसिटाम् इत्याद्युदात्तत्वम्" इति विषये पत्रपार्श्वे क्षुद्राक्षरैर्विलिखितम्—"यद्येवं ग्रीवायां बद्धो अपिकक्षे [ ऋ० सं० ४।४०।४ ] इत्यत्राप्याद्युदात्तत्वं स्यात् । तस्मादस्त्वत्र शमादिपर्युदासादाद्युदात्तत्वम् इति तत्त्वम् । एवमान्त्रेभ्यस्ते गुदाभ्य इत्यत्रापि श्रोपर्युदासात्" । इति । अत्र लघुशब्देन्दुशेखरवचनम्—ग्रीवायां बद्धो अपिकक्ष आसनीत्यादौ ग्रीवाशब्दस्यान्तोदात्तत्वन्तु छान्दसत्वान्निर्वाह्यम् इति ।

* सूत्रे ह्रिष्ठशब्दोपादानं प्रामादिकमिति प्रतिभाति ; बंहिष्ठवर्हिष्ठमंहिष्ठवहिष्ठसहिष्ठादयो ये हिष्ठान्ताः शब्दा लोकवेदयोरुपलभ्यन्ते सर्वेषामेव तेषामाद्युदात्तत्वात्, तदर्थमेव च महर्षिणा नित्त्वविधानात् । वा जाते [ पा० ६।२।१७१ ] इति सूत्रे पदमञ्जर्यां वहिष्ठवत्सरेति पाठः सन्दृश्यते—

"संवत्सरशब्दो वहिष्ठवत्सरतिशत्थान्तानाम् इत्यन्तोदात्तः । अस्यार्थः—वहिष्ठ वत्सर ति शत् थ इत्येवमन्तानामन्त उदात्तो भवति । वहिष्ठः संवत्सरः सप्ततिः अशीतिः त्रिंशत् चत्वारिंशत् गूथं यूथम् ।" यदि पाठस्यास्य साधुत्वमापादनीयमित्याग्रहस्तर्हीत्थं साधनीयम् । वहिस्तिष्ठतीत्यर्थेऽन्तःस्थशब्दस्य प्रतिद्वन्द्वितया पुराणादिषु बाहुल्येन वहिष्ठशब्द उपलभ्यते । तथा च योगवाशिष्ठप्रयोगः—न बहिष्ठं न वान्तःस्थं क्वचित् किञ्चन विद्यते [ उपशम ५६।३७ ] इत्यादिः । अस्य च कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वमेव युक्तम् ।

शा० । एषामन्त उदात्तः स्यात् । अतिशयेन बहुलो बंहिष्ठः । नित्त्वा·

फिट्सूत्रेषु लौकिकानामिवार्षाणामपि प्रयोगाणां स्वरश्चिन्त्यत एव । बहिष्ठशब्दस्य व्यपदेशिवद्भावेन तदन्तत्वम् । बकारस्थाने वकारो लिपिकरप्रमादकृतः ।

कीलहर्णमहोदयस्य हस्तलिखित-फिट् सूत्रवृत्तिपुस्तके हिष्ठादिसूत्रमधिकृत्य पत्रस्य पार्श्वे हस्तान्तरेण विलिखितम् "केचिद् अत्र हिष्ठ वत्सरेत्यादीनामन्त उदात्तः । तत्र ह्यन्तानां व्रीहिः, ष्ठान्तानाम् अम्बष्ठः । अम्बाम्बेति—[ पा० ८।३।९७] उदाहरणम् । यत्तु वृत्ति [कृता] हिष्ठान्तानामित्युक्त्वा वहिष्ठबंहिष्ठावुदाहृतौ तदनयोः श्रुतावाद्युदात्तत्वश्रवणाद् विचारणीयमिति नरहरिः" इति । मतमिदमतीव समीचीनम् । व्रीहिशब्दे तृणधान्यानां च द्व्यषाम् [२।४] इति वा इगन्तानां च द्व्यषाम् [२।२६] इति वाद्युदात्तत्वे प्राप्तेऽन्तोदात्तत्वमनेन विधीयते । अहिशब्दस्तु व्यत्ययेनाद्युदात्तः । गोष्ठादयः ष्ठान्तशब्दाः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्ता एव । अङ्गुष्ठशब्दस्य ष्ठान्तत्वेऽपि स्वाङ्गानामकुर्वादीनाम् [ ३।३ ] इति द्वितीयस्योदात्तत्वम्, अङ्गुष्ठोदकबकवशानां छन्दसि [ १।१४ ] इति सूत्रेण छन्दसि पुनरन्तोदात्तत्वम् । षष्ठशब्दस्य थप्रत्ययान्तत्वेऽपि थान्तत्वाभावात् ष्ठान्तत्वादेवान्तोदात्तत्वम् ।

अत्र शतः साहचर्यात् पङ्क्तिविंशतित्रिंशच्चत्वारिंशत् पञ्चाशत् षष्टिसप्तत्यशीतिनवतिशतम् [ पा० ५।१।५९ ] इति सूत्रोपात्ता एव त्यन्ताः शब्दा ग्राह्याः, तेन पतिप्रभृतिषु नातिव्याप्तिरिति व्याख्यातारः । फिट् सूत्रकर्तुः शान्तनवाचार्यस्याष्टाध्यायीवासनावासितचित्तत्वे प्रमाणाभावात् शतः साहचर्यात् संख्यावाचिन एव त्यन्तास्थान्ताश्च ग्राह्या इत्येव वयं युक्तमुत्पश्यामः । तेन थान्तस्य चतुर्थपञ्चथसप्तथादय उदाहरणानि बोद्धव्यानि । चतुर्थादिशब्दानां भागवाचित्वे त्वाद्युदात्तत्वम् । ये तु सूत्रे थान्तानां संख्यावाचित्वं नानुमन्यन्ते तन्मते गूथादय उदाहरणानि । यद्यपि प्रोथादीनां पुंस्त्रियोर्वर्तमानत्वान्नब्विषयत्वाभावात् प्रातिपदिकस्वरेणान्तोदात्तत्वं प्राप्तमेव, तथापि गूथशब्दस्योदाहरणत्वं निर्बाधमेव । प्रोथादीनां तु ग्रहणं प्रपञ्चार्थम् । एवञ्च उत्थ-समुत्थ-कपित्थ-वहित्थाश्वत्थादिशब्दानां थाथादिसूत्रस्य [ पा० ६।२।१४४ ] उदाहरणभूतानां सुनीथावभृथप्रभृतीनां चानेनैवान्तोदात्तत्वमवबोद्धव्यम् ।

स्व० सि० च० । हिष्ठान्तानाम् । अतिशयेन बहुलः बंहिष्ठः । इष्ठ-न्नन्तत्वादाद्युदात्तत्वं प्राप्तम् । यद्बंहिष्ठम् [ ऋ० सं० ५।६२।६] इत्यादौ* व्यत्ययः । वत्सरान्तानाम् । संवत्सरोऽसि परिवत्सरोऽसि [ तै० ब्रा० ३।१०।४।१ ]। अव्ययपूर्वपदप्रकृतिस्वरः प्राप्त इत्याहुः । उणादौ अशेः सरः†

---

* आदिशब्देन "बर्हिष्ठमर्चास्मै" [ ऋ० सं० ३।१३।१ ] इत्यादीनि बोद्धव्यानि । सर्वैरपि टीकाकृद्भिः सूत्रस्योदाहरणमनुपन्यस्य व्यत्यय एवोपप्रदर्शितः, तत्रोदाहरणाभाव एव बीजं बोद्धव्यम् । वस्तुतस्तु पाणिनीये प्रियादिगणे भक्तिशब्दस्य पाठ इव हिष्ठादिसूत्रे हिष्ठस्य पाठः सर्वथा दुर्बोध एव । कदाचिद् 'एष्ठ' इति वा 'त्व-ष्ठ' इति वा पाठः स्यात् । त्वप्रत्ययान्तानां नियमेनान्तोदात्तत्वोपलम्भात् सूत्रेऽस्मिन् त्वस्य सन्निवेश आवश्यक एव ।

† अक्षरशब्द आद्युदात्तोऽप्युपलभ्यते, मध्योदात्तोऽपि । उज्ज्वलदत्तादय आद्युदात्तमेवौत्सर्गिकं मन्वाना भाष्यमनुसरन्तः "अशेः सरन्" इति पठन्ति । भट्टोजिप्रभृतयः पुनर्मध्योदात्तमेव सूत्रानुगतमाकलयन्तः "अशेः सरः" इति पठन्ति । प्रौढमनोरमायामुज्ज्वलदत्तमतमित्थं दूषितं दीक्षितचरणैः—"उज्ज्वलदत्तादयस्तु 'अशेः सरन्' इति पेठुः । तन्न, नित्स्वरापत्तेः, इष्यते तु प्रत्ययस्वरेणाक्षर-शब्दस्य मध्योदात्तत्वम् । ऋचो अक्षरे परमे व्योमन् [ऋ० सं० १।१६४।३९] अक्षरेण मिमते सप्त वाणीः [ ऋ० सं० १।१६४।२४ ] इत्याद्यृङ्मन्त्रेषु त्रीणि च शतानि षष्टिश्चाक्षराणि [तै० सं० १।३।८।१] इति यजुषि च तथैव पाठात् । अत एव द्वितीयाह्निकान्ते 'अश्नोतेर्वा सरोऽक्षरम्' इति भाष्यकृतोक्तम्" इति ।

स्वरमञ्जर्या एकस्मिन् हस्तलिखितपुस्तके—"असेः नम्प्रत्ययः । चिच्च । संवत्सरः परिवत्सरः इद्वत्सरः इदावत्सरः" इति पाठः, अपरस्मिंश्च—"असेः सरः । अक्षरे परमे । वसेश्चिच्च । संवत्सरः" इति पाठ उपलभ्यते । "अशेः सरः । अक्षरम् । वसेश्चिच्च । संवत्सरः परिवत्सरः इद्वत्सरः इदावत्सरः ।" इत्येव शुद्धः पाठ इति प्रतिभाति ।

उ० ३।७० ] इति प्रकरणे वसेश्च [ उ० ३।७१ ]* संपूर्वाच्चित् [ उ० ३।७२ ] इति चित्त्वोक्तिसामर्थ्यादप्यत्वान्तोदात्तत्वं सिद्धम्। वत्सरशब्दोऽप्यन्तोदात्तः पठ्यते—वत्सरेण नमस्करोमि [ तै० सं० ५।५।७।४ ], वत्सरोऽसि तस्य ते वसन्तः शिरः [मै० सं० ४।६।१८, तै० ब्रा० ३।१०।४।१, तै० आ० १।१६।१] इत्यादौ। तद् व्यत्ययात्। वसेश्च [उ० ३।७१] इति सरप्रत्ययान्ततया मध्योदात्तत्वौचित्यात्। व्यपदेशिवद्भावेन [प० ३०] वत्सरान्तत्वात् प्रकृतसूत्रेणैवान्तोदात्तत्वम्† इत्यन्ये। त्यन्तानाम्। सप्तत्यै स्वाहा [ तै० सं० ७।२।१७।१ ]। अशीत्यै स्वाहा [ तै० सं० ७।२।१७।१ ]। "उदात्तयणः—" [ पा० ६।१।१७४ ] इति विभक्तेरुदात्तता। शदन्तानाम्। चत्वारिंशते। पञ्चाशते। अत्रोभयत्र लघावन्ते—[ २।१६ ] इति प्राप्तम्। थान्तानाम्। अवभृथः। प्रभृथस्यायोः [ ऋ० सं० ६।४१।१६ ]। अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुः। थाथादिसूत्रेणापीदं [ पा० ६।२।१४४ ] सिद्धम्॥

**दक्षिणस्य साधौ ॥८॥**

प्र०। ‡अन्त उदात्तः। दक्षिणः साधुः। अन्यत्र दक्षिणो देशः।

श०। अन्त उदात्तः स्यात्। साधौ किम्। व्यवस्थायां सर्वनामतया स्वाङ्गशिटाम्—[ २।६ ] इत्याद्युदात्तता यथा स्यात्। अर्थान्तरे तु लघावन्ते

पाश्चात्यविपश्चितां मतेन नञो जरमरमित्रमृताः [ पा० ६।२।११६ ] इति सूत्रे त्सरदभयोरुपासंख्यानम्। तेन वचनार्थस्यात्सरशब्दस्याद्युदात्तत्वम्, अविनाश्यर्थस्य च मध्योदात्तत्वं सिद्धम्।

* सपूर्वाच्चित् इत्युज्ज्वलदत्तसम्मतः पाठः, स च दीक्षितादिभिर्दूषितः—"सम्पूर्वादिति पाठस्तु लक्ष्यविरोधादुपेक्ष्यः" इति।

† ये असेः सरन् इति पठन्ति तन्मते सरन एवानुवृत्तौ वत्सरशब्दस्याद्युदात्तत्वं प्राप्तमिति बोध्यम्। ‡ 'वर्तमानस्य' इत्यधिकम्—मु।

—[ २।१९ ] इति गुरुरुदात्तः। दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु इति कोशः*।

फि० वृ०। दक्षिणस्य† साधौ प्रावीण्ये‡ऽर्थेऽन्त उदात्तो भवति। §वीणायां दक्षिणः। सामसु दक्षिणः। साधाविति किम्। दक्षिणो देशः।

स्व०। साधुः प्रवीणः। अन्यत्र लघावन्ते—[ २।१९ ] इति गुरुरुदात्तः। दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु¶।

स्वाङ्गाख्यायामादिर्वा ॥९॥

प्र०। **दक्षिणस्येनन्प्रत्ययान्तत्वान्नित्यमाद्युदात्तत्वे प्राप्ते ††स्वाङ्गाख्यायां पाक्षिकोदात्तत्वार्थं विधिः। दक्षिणो बाहुः‡‡।

---

* 'वर्तमानस्य' इत्यधिकम्—ह। † दक्षिणशब्दस्य K. ‡ प्रावीण्येऽर्थे—नास्ति B. § वीणायाम्......देशः—नास्ति B.

¶ रघुवंशसञ्जीवन्यामेतस्यान्ते इति शाश्वतः इत्युपलभ्यते। मुद्रिते पुनः शाश्वताभिधाने अन्यविध एव पाठो दृश्यते—

सम्भूतो दक्षिणस्यां यो दक्षिणः स उदाहृतः।
परच्छन्दानुवर्ती च सरलोऽपि च दक्षिणः॥

विश्वकोषेऽपि 'दक्षिणः सरलावामपरच्छन्दानुवर्तिषु' इत्युपलभ्यते। एतस्यैव 'दक्षिणौ सरलोदारौ' इत्यमरवचनेन सङ्करे 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु' इति निष्पन्नम् इति प्रतिभाति।

** 'दक्षिणशब्दस्य स्वाङ्गाख्यायामादिर्वोदात्तः, अन्तो वा' इत्यधिकम्—ह।

†† 'स्वाङ्गाख्यायां...विधिः' नास्ति ह।

‡‡ 'अन्यत्र दक्षिणो देशः' इत्यधिकम्—ह।

शा०। इह दक्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्तः। दक्षिणो बाहुः। आख्याग्रहणं किम्। प्रत्यङ्मुखमासीनस्य वामपाणिर्दक्षिणो भवति॥।

फि० वृ०। '[स्वमङ्गं स्वाङ्गम्, तस्याख्यायां दक्षिणशब्दस्यादिरुदात्तो भवति, अन्तो वा। पाणिर्दक्षिणः। कर्णो दक्षिणः। आद्युदात्तः। पाणिर्दक्षिणः। ॐ[कर्णो दक्षिणः। अन्तोदात्तः।] स्वाङ्गाख्यायामिति किम्। दक्षिणो देशः। आख्याग्रहणं किम्। प्रत्यङ्मुखस्यासीनस्य सव्यः पाणिर्दक्षिणो भवति। §प्रत्यङ्मुखस्यासीनस्य दक्षिणमप्युत्तरं भवति, उत्तरं दक्षिणम्¶।

※ तथा च वाक्यपदीये भर्तृहरिः—

स्वाङ्गाद् व्यवस्था या लोके न तस्यां नियता दिशः।
प्रत्यङ्मुखस्य यत् पश्चात् तत् पुरस्ताद्विपर्यये॥

नैषधे श्रीहर्षोऽपि—

विरहिणो विमुखस्य विधूदये शमनदिक्पवनः स न दक्षिणः।
सुमनसो नमयन्नटनी धनुस्तव तु बाहुरसौ यदि दक्षिणः॥

†' दक्षिणस्यादिर्वानुदात्तो भवति। दक्षिणः पाणिः, दक्षिणः पादः, दक्षिणः कर्णः। स्वाङ्गाख्यायामिति किम्। दक्षिणोऽन्यः। प्रत्यङ्मुखस्यासीनस्य सव्यः पाणिर्दक्षिणः। B

ॐ कोष्ठकान्तर्गतः पाठो मुद्रितामुद्रितपुस्तकेषु नोपलभ्यते। अपेक्षित इति कृत्वाऽस्माभिः सन्निवेशितः।

§ B पुस्तके नास्ति। K पुस्तके हस्तान्तरेण पार्श्वे योजितम्।

¶ ऋग्वेदे दक्षिणशब्दः प्रायेणाद्युदात्त एवोपलभ्यते। केवलं दक्षिणापदं द्विः दक्षिणेपदं च सकृदन्तोदात्तः श्रूयते। तत्र दक्षिणापदस्याजन्तत्वाद् दक्षिणेपदस्य च शेप्रत्ययान्तत्वादन्तोदात्तत्वं बोध्यम्। फिट्सूत्राणां प्रत्ययनिरपेक्षतया प्रवृत्तेः 'छन्दसि च' इति सूत्रस्य प्रणयनमावश्यकम्। काठकतैत्तिरीयमैत्रायणीयसंहितासु स्वाङ्गवाची दक्षिणशब्दः प्रायेणाद्युदात्तः श्रूयते—

स्व०। दक्षिणस्य इत्येव। पक्षेऽन्त उदात्तः। दक्षिणो बाहुः। आख्यायां किम्। प्रत्यङ्मुखमासीनस्य सव्यः पाणिर्दक्षिणो भवति।

छन्दसि च ॥१०॥

प्र०। आदिरन्तो वोदात्तः*। अस्वाङ्गार्थम् असाध्वर्थं† च। दक्षिणः।

श०। अस्वाङ्गार्थमिदम्। दक्षिणः। इह पर्यायेणाद्यन्तावुदात्तौ।

फि० वृ०। छन्दसि विषये दक्षिणशब्दस्यादिरुदात्तो भवति, अन्तो वा। दक्षिणो रथवाहनः‡।

---

इन्द्रस्य बाहुरसि दक्षिणः [मै० सं० १।१।१२] इन्द्रस्योरुमाविश दक्षिणम् [मै० सं० १।२।३] दक्षिणेन हस्तेन देवानसृजत सव्येनासुरान् [मै० सं० १।६।३] इति। दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीः [मै० सं० २।६।६] इत्यत्र पुनरन्तोदात्तः। शतपथब्राह्मणे दक्षिणो बाहुरित्यत्र क्वचिद् दक्षिणशब्द आद्युदात्तः क्वचिच्चान्तोदात्तः श्रूयते। तदुभयं स्वाङ्गाख्यायामादिर्वेति सूत्रेण साधनीयम्।

वाजसनेयिप्रातिशाख्ये "दक्षिणा च" ( दक्षिणाशब्दश्चाद्युदात्तो भवति ) "न दश विश्वकर्मा निषद्येन्द्रस्य पातु सदः सद्वेषु" [२।२६-३० ] इति सूत्रद्वितयमुपलभ्यते। दक्षिणा तद्धितान्तम् इत्यथर्वप्रातिशाख्यम् [१।३।१]।

स्वरमञ्जर्यां नृसिंहसूरिभिरुक्तम्—"चतुश्चत्वारिंशस्तोम इति दक्षिणतः, षोडशस्तोम इत्युत्तरतः। अत्र दक्षिणोत्तराभ्यामतसुच् [ पा० ५।३।२८ ] इत्यतसुच्। तेन चित्स्वरेणान्तोदात्तः। दक्षिणायां दिशीत्याद्युदात्तः। दक्षिणा पितरः इत्यन्तोदात्तः। दक्षिणादाच् [ पा० ५।३।३६ ] इत्याजन्तत्वात्।" इति।

अयमत्र निष्कर्षः। दक्षिणशब्द उत्सर्गत आद्युदात्तः। क्रियाविशेषणतया प्रयुज्यमानः पुनरन्तोदात्तः। स्वाङ्गाख्यायां पर्यायेणाद्यन्तावस्योदात्तौ।

* आदिरन्तोदात्तो वा इति मुद्रितपुस्तके।

† एतच्चिन्त्यम्। दक्षिणासि [ तै० सं० १।१।४ ] इत्यत्र साधुसमानार्थकशीघ्रगाम्यर्थेऽप्याद्युदात्तत्वश्रवणात्।

‡ रथुवाहः A रथवाहुः B. अत्र द्वितीयमप्युदाहरणमपेक्ष्यते।

स्व० । दक्षिणस्य पर्यायेणाद्यन्तावुदात्तौ । अस्यात्रार्थमिदम् । दक्षिणो युक्तः [ तै० सं० ३।४।१०।४ ] । दक्षिणा दिक् [ तै० सं० ७।४।२।१ ] वेदभाष्ये† तु आ प्रयच्छ दक्षिणादोत सव्यात् [ तै० सं० १।२।१३।२-३ ] इत्यादौ दक्षिणाऽदिगाख्यायाम् इत्याद्युदात्तविधायि किञ्चित् सूत्रं लिखितम् । तदिदानीन्तनफिट्सूत्रवृत्तिषु न दृष्टम्, छन्दसि च [ १।१० ] इत्यनेन गतार्थं च । उणादौ द्रुदक्षिभ्यामिनन् [ उ० २।५० ] इतीनन्नन्तो दक्षिणशब्दो व्युत्पादितः ।

* मैत्रायणीयसंहितायां सर्वत्र दिग्वाचको दक्षिणशब्द आद्युदात्त एवोपलभ्यते —दक्षिणा दिक् [१।५।४,२।७।२०,२।८।६] दक्षिणाया दिशा [१।४।२] ।

† निश्चित्य स्वरशास्त्रतत्त्वमखिलं भाष्यादिभिर्भास्करा-
चार्याद्यारचितं विभाव्य सुचिरं भाष्यं श्रुतीनामपि ।
यच्चाकाङ्क्षितमत्र नैव कथितं तत् प्रातिशाख्यादितः
संगृह्य ग्रथिता मुदेऽस्तु विदुषामेषाऽनवद्याकृतिः ॥

इति ग्रन्थकृत उपोद्घातश्लोकाद् वेदभाष्यशब्देन भट्टभास्करविरचितं भाष्यं प्रतीयते । तथाच तद्भाष्यम्—

"दक्षिणस्यादिगाख्यायाम् इति दक्षिणशब्द आद्युदात्तः" इति । पुनरपि रक्षःशब्दस्य स्वरप्रसङ्गेनोक्तं भट्टभास्करैः—"अयं चार्धर्चादित्वादुभयलिङ्गः । तत्र नपुंसकत्वे नब्विषयस्यानिसन्तस्य इत्याद्युदात्तत्वम् । यथा 'रक्षसामपहत्यै' 'रक्षांसि जिघांसन्ति' इति । पुंलिङ्गे अस्य त्वन्तोदात्तत्वं भवति । यथा रक्षसः पाह्यस्मानित्यादौ । एवमस्यापि पुंलिङ्गत्वादन्तोदात्तत्वम् । नब्विषयस्य इति नियमेन नित्स्वरो बाध्यते । यथा 'दक्षेरिनन् विधीयते' इति दक्षिणशब्देनान्तोदात्तेन भवितव्यम् । यथा 'दक्षिणा दिक् । इन्द्रो देवता' [ तै० ब्रा० २।३।२ ] इत्यादौ । दक्षिणस्यादिगाख्यायाम् इति नियमात्

कृष्णस्यामृगाख्या चेत् ॥११॥

प्र० । वर्णानाम् —[ २।१० ] इत्याद्युदात्तत्वे प्राप्तेऽन्त उदात्तः । कृष्णः । मृगाख्यायां तु कृष्णो रात्र्यै ।

श० । वर्णानां तण—[ २।१० ] इत्याद्युदात्तत्वे प्राप्तेऽन्तोदात्तो विधीयते । कृष्णानां व्रीहीणाम् [तै० सं० १।८।९।६] कृष्णो नोनाव वृषभः [ऋ० सं० १।७९।२] । मृगाख्यायां तु कृष्णो रात्र्यै [वा० सं० २४।३६] ।

फि० वृ० । कृष्णशब्दस्य छन्दसि विषयेऽन्त उदात्तो भवति, मृगाख्या चेन्न भवति । कृष्णानां व्रीहीणाम् [ तै० सं० १।८।९।१ ] । कृष्णो नोनाव वृषभो यदीदम् [ ऋ० सं० १।७९।२ ] । छन्दसीत्येव* । कृष्णो वृषभः† । अमृगाख्या चेदिति किम् । कृष्णो मृगः । आख्याग्रहणं किम् । कृष्णो महिषः ।

---

दिगाख्याया अन्यत्राद्युदात्तत्वम् । यथा 'दक्षिणां प्रतिग्रहीष्यन्' 'आ प्रयच्छ दक्षिणात्' इत्यादिषु" इति । इन्द्रस्य बाहुरसि दक्षिणः [ तै० सं० १।१।६, ११ ] इत्यत्र भट्टभास्करैरुक्तम्—"स्वाङ्गाख्यायामादिर्वा इति दक्षिणशब्द आद्युदात्तः" इति ।

* मैत्रायणीयसंहितायाम् एतद्वै पाप्मनो रूपं यत् कृष्णम्, कृष्ण इव हि पाप्मा' [२ ५।६] इत्यादिषु कृष्णशब्दोऽन्तोदात्तः, कृष्णो वै भूत्वाग्निरश्वं प्राविशत् [३।१।४] इत्यादिषु पुनराद्युदात्तः ।

† 'कृष्णशब्दस्य...वृषभः' इत्येतस्य स्थाने B पुस्तके 'कृष्णस्यामृगाख्या चेदन्त उदात्तो भवति छन्दसि विषये । कृष्णं निपानम् । कृष्णो नोनाव वृषभो यदीदम् । छन्दसीति किम् । कृष्णो विषाणवान् ।' इति पाठः ।

स्व० । छन्दसि अन्तः इत्येव । कृष्णानां व्रीहीणाम् [तै० सं० १।८।६।१] कृष्णो नोनाव [ तै० सं० ३।१।११।५ ]। मृगाख्यायां तु। कृष्णोऽस्याखरेष्ठः [ तै० सं० १।१।११।१ ] कृष्णो रात्रियै [ तै० सं० ५।५।१५।१ ]। वर्णानां तणति—[ २।१० ] इत्याद्युदात्तत्वम्। लोकेऽप्येवम् * ।

## वा नामधेयस्य ॥१२॥

प्र० । कृष्णस्य । अयं वां कृष्णः [ ऋ० सं० ८।८५।३ ]। कृष्ण ऋषिः ।

श० । कृष्णस्येत्येव । अयं वां कृष्णो अश्विना [ ऋ० सं० ८।८५।३ ] कृष्ण ऋषिः ।

फि० वृ० । कृष्णस्य नामधेयस्य वान्त उदात्तो भवति । कृष्णो नामायम्† ।

---

* अन्यतो ङीष् [ ४।१।४० ] इत्यत्र न्यासकृद्भिरुक्तम्—"इण्भीकापाशल्यर्तिमर्चिभ्यः कन्" ... "इणषिभिदीङुष्यविभ्यो नक्" इत्यतो नगित्यनुवर्तमाने "कृषेर्वर्णे" इति नक्। प्रत्ययस्वरेणान्तोदात्तः कृष्णशब्दः" इति। मुद्रितन्यासेऽत्र कर्णो वर्णलक्षणात् [ ६।२।११२ ] इत्यत्र च यः पाठ उपलभ्यते स व्यक्तमेव प्रामादिकः। वर्णो वर्णेष्वनेते [ पा० ६।२।३ ] इत्यत्र पदमञ्जरीकृद्भिः कृष्णशब्दो 'नक्प्रत्ययान्तोऽन्तोदात्तः' इति काशिकाप्रतीकमुपादायोक्तम्—"फिषि तु 'कृष्णस्यामृगाख्या चेत्' इति छन्दस्यन्तोदात्तत्वमन्यत्राद्युदात्तत्वं व्यवस्थितम्" इति। यच्च प्राकृतप्रकाशे कृष्णे वा [ ३।६१ ] इति सूत्रमुपलभ्यते। यच्च व्याख्यायते—व्यवस्थितविभाषेयम्। तेन वर्णे नित्यं विप्रकर्षः। विष्णौ तु न भवत्येव इति तत्र स्वरभेदादन्यदेव बीजं मन्यन्ते प्राकृततत्त्वज्ञाः।

† 'कृष्णस्य स्तुवतः' इत्यधिकम् B

स्व० । कृष्णस्य इत्येव । कृष्णो नाम कश्चित् । पक्षे आदिरुदात्तः । उणादौ कृषेर्वर्णे [ उ० ३।४ ] इति नक्प्रत्ययेऽन्तोदात्तः कृष्णशब्दो व्युत्पादितः ।

## शुक्लगौरयोरादिः ॥१३॥

प्र० । नित्यमुदात्तः । शुक्लस्य फिषोऽन्तोदात्तत्वे [ १।१ ] गौरस्य च प्रज्ञाद्यणन्तस्य [ पा० ५।४।३८ ] अन्तोदात्तत्वे प्राप्ते । शुक्लः । गौरः ।

श० । नित्यमुदात्तः स्यादित्येके । वेत्यनुवर्तते इति तु युक्तम् । सरो गौरो यथा पिब [ ऋ० सं० ८।४६।२ ] इत्यादावन्तोदात्तदर्शनात् ।

फि० वृ० । नामधेयस्येति वर्तते । शुक्ल गौर इत्येतयोर्नामधेययोर्वादिरुदात्तो भवति । शुक्लो [ शुक्लो ] नामायम् । [ गौरो ] गौरो नामायम् । *नामधेयस्येत्येव । शुक्लः पटः । गौरः पुरुषः ॥१३॥

स्व० । नामधेयस्येति वर्तते । वेति निवृत्तमित्येके । अनुवर्तत इति युक्तम् । सरो गौरो यथा पिब [ ऋ० सं ८।४५।२४ ], गौरमारण्यम् [ तै० सं० ४।१।२०।२ ], गौरः पुरुषराजाय [ तै० सं० ५।५।११।१ ] इत्यादावन्तोदात्तत्वदर्शनादित्यपरे । शुक्लगौरशब्दावुणादौ ऋज्रेन्द्र—[ उ० २।२८ ] इति सूत्रेण रन्नन्तौ निपातितौ । उपाद द्व्यजजिनम्—[ पा० ६।२।१६४ ] इत्यत्र तु गुरी उद्यमने इत्यतः पचाद्यचि तदन्तात् प्रज्ञाद्यण् गौरः इति हरदत्तः ।†

---

* 'नामधेयस्य...पुरुषः' B पुस्तके नास्ति ।

† गुरी उद्यमे । एतस्मादच् । तदन्तादपि प्रज्ञादेरवृत्करणात् प्रज्ञादिभ्यश्चेत्यण् [ पा० ५।४।३८ ] । तेन गौरोऽन्तोदान्त इति न्यासः । पञ्चपाद्यां किशोरादयश्च [ उ० १।६६ ] इति सूत्रवृत्तावपि गौरशब्द उपलभ्यते ।

अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः* ॥१४॥

प्र० । उदात्तः । अङ्गुष्ठः । उदकम् । वकः । वशा ।

शा० । अङ्गुष्ठस्य स्वाङ्गानामकुर्वादीनाम् [ ३।३ ] इति द्वितीयस्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थं आरम्भः । वशाग्रहणं नियमार्थम् । छन्दस्येवेति । तेन लोक आद्युदात्ततेत्याहुः ।

फि० वृ० । [१]अङ्गुष्ठ उदक बक वशा इत्येतेषां छन्दस्यन्त उदात्तो भवति ।
अङ्गुष्ठ । अङ्गुल्याङ्गुष्ठं गृह्णीयात् । उदक । तस्मादुदकमुच्यते [अ० सं०

---

* फिट्सूत्रवृत्तौ 'छन्दसि' इत्येवोपलभ्यते, तत्र मण्डूकप्लुतिन्यायेन 'अन्तः' इत्यनुवर्तते इति बोध्यम् ।

[१] अङ्गुष्ठमुपनिगृह्णाति A अङ्गुल्यामङ्गुष्ठमवगृह्णीयात् B शतपथब्राह्मणेऽङ्गुष्ठशब्दो मध्योदात्त उपलभ्यते । तैत्तिरीयारण्यके अङ्गुष्ठं न समाश्रितः [१०।३८।१] इत्यत्र पुनरन्तोदात्तः । अङ्गुष्ठादीनां साहचर्याद् वशाशब्दोऽत्र मूर्तपदार्थवाची गृह्यते । तेनेच्छार्थकस्य वशाशब्दस्याद्युदात्तत्वेऽपि न क्षतिः । एवञ्च वशा हि सत्या वरुणस्य राज्ञः [अ० सं० २।१०।१] वीलुद्वेष अनु वश ऋणमाददिः ऋ० सं० २।२४।१३] इत्यादयः प्रयोगा उपपद्यन्ते । त्वं नो असि भारताग्ने वशाभिरुक्षभिः । अष्टापदीभिराहुतः ॥ [ऋ० सं० २।७।५] इत्यादौ प्राणिवाचित्वादन्तोदात्तत्वम् । "मान्दा वशा ज्योतिष्मतीः" [मै० सं० २।४।७] इत्यादिषु त्वामन्त्रिताद्युदात्तत्वं बोद्धव्यम् ।

वशाशब्दस्य निर्वचनं मैत्रायणीयसंहितायामित्थं प्रदर्शितम्—छन्दांसि वै यज्ञाय नातिष्ठन्त । स वषट्कारोऽभिहृत्य गायत्र्याः शिरोऽच्छिनत् । तस्माच्छीर्ष्णश्छिन्नाद् यो रसोऽक्षरत् ता वशा अभवन् । तद्वशानां वशात्वम् । अथो आहुर्वशं वै ता अक्षरंस्ता वशा अभवन् । तद्वशानां वशात्वम् इति । अथो आहुर्वसा वै सासीदिति तद्वसा वा एता इति । [ मै० सं० २।५।७ ] ।

३।१२।४, तं० सं० ५।६।१।३] । बक । वको वै दाल्भ्यः । बकोऽन्यः । वशा । वशा माता राजन्यस्य* [ अ० सं० १०।१०।१८ ] । वशान्या ।

ख० । अन्त उदात्तः इत्येव । सर्वाङ्गुष्ठम् [ तै० सं० ६।१।६।५ ] । स्वाङ्गानामकुर्वादीनाम् [ ३।३ ] इति द्वितीयस्योदात्तत्वं प्राप्तम् । तस्मादुदकमुच्यते [ तै० सं० ५।६।१।३ ] । कर्दमादित्वात् [ ३।१६ ] आद्यद्वितीययोः पर्यायेणोदात्तत्वे प्राप्ते । वको वै दाल्भ्यः †। प्राणिनां कुपूर्वम् [ २।७ ] इति कवर्गात् पूर्वस्योदात्तत्वे प्राप्ते । वशा मेषा अपसुष्ठासः [ तै० ब्रा० १४।२।२ ] । वशाग्रहणं छन्दस्येव इति नियमार्थम् । तेन लोकेऽय-

---

* वशा माता राजन्यस्य वशा माता स्वधे तव ।
वशाया यज्ञ आयुधं ततश्चित्तमजायत ॥

इति समग्रो मन्त्रः ।

† मुद्रिते काठके "तान् बको दाल्भिरब्रवीत्" [ १०।६ ] इत्युपलभ्यते । परमधन्यतयास्माकमत्र स्वरचिह्नानि नोपलभ्यन्ते । 'केशिनो दाल्भ्यस्य' [का० सं० ३०।२ ] इत्यत्र दाल्भ्यशब्दोऽपि श्रूयते । छान्दोग्योपनिषदि [ १।२।१३ ] "तेन तं ह वको दाल्भ्यो विदाञ्चकार" इत्याम्नायते । परं 'वको वै दाल्भ्यः' इत्येतस्य मूलं नोपलब्धमस्माभिः । यथा च नः प्रतिभाति तथा तिरश्च एव बकस्यात्र ग्रहणम् । तेन भाषायां प्राणिनां च कुपूर्वाणाम् [ २।७ ] इति सूत्रेण बकशब्दस्याद्युदात्तत्वं छन्दसि पुनरन्तोदात्तत्वम् । "बकशब्दः प्राणिनां कुपूर्वाणाम् इत्याद्युदात्तः" इति पदमञ्जरी ।

माद्युदात्त इत्याहुः । सुपि स्थः [ पा० ३।२।४ ] इति कः । अम्बाम्ब— [पा० ८।३।६७ ] इति षत्वम् । अङ्गुष्ठः । क्वुन्नन्त उदकशब्दः । क्वुन्प्रकरणे उदकं च [ उ० २।३६ ] इत्युणादिसूत्रात् । तत्र 'अयमन्तोदात्तो निपात्यते' इति स्वरमञ्जर्याम् । तच्चिन्त्यम्* ॥

---

* स्वरमञ्जर्या हस्तलिखितं पुस्तकद्वयमस्मत्सविधे वर्तते । तत्रैकस्मिन्— उदकम् । उदकमिति कु [ क्वुन् ] प्रत्ययान्तो निपात्यते । उन्दी क्लेदने । उनत्तीत्युदकम् । तस्मादुदकमुच्यते । निपातत्वादादानिपातः [ निपातना-दन्तोदात्तः ] इति पाठः । अपरस्मिन् पुनः—उदकं च । क्वुन्प्रत्ययान्तो निपात्यते । उदानिषुर्महीरिति तस्मादुदकमुच्यते । निपातनादन्तोदात्तः इति पाठः ; स्वरमञ्जरीपरिमले प्रायेणोणादिप्रकरणमधिकृत्य किमपि विशेषतो नोक्तम् । उज्ज्वलदत्तेनाप्युणादिवृत्तौ निपात्यते इत्युक्तम् ।

अत्र क्वुन्प्रत्ययान्तत्वेन ञ्नित्यादिर्नित्यम् [ पा० ६।१।१९७ ] इति सूत्रेण नित्स्वादाद्युदात्तत्वे प्राप्ते निपातनादन्तोदात्तत्वम् इति चिन्ताबीजं न जानीमः । वस्तुतस्तु स्वरसिद्धान्तचन्द्रिकाकारस्य मञ्जरीकृतां परिमलकृतांश्चोपरि प्रद्वेष एवासीदिति प्रतीयते । तथाच चन्द्रिकाप्रारम्भ एवोक्तम्—

अथ दोषाः कतिपये गण्यन्ते स्वारमञ्जराः ।
अपेक्षितस्यावचनमनपेक्षितकीर्तनम् ॥
तथाभाससमाधानमनाशङ्क्यस्य शङ्कनम् ।
अपसिद्धान्तकथनं तथानन्वितकीर्तनम् ॥
परस्परविरुद्धत्वं स्वोक्तीनामेव च क्वचित् ।
व्युत्क्रमेण च सूत्राणां कथनं निष्प्रयोजनम् ॥
अनाञ्जस्यं विभागस्येत्याद्या दोषाः परिस्फुटाः ।
बहूनां पाणिनीयानां सूत्राणामविवेचनम् ॥
फिट्सूत्रस्यावर्णनं चापेक्षितानवबोधनम् ।
न च वेदोदाहरणमेषां नेत्यविवेचनम् ॥

पृष्ठस्य च ॥१५॥

प्र० । छन्दस्यन्त उदात्तः । पृष्ठमुपदधाति ।

श० । छन्दस्यन्त उदात्तः स्यात् ।

---

उदाहरिष्यमाणत्वाद्बह्वनामेष्वपि श्रुतौ ।
उदाहृतय एता हि वेदभाष्येऽप्युदीरिताः ॥
द्वन्द्वो नैकाधिकरणवचनो युगपद्भवेत् ।
इत्यादिसाधनं यत्तदनपेक्षितकीर्तनम् ॥
न हि कश्चिद्विशेषोऽस्माद्विचाराद्विद्यते स्वरे ।
स्थानिवन्नागमादेशो भवेदिति यदीरितम् ॥
यत्रैव देवताभाव एकस्मिन् हविषि द्वयोः ।
तत्रैव देवताद्वन्द्वस्वर इत्यपि जल्पितम् ॥
बह्वेवमादिकं ज्ञेयमपसिद्धान्तकीर्तनम् ।
अन्येऽपि दोषास्तद्ग्रन्थद्रष्टृभिः सुगमा इति ॥
वक्ष्यते चोत्तरत्रेति क्रियते नात्र विस्तरः ।
ये दोषाः स्वरमञ्जर्यां ते तद्विवरणेऽपि च ॥
अतः प्रचोदयति मां कृतावस्यां गुरोः कृपा ।
विद्वांसः श्रोतुमर्हन्ति तामेतां वीतमत्सराः ॥

इति ।

सिद्धान्तकौमुद्यान्तु विद्यमाना अपि केचन दोषाश्चन्द्रिकाकारस्य मतेनादोषा एव । तथा चोक्तम्—

"नापि सिद्धान्तकौमुद्यां कार्त्स्न्येनैषा निरूपिता ।
सन्त्येव दुष्परिहरा दोषास्तत्रापि पञ्चषाः ॥
अदोषानेव तान्मन्ये गच्छतः स्खलनं यथा ॥"

इत्यलमतिविस्तरेण ।

मृष्टस्य* च ॥१५॥

फि० वृ० । छन्दसि मृष्टस्यान्त उदात्तो भवति । शक्यों मृष्टा मया भवन्ति† ।

स्व० । छन्दस्यन्त उदात्तः । पृष्ठे निनद्धः [ ऋ० सं० ६।७५।५ ] । स्वाङ्गमिति [ २।६ ] प्राप्तम् ॥

वा भाषायाम्‡ ॥१६॥

प्र० । पृष्ठम् पृष्ठम् ।

श० । भाषामात्रविषयं सूत्रमिदं प्रागेकादशभ्योऽच्छन्दसि [पा० ५।३।४६] कत्युपोत्तमम् [ पा० ६।१।१८०] विभाषा भाषायाम् [पा० ६।१।१८१] इत्यादिवत् । पृष्ठम् ।

फि० वृ० । भाषायां मृष्टस्य वान्त उदात्तो भवति । मृष्टः । मृष्टः ।

---

* फिट्सूत्रवृत्तौ मृष्टस्य च इति पाठ उपलभ्यते, कौमुद्यादिव्याख्याकृद्भिरपि पाठान्तरमिदमुल्लिख्यते । मृष्टपृष्ठयोः कतरः पाठः साधीयानिति विचारे मृष्टशब्दस्य प्रत्ययस्वरेणान्तोदात्तत्वात् निष्ठा च द्व्यजनात् [ पा० ६।२।२०५ ] इति सूत्रस्य संज्ञामात्रविषयत्वात् संज्ञायामपि छन्दसि मृष्टशब्दस्यान्तोदात्तत्वसन्दर्शनात् पृष्ठशब्दस्य च स्वाङ्गशिटामदन्तानाम् [ २।६ ] इति फिट्सूत्रेणैवाद्युदात्तत्वप्राप्तेस्तदपवादतया मृष्टस्य इत्येव पाठः समीचीनतया प्रतिभाति ।

† शक्यें इत्यादि A पुस्तके नास्ति । शर्वैर्ये इत्यादि K । पृष्ठस्य छन्दस्यन्त उदात्तो भवति । शक्यैः पृष्ठं भवति अपापृष्ठमसि B.

‡ तिथपृष्ठगूथयूथप्रोथाः [ उ० २।१२ ] इत्युणादिसूत्रतस्तु भाषायामपि पृष्ठशब्दस्यान्तोदात्तत्वं सिध्यति । न्यासकृतापि उपसर्गात् स्वाङ्गं ध्रुवमपर्शु [ पा० ६।२।१७७ ] इत्यत्रोक्तम्—पृष्ठशब्दोऽन्तोदात्तः । पृषु मृषु वृषु सेचने इत्यस्य थकि व्युत्पादितत्वात् इति ।

स्व० । पृष्ठस्य इत्येव । उणादौ तिथपृष्ठ—[ उ० २।१२ ] इति थगन्तोऽयं निपातितः । "मृष्टस्य च वा भाषायाम्" इति केचित् पठन्ति ॥

अर्जुनस्य तृणाख्यायाम्* ॥१७॥

प्र० । अन्त उदात्तः । अर्जुनानि तृणानि ।

श० । उनर्वन्नन्तानाम् [ २।६ ] इत्याद्युदात्तत्वस्यापवादः ।

फि० वृ० । अर्जुनस्य तृणाख्यायामन्त उदात्तो भवति । अर्जुनानि तृणानि । तृणग्रहणं किम् । अर्जुनो वृक्षः । आख्याग्रहणं किम् । अर्जुनः शष्पः† ॥

---

* यद्यपि A पुस्तके 'अर्जुनस्य तृणाख्या चेत्' इति पाठः, तथापि वृत्तौ "तृणाख्यायाम्" इति दर्शनात् "अर्जुनस्य तृणाख्यायाम्" इत्येव पाठो वृत्तिकारसम्मत इति प्रतिभाति ।

† अर्जुनो वंशः B अर्जुनसखः K । अत्र अर्जुनशब्दस्य तृणवाचित्वेऽन्तोदात्तत्वं विहितम् । तस्य चोदाहरणमुपन्यस्तम् अर्जुनानि इति । सोमस्यौषधिराजस्य प्रतिनिधिस्तृणविशेषोऽर्जुनशब्देनोच्यते इति याज्ञिकाः । ततश्च तृणशब्दस्य व्यावृत्तिरुदाहृता अर्जुन इति । अर्थश्च प्रदर्शितो वृक्ष इति । अर्जुनशब्दस्य ककुभापरपर्यायवृक्षविशेषबोधकत्वे नान्तोदात्तत्वम्, प्रत्युत उनर्वन्नन्तानाम् इत्याद्युदात्तत्वम् इत्याशयः । इदानीम् आख्याशब्दस्य व्यावृत्तिः प्रदर्श्यते—आख्याग्रहणं किमित्यादिना । अर्जुनशब्दो यदा तृणविशेषस्य संज्ञा न भवति, केवलं विशेषणविधया तृणं प्रतिपादयति तदा तृणं बोधयन्नपि तृणाख्यामननुभवन्नन्तोदात्तत्वं न भजते । यथा शुभ्रवर्णं तृणं वर्णयता केनाप्युक्तम्—अर्जुनः शष्प इति । पूर्वयोरुदाहरणयोस्तृणानि वृक्ष इति च पदद्वयमुदहारणैकदेशत्वेन न भ्रमितव्यम् । अत्र पुनः शष्पशब्द उदाहरणस्याङ्गमेव । एवञ्च अर्जुनो वंश इति वा अर्जुनसख इति वा पाठो नादृतोऽस्माभिः ।

स्व० । अन्त उदात्तः । वृत्तविशेषे तु उनर्वन्नन्तानाम् [ २।६ ] इत्याद्युदात्तः । उणादावपि अर्जेर्णिलुक् च [ उ० ३।५८ ] इत्युनन्तमर्जुनशब्दं व्युत्पाद्य तृणाख्यायां चित्* [ उ० ३।५६ ] इति सूत्रेण तृणे चिद्भाव उनन्प्रत्ययस्योक्तः ॥

## अर्यस्य† स्वाम्याख्या चेत् ॥१८॥

प्र० । अर्यः स्वामी ।

श० । यान्तस्यान्तात् पूर्वम् [ ३।१६ ] इति यतोऽनावः [ पा० ६।१।२१३ ] इति वाद्युदात्तत्वे प्राप्ते वचनम्‡ ।

फि० वृ० । अर्यस्यान्त¶ उदात्तो भवति स्वाम्याख्या चेत् । अर्यः स्वामी । स्वाम्याख्या चेदिति किम् । अर्यो वैश्यः । आख्याग्रहणं किम् । अर्य एव स्वामी । अर्य एव वैश्यः§ ॥

---

* अत्रोज्ज्वलदत्तः—"अर्जयतेरेव तृणाख्यायामुनन् चिद्वद् भवति । अन्तोदात्तोऽर्जुनस्तृणे । 'फिषोऽन्त उदात्तः' इत्यधिकृत्य 'अर्जुनस्य तृणाख्या चेत्' इति फिट्सूत्रम्" इति ।

† आर्य स्वाम्याख्या A

‡ एतच्च "एकमुनि व्याकरणम्" इति पक्षे बोद्धव्यम्, स्वामिन्यन्तोदात्तत्वं च [ ३।१।१०३।१ ] इति वार्त्तिकेनैवान्तोदात्तत्वस्यात्र विहितत्वात् ।

¶ आर्यशब्दस्यान्त A

§ यद्यपि स्वामी आर्य एव वैश्यः । A

यद्यपि स्वामी यः अर्य एव वैश्यः । B

अर्यः स्वामिवैश्ययोः [पा० ३।१।१०३] इत्यत्र काशिकायां स्वामिन्यन्तोदात्तत्वञ्च इति वार्त्तिकं व्याचक्षाणैः पदमञ्जरीकृद्भिरुक्तम्—अथ यो वैश्यः स्वामी च तत्र कथम् । उच्यते । वैश्याख्यायामाद्युदात्तत्वं स्वाम्याख्यायामन्तोदात्तत्वम् । तथा च अर्यस्य स्वाम्याख्यायाम् [१।१८] इति फिट्सूत्रे आख्याग्रहणं कृतम् इति ।

स्व०। अग्ने विश्वान्यर्य आ [ ऋ० सं० १०।१९१।१]। समर्य आ विदथे वर्धमानः [ ऋ० सं० ३।८।५ ]। अर्यः स्वामिवैश्ययोः [ पा० ३।१।१०३ ]। वैश्ये तु यच्छूद्रे यदर्ये [ वा० सं० २०।२१, तै० सं० १।८।३।१ ] इत्यत्र यान्तस्यान्त्यात् पूर्वम् [३।१३] इत्याद्युदात्तत्वम्, यतोऽनावः [पा० ६।१।२१३] इति च न, व्यत्ययात्* ॥

## आशाया अदिगाख्या चेत् ॥१९॥

प्र०। आशायामदिगाख्या चेत्। अन्त उदात्तः। आशा।

---

* अर्यशब्द ऋग्वेद आथर्वणे चान्तोदात्त एवोपलभ्यते, केवलमृग्वेदे सकृदन्तस्वरितः सन्दृश्यते। सर्वत्रैव पूजार्ह इत्यर्थः। तैत्तिरीयादिसंहितायामन्तोदात्तः सकृदन्तस्वरितश्चाम्नायते।

समर्यो गा अजति यस्य वष्टि [ ऋ० सं० १।३३।३]

संसमिद् युवसे वृषन्नग्ने विश्वान्यर्य आ [ अ० सं० ६।६३।४ ]

उभयत्रापि भाष्ये फिट्सूत्रमिदमुद्धृतम्।

कृष्णादुदस्थादर्या३विहायाः [ ऋ० सं० १।१२३।१ ]

अत्र स्त्रियां वर्तमानोऽर्याशब्दोऽन्तस्वरितः। भाष्यकृद्भिः स्वरविषये किमपि नोक्तम्।

ता हि देवानामसुरा तावर्या [ ऋ० सं० ७।६५।२ ]

अत्र द्विवचननिष्पन्नोऽर्याशब्दोऽन्तोदात्तः।

यथा तव्यप्रत्यय आद्युदात्तश्चान्तस्वरितश्च दृश्यते, अत एव वैयाकरणैस्तव्यत्-तव्यलक्षणं प्रत्ययद्वितयमास्थितम्, तथात्रापि बोद्धव्यम्।

शा० कौ० । दिगाख्याव्यावृत्त्यर्थमिदम् । अत एव ज्ञापकाद् दिक्पर्यायस्याद्युदात्तता । इन्द्र आशाभ्यस्परि......[ ऋ० सं० २।४१।१२ ] ।

फि० वृ० । दिश आख्या दिगाख्या । सा चेन्न भवति तदाशाशब्दस्यान्त उदात्तो भवति । यामाशामधिकाम्* । अदिगाख्या चेदिति किम् । आशामाशां विद्योततें† । आख्याग्रहणं किम् । आशामेति दक्षिणाम्‡ ॥

स्व० । आशायै जामिम् [ तै० ब्रा० ३।४।१६।३ ] । आशा तृष्णा । दिगाख्यायां त्वत एव ज्ञापकादाद्युदात्तत्वम् § । आशानां त्वाशापालेभ्यः [ तै० ब्रा० २।५।३।३ ] । तमाशाब्रवीत् [तै० ब्रा० ३।१२।२।२] इत्यादौ तु क्वचिद-

* एतस्य मूलं मृग्यम् । यथास्माभिर्ज्ञायते तथा संहितादिष्वधिकशब्दो नैवोपलभ्यते । आथर्वणे [ १६।४।२ ] यामाशामेमि केवली इति श्रूयते ।

† आशामाशां वि द्योततां वाता वान्तु दिशो दिशः ।
मरुद्भिः प्रच्युता मेघा सं यन्तु पृथिवीमनु ॥

इत्याथर्वणे [ अ० सं० ४।१५।८ ] विद्योततामित्याम्नायते ।

‡ लौकिकमिवेदं प्रतिभाति वाक्यम् ।

§ वाजसनेयिप्रातिशाख्ये "सर्वविश्व मानुषाशाः स्वाहा वाजः पयो नमः" [ २।३६ ] इति सूत्रेणाविशेषेणैवाशाशब्दस्याद्युदात्तत्वं विहितम् । चतुरध्यायिकायां पुनः "आशा दिशि न" [४।१२] इति सूत्रेण दिग्वाचकस्याशाशब्दास्यावग्रहाभाव उपदिष्टः । आथर्वणप्रातिशाख्येऽप्युक्तम्—

चित्रवर्णधरवैजयन्तिका वातवेगपरिधूनिता भृशं ।
सूरतापितपुरोषवीजनं कुर्वतीव दिवसे व्यराजत ॥८॥
तोरणोपरि मृगेन्द्रमूर्तयः शत्रुवारणनिवारिकाः किमु ।
यद्विलोकनवशात् ससाध्वसा बालका गुरुजनाङ्कमाश्रिताः ॥९॥
नीलपीतसितशोणवर्णकैस्तत्र हर्म्यनिकरः सुचित्रितः ।
शून्यचारि सुरनाथकामुकं लोकलोकनगतं सदाकरोत् ॥१०॥
प्रस्तरोपहितराजरथ्यया सन्ततं शकटमर्दशङ्कया ।
मानवा भयविशेषविह्वलाः कृत्यसाधनकृते कृतक्रमाः ॥११॥
गोणिकागणसमाचितान्तरा वाहिताः शकटिका गवादिभिः ।
पण्यभारभृतपण्यवीथिकां प्रापयन्ति कति पण्यसम्पदः ॥१२॥
आपणेषु कति वाऽवतारिता विक्रयार्थमिह वस्तुसञ्चयाः ।
दुष्प्रवेशमतिलोलमानसैः क्रेतृभिः प्रतिपदं पदं हि तत् ॥१३॥
आरकूट-कृत-पात्रसज्जयाऽमज्जयद्विपणिरन्तरं भ्रमे ।
नूतनो विपणिमार्गमाश्रितः स्वर्णपात्रमयमन्वबुध्यत ॥१४॥
कांस्यकल्पितसुरम्यवस्तुभिस्तत्र तामस-निशापि सप्रभा ।
नैशतामसनिवृत्तये ततो दीपदानविधिरप्यसत्फलः ॥१५॥
राजताभरणभारभूषिता भूषणापणगृहाः प्रदीपिताः ।
दीपकैः प्रतिनिशं सुधात्विषः कौमुदीभिरिव धौतविग्रहाः ॥१६॥
खट्विका रजतसारसम्भृता रम्यपादनिहिता सुरोचिता ।
दण्डशोभिकृतवल्लिमण्डिता कृत्रिमैः कुसुमकैः सुशोभिता ॥१७॥
गन्धनीरपरिवेशयन्त्रकं चारुकृत्रिमलतान्तसज्जितम् ।
रौप्यदण्डमयचारुचामरं भित्तिलग्नमभि नागदन्तकम् ॥१८॥
स्तम्भकोपरिग-पीठशायिनः पक्षिणो रजतराजिनिर्मिताः ।
पार्श्वतःप्रसृतपक्षयुग्मकाः प्राणिनामिव समानतां दधुः ॥१९॥
तत्र पात्र-शतशोभितापणे पण्यसंग्रहविधिं विधित्सवः ।
स्पर्धया धनिगणाः सकामनाः सङ्गता निबिडतां प्रचक्रिरे ॥२०॥

विश्रमागमवतां रसैषिणां सञ्चयो ललितमञ्चसेविनाम् ।
मुग्धवारवनिताप्रसक्तये वस्तुजातमिह सम्पणायते ॥२१॥
पुष्पपण्यगणसम्भृते पदे सम्पदां वसतिभावनास्पदे ।
उत्तमोत्तमलतान्तलोभिनाम् आग्रहेण कलहो व्यजायत ॥२२॥
सौरभेण परितः समाकुलाः सत्कला भ्रमरबान्धवा नु ये ।
तत्समाक्रमणतो विलासिनः पुष्पमर्षणविधौ पराङ्मुखाः ॥२३॥
अन्तरा निहितनीलनीरजे मालतीकुसुमशुभ्रगुच्छके ।
कृष्णसारकृतकम्रलक्ष्मणः कान्तिराविरभवत् सितद्युतेः ॥२४॥
सम्मुखे सुघटपुष्पमालया सङ्गताथ शशलाञ्छनश्रिया ।
सा द्विधा कुसुमविक्रयावनी लोकलोचनमनोहराऽभवत् ॥२५॥
निर्धना कुसुमसौरभोत्सुकाः सौरभस्थितिपरीक्षणच्छलात् ।
घ्राणगोचरमचारयन्नमी पुष्पजातमभितो विलासिनः ॥२६॥
कौसुमं मुकुटमन्तरान्तरा सन्निवेशितमशोभत प्रियम् ।
कामिनीगणशिरोजभूषणं शासनं रतिपतेरिवाभवत् ॥२७॥
तत् पुरं मधुरगन्धबन्धुरं भृङ्गचापलविधानमेदुरम् ।
पुण्यसम्पदमिवाश्रिताश्चिरं भुञ्जते सपदि सौरमन्दिरम् ॥२८॥
नातिदूरमथ भूषणोज्ज्वलाश्चित्रकञ्चुकदुकूलसङ्कुलाः ।
यत्र वारवनिता विलोकिता हर्म्यलम्बितमलिन्दमाश्रिताः ॥२९॥
कापि रम्यतमकम्बलासने चारुविश्रमविधानसाधने ।
नागरोपचरिता क्षणे क्षणे नृत्यगीतकरणे मनो दधे ॥३०॥
काचिदिन्दुकरसुन्दराम्बरा कापि नीलवसना कलावती ।
कापि पुष्पमयमञ्जुभूषणा कापि मौक्तिकसुवर्णशालिनी ॥३१॥
कुत्रचिन्मधुरमन्दिरोदरे कोमलस्वरपरार्ध्यचातुरी ।
रागमूर्तिरिव रागिणां रसं मानसे कमपि कोमलं व्यधात् ॥३२॥
दीपिकाद्युतिभिरुज्ज्वलान्तरे पूर्णिमागगनतुल्यभासुरे
कुत्रचित् पणवधूगृहोदरे नूपुरध्वनिरकर्णि कामिभिः ॥३३॥

नाट्यकेलिकलनाकलाजुषां तन्मयीकृतवती हृदो गतिम् ।
वाह्यवस्तुविनिवर्तनावशाद् ब्रह्मबोधमिव दातुमीहते ॥३४॥
वाद्ययन्त्रभवशब्दसम्भृता गीतिका ललितकण्ठनिःसृता ।
वायुपद्धतिमुपेत्य नित्यशो विस्मृतस्मरणसाधिकाभवत् ॥३५॥
कुत्रचिन्मृदु कुतोऽपि निर्भरं कुत्रचित् स्वरितशब्दसुन्दरम् ।
गीतकश्चरति शून्यपद्धतौ यन्त्रशब्दमनुसृत्य सर्वतः ॥३६॥
एष कोऽपि ललिताङ्गको युवा वेशभूषितवपुः पथि व्रजन् ।
हर्म्यसङ्कुतमलिन्दमाश्रितां वेशवासवनितां निरीक्षते ॥३७॥
तामवेक्ष्य मधुराङ्गबन्धनां लोकलज्जितमपि व्यसर्जयत् ।
कामकेशरिविजृम्भिते स्थिते चेतना हरिणशावकायते ॥३८॥
सापि मुग्धगणिका गणान्तरे तस्य चित्तपरिवृत्तिदर्शिनी ।
कामकोरकविकाशकारणं भावबन्धमनुबध्नती स्थिता ॥३९॥
युग्मकं समगत क्षणान्तरे विग्रहेण विनिमाय विग्रहम् ।
स्वप्रयत्नफलमीक्षितं यदा नृत्यमागयमभूत् स्मरस्तदा ॥४०॥
तत्र सन्निहितशुण्डिकालये तीक्ष्णगन्धमदिराप्रपूरिते ।
मत्तगीतिमुखरे सुखाकरे सायमाप्तविभवो महोत्सवः ॥४१॥
केऽपि भूरिमदिरानिषेवणान्मुग्धतामतितरामुपागताः ।
प्रायशः स्खलितभाषिताः स्थिता मद्यमुद्यतविकारसाधनम् ॥४२॥
केऽपि मत्तमनसो मनीषया मुक्ततामिव गता गतोत्सवाः ।
भूय एव मदिरोपयोगतः शौण्डिकं प्रवृणते मुदां कृते ॥४३॥
कोऽपि गायति यथेष्टशब्दितैः कोऽपि नृत्यति विशृङ्खलक्रमैः ।
कोऽपि वा वरसुरा प्रभावतो वार्धकेऽपि तरुणायते जनः ॥४४॥
शूल्यमुख्यमपि मांसमञ्जसा भृष्टमीनवलयश्च मत्तकैः ।
साधुभोज्यविधया निषेविते तृप्तिसूचकसहर्षकूजितैः ॥४५॥
आममांसविपणिः प्रसारिता छाग-मेष-हरिणादि-मांसकैः ।
विग्रहाः कति नु लम्बितास्ततः खण्डिताश्च कति विक्रयोचितम् ॥४६॥

भीमरूपविकटा हि शौनिका नो कृपालवमपि प्रवृण्वते ।
येन कातररवं विमुञ्चतो घ्नन्ति हन्त कृपणान् पशूनलम् ॥४७॥
नूनमेव पशुभिः पुराभवे हिंसया कलुषमाहृतं महत् ।
शौनिकैः कथमिवान्यथा तथा हिंसिता विषमदुःखभागिनः ॥४८॥
पश्चिमेन नगरं तरङ्गिणी निर्मलप्रभपयःप्रवाहिणी ।
तस्य काञ्चनपुरस्य विस्तृता कापि रम्यपरिखेव राजते ॥४९॥
तत्र वातपटसंयता तरी वातमार्गमनुयाति लीलया ।
पार्श्वविस्तृतपतत्रयुग्मकः शून्यमार्गमिव पत्रिणां चयः ॥५०॥
तीरभूमिमधिरुह्य पादपाः पादकुट्टरसपुष्टविग्रहाः ।
वीचिषु प्रहतविम्बतां गता भूरिवृद्धिमिव तेनिरे स्विकाम् ॥५१॥
भङ्गसङ्गतिविदीर्णतीरतः पादपाः कतिपये जलं गताः ।
आश्रयस्य कदने कथन्तराम् आश्रितस्य कदनव्यतिक्रमः ॥५२॥
अन्तरम्बुशिशुमारपङ्क्तयः स्थातुमल्पमपि कालमक्षमाः ।
नीरपूरसहिताः क्षणे क्षणे स्रोतसामुपरि बिभ्रति क्रमम् ॥५३॥
दूरवर्तिपरपारभूरुहा भान्ति चारुवरणेन सम्मिताः ।
दूरतैव विषमाग्रशाखिनाम् बोधयत्यविधुरां समाग्रताम् ॥५४॥
लोलवीचिकुलकेलिकौशलाद् वासनावशगमानसो भृशम् ।
अह्नि तीक्ष्णकिरणोऽनुविम्बितो नैकक्कायरचनामचारयत् ॥५५॥
कामिनीव ललिता तरङ्गिणी सूरमेवमनुरागिणं गता ।
वीचिबाहुभिरनेकतां गतैः श्लिष्यति प्रणयशब्दपूर्वकम् ॥५६॥
सागरस्य वनिता तरङ्गिणी सूर एष परपूरुषायते ।
तेन सूरसरितोः समागमे कम्प्रता परतमोपजायते ॥५७॥
नक्तमर्णसि तरीषु दीपिकास्तारका इव विभान्ति भासुराः ।
चञ्चलाम्भसि तदीयदीप्तयः प्रोज्ज्वलानलसमाः प्रतीयिरे ॥५८॥
तारकानिकरमप्सु विम्बितं दीपकञ्च समदीप्तिभास्वरम् ।
निर्णयेन न जनो विगाहितुम् शक्तिमेति निशि तीरभूगतः ॥५९॥

दूरवर्तितरणी सदीपिका यावदत्र चलिता स्थितापि वा ।
तावदेव न तरी निरूप्यते केवलं रुचिरदीपि दीपगा ॥६०॥
तत्र काञ्चनपुरे धनाकरे निर्धनो भुवि सुदेवनामकः ।
स्वीयपुत्रवनितादिभिः समं दुःखमेव समयं समापयत् ॥६१॥
प्रातरेव पुरि भिक्षणोत्सुको याति नित्यमधनो धनेश्वरान् ।
ते तु भूरि कदनानि कुर्वते कुत्सितैः प्रवचनैस्तदा तदा ॥६२॥
देहि मे परिजनायुषः कृते स्वल्पमात्रमपि दुःखिने धनम् ।
अन्यथा परिजनाः स्वजीवनं धारयन्तु कथमेव दुःखिताः ॥६३॥
भिक्षया किमपि पूर्ववासरे नाप्तमित्यनशना गृहे जनाः ।
साम्प्रतं शिशुगणः क्षुधावशाद् धूलिमात्रशयनो विचेष्टते ॥६४॥
क्षुत्प्रपीडिततया सुदुर्बला नैव ते चलितुमात्मना क्षमाः ।
पौरुषेण घटयन् सहिष्णुताम् एष कष्टमभितो व्रजाम्यहम् ॥६५॥
यूयमेव गतिरीदृशं गते केन वास्तु मम दुर्गतिक्षतिः ।
दीनपालनकृते विधेः कृतिः श्रीभराधरितनिर्जरेश्वराः ॥६६॥
देवताः स्वयमुपेत्य देहिनाम् अर्थदानमनघा न कुर्वते ।
द्वारमत्र धनिका विशेषतः पुण्यसञ्चयविशेषमानिनाः ॥६७॥
कृत्यमेव भवतां मनस्विनां दीनदुःखदलनं दयावशाम् ।
तत् कथं मयि नितान्तदुर्गते नास्ति हन्त करुणाप्रवर्तना ॥६८॥
अल्पमात्रधनदानकर्मणा कापि हानिरिह नो भवादृशाम् ।
तेन दुर्गतजनस्य रक्षणम् तत् कुरुध्वमुभयोर्विचारणाम् ॥६९॥
पूर्वकायपरिधारणाक्षमं यष्टिकोपकुरुते समेत्य माम् ।
सेव किन्न करुणा यशस्विनां मां सुदीनमधुनावलम्बते ॥७०॥
नो पदं चलति दुर्बलत्वतो नापि निःसरति वाङ् ममास्यतः ।
मस्तकं प्रतिपदं विघूर्णते निश्चिनोमि न गतिं स्थितिं तथा ॥७१॥
का गतिः किमधुना विधीयतां दुष्करं चरणचारणं मया ।
हा हतं परिजनः स्थितो गृहे मत्पथं सचकितं समीक्षते ॥७२॥

हा विधे ! किमिति दुर्विदग्धताम् आत्मनो वहसि मादृशे जने ।
पूर्वजन्मसु किमेव पातकं सञ्चितं विषमयं फलं यतः ॥७३॥
यद्यदा नहि धनं तदा कथं पुत्रमित्रवनितादिकानदाः ।
दीर्घमायुरपि मे सुदुःसहं सर्वमेव मम वेदनामयम् ॥७४॥
अद्य चेत् करुणया परिच्युतो जीवनं मम भवान वियोजयेत् ।
तद् गतिं नहि परां विलोकये दुःस्थितेषु परिवारबन्धुषु ॥७५॥
तत् कुरुष्व करुणानिधे विधे सर्वजीवनविमुक्तिमेकदा ।
तेन मे सपदि शान्तिरन्तरे सम्भविष्यति दयाऽस्तु दुर्गते ॥७६॥
दुर्गताः परिजनाः क्षुधातुरा हन्त मृत्युमुपयान्ति मे पुरः।
कीदृशो हतविधेर्विडम्बना हा हतं भुवि सममेव मे ॥७७॥
पुत्र तिष्ठ पलमुत्पलाक्षि मे दण्डमात्रमधुना भव स्थिरा ।
पुत्रि मृत्युविरसा भव क्षणम् भैक्ष्यमेष लघु सन्नयामि वः ॥७८॥
हन्त निष्फलवचो ब्रवीमि किं कोऽपि नोपलभते वदान्यताम् ।
नूनमद्य जरसार्दितस्य मे पुत्रदारमरणावलोकनम् ॥७९॥

इत्थं विलप्य बहु दीनजनानुरूपं
पुत्रादिमृत्युपरिभावनया विमूढः ।
देहं स्वकं भुवि विलुण्ठयति स्म तावद्
यष्टिः स्वयं निपतितेति न सापि वाच्या ॥८०॥

इति श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये
दरिद्रब्राह्मणभिक्षाटनं नाम पञ्चमसर्गः ।

---

## षष्ठ-सर्गः

अथ काञ्चनपत्तने भ्रमन् बहुधा कान्तिमसौ विलोकयन् ।
परिदृष्टसमस्तलोकया स्वदृशा देवमुनिः सुविस्मितः ॥१॥
परिमन्थरपादपातनैः परितो लोचनयुग्मचालनैः ।
पुरमार्गगतः क्रमेण स प्रतिपेदे द्विजमातुरं पुरः ॥२॥

स पुरा कृतविप्रशोभया निजचिह्नानि विलोप्य दीप्रया ।
न हि राजपथे समीयिवान् अपरेषामपि विस्मयं दधे ॥३॥
स्थविरत्वमुपेत्य कार्यतः स्थविरस्यास्य विमोहभागिनः ।
सविधे सदयं समागतः परिचर्याविधिना व्युपाचरत् ॥४॥
परिपूतकमण्डलुस्थितं सलिलं तस्य मुखे न्यषिच्यत ।
कृतमुत्तरवस्त्रवीजनं प्रतिबोधाय चिरं विमुह्यतः ॥५॥
अथ सम्प्रतिपाद्य चेतनाम् अतिवृत्तं निजवृत्तकं स्मरन् ।
सविधे स्थविरायितं मुनिं विलुलोकेऽर्द्धनिमीलितेक्षणः ॥६॥
असमग्रतया स चेतनाप्रतिलम्भान्मनसि व्यतर्कयत् ।
किमसौ परमार्थमानवः किमु वा स्वप्नदशाऽनुवर्त्तते ॥७॥
इह यत्नशतेन पत्तने न मयाऽलम्भि दयापरोऽपरः ।
किमयाचित एव साम्प्रतं मम सेवाव्रतमेष विन्दते ॥८॥
अथवा भगवत्कृपालवः सहसा कुत्र कया दिशाऽभ्वति ।
तदिदं नहि सुग्रहं जनैरनुमेयं फलदर्शनात् परम् ॥९॥
क्षणपूर्वमिहैव पद्धतौ कति दुःखान्यहमाकुलोऽभ्यधाम् ।
न तदा बत दैन्यसूचना हृदयं कस्यचन व्यघट्टयत् ॥१०॥
इह पूर्वमवेक्षि नो पुरे करुणावानयमीक्ष्यते यथा ।
कुत एष समागतो महान् अपि दैवेन मदर्थमाहृतः ॥११॥
अथवा सुतरामसम्भवा मम दैवेन तथाविधाहृतिः ।
नहि वह्निरुपैति शीततां न च दाहाय जलं प्रकल्पते ॥१२॥
बहुजन्मकृतेन पाप्मना बत दैन्यं मम जातमीदृशम् ।
विधिरेष नहि स्वतन्त्रकः फलदाने विधिवश्यतां गतः ॥१३॥
अथ भुक्तमपैति पातकं बहुधा भुक्तमिदं मया पुरा ।
न तथाप्यघसंक्षयः कथं किमु मिथ्यालपिता बहुश्रुताः ॥१४॥
अधनत्वमिदं यदुद्भवं नहि तन्नश्यति तावताऽथवा ।
तदिदं न यथार्थमीक्ष्यते नियतं स्वप्नदशाऽनुवर्त्तते ॥१५॥

इति चापरमेष चिन्तयन् विकलान्तःकरणः क्षणात् परम् ।
पुनरेव दृशौ न्यमीलयत् प्रतिबोधः क्रमशस्तमत्यजत् ॥१६॥
पथिकाः पुरमार्गचारिणो नहि विन्दन्ति परस्य भावनाम् ।
समुपेक्षणयेक्षणक्रमं विनिपात्यैव जना ययुस्ततः ॥१७॥
कतिचित् करुणाप्रकाशिनो वचनेनैव समानवेदिनः ।
कतिचित् पुनरस्य तादृशीं छलमात्रं विविदुर्दशां पथि ॥१८॥
करुणापरिशून्यचेतसः श्रुतिसारेषु भृशं पराङ्मुखाः ।
छलमात्रमयं पदे पदे प्रतियन्ति प्रसभं चराचरम् ॥१९॥
किमहो विफलं पथिस्थितो रहितश्चेतनयेव खिद्यसे ।
व्रज वासगृहं व्यपैतु नः पथि सञ्चारनिरोधवैशसम् ॥२०॥
बहवस्तनयका समानतां दधते व्याजविषादभागिनः ।
बहुधा बत तैरुपद्रुताः कथमेतेऽपनयन्तु दीनताम् ॥२१॥
भवने स्वजना वसन्ति नो धनमेतैरपि सुव्यपेक्ष्यते ।
निजगेहमपास्य दुर्मतिः परचिन्ताविकलो विपद्यते ॥२२॥
परभाग्यपथोपजीविनो बत जीवन्ति वृथैव संसृतौ ।
स्वसुखाय परस्य तापकाः किमु नैते बहुपापभागिनः ॥२३॥
यदि ते धनमद्य दीयते तदिह श्वः पुनरागतिस्तव ।
इदमर्थमिदं न मङ्गलं जगतः पौरुषनाशकारणम् ॥२४॥
परिमुञ्च विमूढताच्छलं त्वरयोत्तिष्ठ यतस्व कर्मणे ।
इह पौरुषमेव शस्यते न तु याच्ञा निकृतेर्निबन्धनम् ॥२५॥
सति भूमितले सरिच्छते मधुराम्भःप्रचयप्रपूरिते ।
विहगेषु गता निकृष्टतां जलदप्रार्थनयैव चातकाः ॥२६॥
स्थविरत्वमुपैषि किन्ततो विधिनेदं विहितं यथाक्षणम् ।
तदिहैव दशासमन्वये क्रियतां यत् क्षममात्मनो हि ते ॥२७॥
तरुणानभिवीक्ष्य कर्मठान् अधिरूढानधिके फलोदये ।
नहि दुःखलवोऽनुभूयतां निजयोग्येन मनः प्रसाद्यताम् ॥२८॥

निजशक्तिविचारमूढता विपदामेव पदं शरीरिणाम् ।
लघुशक्तिभृतस्ततो जना लघुना यान्तु फलेन तुष्टताम् ॥२९॥
धनिकाः सुतदारसङ्गताः सुखमायान्ति यथात्र संसृतौ ।
नहि दीनजनस्य तादृशं सुखमासादयितुं स्पृहोचिता ॥३०॥
प्रथमा धनलाभयोग्यतार्जनवैमुख्यमपादि मूर्खता ।
अथ दारजनोपसंग्रहः परतः सन्ततिसौख्यकामना ॥३१॥
निजदोषकृतस्य कर्मणः फलमासादयितव्यमात्मना ।
कथमद्य भवेद् व्यतिक्रमः सुचिरं तत्फलमत्र भुज्यताम् ॥३२॥
इति केचन नूतनाशया बहुगर्वं गुरुतामिवाश्रिताः ।
परिहासरसादिवावदन् नहि शुश्राव तदेष मूर्च्छितः ॥३३॥
तदनन्तरमन्तरं गते विविधान्तःकरणे नृणां गणे ।
मधुरं निजगाद नारदो द्विजमेतं हरिभाषितं स्मरन् ॥३४॥
अयि भूसुर मुञ्च मूर्च्छितं दृढमुत्तिष्ठ लभस्व चेतनाम् ।
शृणु बन्धुजनस्य भाषितं यदिदं ते शुभहेतुरुत्तरम् ॥३५॥
नयने मुकुलायिते चिरात् त्वरितं मीलय चेतनागमात् ।
हृदयं प्रविधेहि सुस्थितं हितमेवोपनतं तवाधुना ॥३६॥
अलमाविलमूर्च्छयाऽनया स्वजनानामहितैकयोग्यया ।
परमृच्छ यदृच्छयागतां नियतिं मङ्गलसङ्गमोज्ज्वलाम् ॥३७॥
भविता परिभूय दीनताम् असमोत्कर्षमुपेयिवान् भवान् ।
तव बान्धववृन्दविक्लवः सुचिरान्नश्यति सत्वरं पुरा ॥३८॥
मम वाचमधीष्व साग्रहम् वचनस्यानुगुणां कुरु क्रियाम् ।
नहि रोगनिवृत्तिरीक्ष्यते यदि तत्रानुगुणं न भेषजम् ॥३९॥
सदने सुतदारविक्रियां स्मर मा भूरतिमोहविक्लवः ।
परिवारगणास्तवाधुना परिपश्यन्ति दृशा भवत्पथम् ॥४०॥
अहमस्मि तवोपकारकृन्मम वाचं शृणु मङ्गलायतिम् ।
उपदेशकथा हि बान्धवी निखिलां वर्तयति स्थितिं शुभाम् ॥४१॥

अथ किञ्चिदतीतविक्लवो निजदैवं शुभमेव भावयन् ।
क्रमशो नयने न्यमीलयत् स्थिरतां चेतसि चाप्यशिश्रियन् ॥४२॥
भगवन्तमनन्तशक्तिकं समुपामन्त्र्य सभक्तिचेतसा ।
मनसैव जगाद सादरं स्थविरस्तामसमुक्तमानसः ॥४३॥
भगवन्नपि तावतः परं करुणा ते हृदये पदं न्यधात् ।
ध्रुवमेष यतः स्वपार्षदो मम दुःखार्तिहरो नियोजितः ॥४४॥
स्थविरोऽप्ययमुज्ज्वलश्रिया शमसौभाग्यसमागमस्पृशा ।
हृदये बहुमानवैभवं तनुते भावमयं महोदयम् ॥४५॥
नयने करुणाऽस्य भूयसी वदनं दीर्घललाटभास्वरम् ।
मृदु हस्ततलं सुखोचितं पृथु वक्षःस्थलमायते भ्रुवौ ॥४६॥
तदयं भगवन्निदेशतो नियतं दुर्गतिदारणाय मे ।
सुचिरात् परमद्य भाग्यतः समुपेतो द्विजवेशमाश्रयन् ॥४७॥
इति चेतसि कल्पयन् मुहुः सहसा वाङ्मयवस्तुना द्विजः ।
परिपूजितवान् विशेषतो मुनिमुत्थाय कृतानतिस्तदा ॥४८॥
अयि को नु भवानकारणं करुणापूर्णमना प्रमीयते ।
चरणे भवतो निवेदये प्रणतोऽहं कृतवेदितां पराम् ॥४९॥
महसामसि पुण्यभाजनं तव दृष्टिस्तमसो विनाशिनी ।
त्वमपूर्वविलोकितो यतस्तदसौ केन पदेन मन्त्र्यसे ॥५०॥
यदि देवपुरादुपागतो निकृतिर्मानुषयोग्यमन्त्रणा ।
यदि नेत्थमथो सुरोचितं पदमुक्तं परिहास एव ते ॥५१॥
मम दुःखनिवृत्तिमञ्जसा गुरुमोहावसरे त्वदागमः ।
समसाधयदेष बान्धवस्तत एवाभवदात्मना भवान् ॥५२॥
अत एव पदान्तरं त्यजन् सुहृदित्येव भवन्तमाह्वयन् ।
बहुमानित मानयाम्यहम् अधिकारः स मयि त्वयाहितः ॥५३॥
भगवानपि गोपमन्दिरे प्रणयाद् गोपगणेषु भूयसः ।
प्रतिपादयति स्म पूर्वतो महतामप्यपकृष्टबन्धुताम् ॥५४॥

अथवा यदि तत्त्वदर्शनं तदियं भेदकथैव लुप्यते ।
परमुल्वणविष्णुमायया मतिरस्माकमपैति तत्त्वतः ॥५५॥
अलमप्रकृतेन वस्तुना प्रकृतं वस्तु वदामि साम्प्रतम् ।
कथयस्व निदानमादितः स्वयमायासि यतोऽद्य बन्धुताम् ॥५६॥
मम कैः सुकृतैः पुरा कृतैर्न विजाने भवतः समागतिः ।
कतमोऽसि सुरादिजातिषु क्रियते ते पदयोरिहाञ्जलिः ॥५७॥
इयता समयेन सर्ववित् परमेशः किमु वा कृपां गतः ।
चिरदुर्गतकातरोक्तिभिर्मम दुःखस्य विमुक्तिमादिशत् ॥५८॥
अनुशाधि तदद्य तादृशं मम दुःखस्य यथा निवर्तनम् ।
भवने स्वजनानतः परं न वयं द्रष्टुमलं विषीदतः ॥५९॥
दिवसाद् व्यतियाति यौवनं तपनं पश्चिमतो विलम्बते ।
परिवारदशां विचिन्तयन्नथ किं वा करवाणि साम्प्रतम् ॥६०॥
क्षुधया निजवेदना तु या नहि सा सम्प्रति चेतसि स्थिता ।
विषमा विषवेगवेदना लघुदुःखानुभवे विरोधिनी ॥६१॥
अधुना निखिलान्मनोरथात् स्वजनानां ननु दुःखमोचनम् ।
परमार्थतया विभाव्यते न धनं नापि सुखं विचीयते ॥६२॥
तदयं कृपयागतो भवान् कुरुतां बान्धव बान्धवक्रियाम् ।
मम पुत्रकलत्रबान्धवा न यथा यान्त्यभिधानशेषताम् ॥६३॥
इति वाङ्मयमाकुलान्तरं वदतो बाष्पचयेण सर्पता ।
नयनद्वयमावृतं तदा कलुषः कण्ठगतस्वरक्रमः ॥६४॥
अथ यावदपादि वक्षसि क्रमशीर्यन्नयनाश्रुधारया ।
जलदागमनीरचातुरी हृदि तावन्मुनिरातुरोऽभवत् ॥६५॥
द्विजदुःखमवेक्ष्य दुःखितः स तदाजायत मुग्धलोचनः ।
अपवर्गगतेऽपि तादृशे जनशिक्षार्थमदीपि भावना ॥६६॥
बदरीफलसम्मितत्वतो जगदालोकयते यदच्युतः ।
स ततः स्थविरद्वयं तथा परिपश्यन्नतिविस्मयं दधे ॥६७॥

मम भक्ततमो हि नारदो महिमानं भुवने प्रचारयेत् ।
इति पूर्वमदेशि तत् कथं जनवद्दुःखविकारमाश्रयत् ॥६८॥
तदनन्तरमन्तरं मुनेः स्थिरतां नेतुमियेष माधवः ।
अथ तत्क्षण एव नारदः सकलं दुःखमयं व्यसर्जयत् ॥६९॥
उपदेशकथामथाव्यथी स्थविरं दीनदशाकृशं भृशम् ।
अवदच्छ्रुतिसारसारिणा वदनेन प्रवदद्वरो मुनिः ॥७०॥
द्विजराज कुतो विषीदसि क्षयिता ते सुचिराय दुर्दशा ।
बलमात्मनि धारयन् परं त्वमिहोत्तिष्ठ निजेष्टमीहितुम् ॥७१॥

यष्टिं धारय गच्छ गेहमपरं भैक्ष्याय जातोद्यम-
स्तत्रासादितवस्तुनाऽर्चय परं श्रीसत्यनारायणम् ।
दुग्धाद्यैः कदलीफलैः परिणतैर्गोधूमचूर्णैस्तथा
नैवेद्यं प्रतिपादनीयमभयं सायं सपादैस्त्वया ॥७२॥
सर्वं वस्तु सपादमेव विहितं तत्पूजने शास्त्रतो
बन्धूनाश्च ततः प्रसादमतुलं दत्त्वा स्वयं भक्षयेः ।
एवं दैन्यमुपैष्यति क्षयपथं सौभाग्यमापत्स्यसे
लोके च प्रथितो भविष्यति परं श्रीसत्यनारायणः ॥७३॥
उक्त्वैतद् वचनमसौ सुरर्षिरारात्
सस्मार स्वविषयिणीं तिरोधिविद्याम् ।
स्वां चेष्टामथ फलिनीं विमृश्य तस्माद्
आकाशं व्यगमदलोकलभ्यदेहः ॥७४॥

अदर्शनात्तस्य निमेषमात्रतः स विस्मयं भूरितरं समाश्रितः ।
स्वसम्मुखे पार्श्वयुगे च पृष्ठतो गवेषयामास मुनिं समादरात् ॥७५॥
ध्रुवं निहन्तुं मम दुःखदुर्विधां सुरेण केनापि कृता प्रवञ्चना ।
विमूढचेताः किल तत्क्षणे क्षमो न चाभवं तस्य यथार्थनिर्णये ॥७६॥
स सत्यनारायण एव वा भवेत् भक्तोत्तमो वाऽस्य भवेन्नु कश्चन ।
पृष्टो मया नोत्तरमत्र सोऽवदात् कथान्तरेणान्तरयन्नपासरत् ॥७७॥

यथा तथा वाऽस्तु पुरा प्रवर्तये श्रीसत्यनारायणपूजनोचितम्
स एव मे सर्वविधां सुदुर्विधां कृपापरः काममपाकरिष्यति ॥७८॥

इत्थं विभाव्य जरया परिवेपिताङ्गो
दृप्तां जरामपसृतामिव चिन्तयित्वा ।
भिक्षार्थमेव धनिकस्य गृहं प्रतस्थे
वार्द्धक्यमाप दिवसो द्विजराजतुल्यः ॥७९॥

इति श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये नारदोपदेशो नाम षष्ठ-सर्गः समाप्तः ॥६॥

---

## सप्तम-सर्गः

अथ सरसिजनाथः शून्यमार्गं सुदीर्घं
निजदशशतपादैः श्रान्तिहीनं चरित्वा ।
शिशयिषुरिव सायं पश्चिमे शैलपीठे
वपुरपचितशोभं शान्तये न्यास तूर्णम् ॥१॥

क्रमिकतिमिरधाराप्लावनं वीक्ष्य भूमौ
तपनकिरणमाला भीतभीतेव शीर्णा ।
गिरितरुभवनानामुच्छ्रितानग्रभागान्
अभजत चितरागा जीवने क्षेमहेतोः ॥२॥

क्षितिरिह नवभावा नीलवासो वसाना
रुचिररुचिसहायं शीतभानुं सरागम् ।
समुदयमुपयान्तं पूर्वशैलोपकण्ठे
परमभिसरति स्म प्रौढकामोपचारा ॥३॥

गगनमजनि शान्तं सूरतापाद् विमुक्तं
सलिलकणसमेतः स्वैरमावाति वातः ।

नभसि विहगमाला सम्पतन्ती सुदूरात्
स्वभवनमभि सायं शावहेतोरयासीत् ॥४॥
सरिति सलिलधारा शोणवर्णैः खरांशोः
क्षयितकिरणजालैः शोणवर्णा भवन्ती ।
समयनियमयोगात् पादभेदप्रसूतं
रुधिरमिव समन्तात् प्रस्रुतं भासते स्म ॥५॥
रविकिरणविमोकात् प्राच्यशैलेषु वाप्यो
मलिनमुखसरोजाः स्वं विषादं वदन्ति ।
प्रणयिकुमुदमाला दीर्णपर्णा कथञ्चित्
तदनुशयवधार्थं स्वप्रकाशं वितेने ॥६॥
चिरपरिचयमाप्तां पद्मिनीं पूर्वशैले
मधुपकुलमशक्तं त्यक्तुमस्मिन् दिनान्ते ।
सविधगगनभागे लब्धसञ्चारमात्तं
शुचमिव हृदि रूढां वेदयामास नादैः ॥७॥
रुचिररुचिवियोगे वापिकायाः प्रपन्ने
गुरुहृदयविषादो मानमप्राप्य चित्ते ।
किमु बहिरवतीर्णो दृश्यते देहमाप्तः
प्रदिशति हृदि खेदं रम्यकाम्यैर्वियोगः ॥८॥
दिवसमनवसादं भूरिभारं वहन्तः
क्षुधितबहुकुटुम्बप्राणमात्रोपयुक्तम् ।
धनिकजनवितीर्णं वित्तमासाद्य हृष्टा
विदधति पथिपार्श्वे भारिकास्तद्विभागम् ॥९॥
नियतभृतिकमन्ये कर्मबन्धे नियुक्ताः
कथमपि विमुक्त्यं शक्तिसाम्येन कृत्वा ।
निजपरिजनवार्तां संस्मरन्तः प्रदोषे
लघु जिगमिषवोऽपि प्रस्थिता मन्दचारम् ॥१०॥

दिनकरकरभारो यावदासीत् सुतीव्रः
        पथि गमनमशक्यं यावदासीच्च पूर्वम् ।
पवनगतिरदीना भूतले नास्त तावत्
        पटुगतिरिह सायं प्रावहन्मुग्धवातः ॥११॥
प्रखरकिरणतापाद् भीतभीतः समीरः
        क्वचिदपि परिलुप्तो यापयामास वेलाम् ।
अथ नभसि दिनान्ते भीतिहेतोर्विलोपात्
        प्रसरति सविलासः शीतलो गन्धजुष्टः ॥१२॥
सरसि विमलतोये वायुसङ्गाच्चलन्त-
        स्तटभुवि परिकीर्णा भग्नकायास्तरङ्गाः ।
तटज-तरुविशीर्णैः पुण्यगन्धैः प्रसूनैः
        सुरसिकजनवृत्तिम्प्रासरन्नाप्नवन्तः ॥१३॥
दिवसमरुणवक्त्रा पद्मिनी भानुतप्ता
        मुकुलितदलनेत्रा सायमाप्तेव सुप्तिम् ।
सुमधुरमलिबन्धुः सुप्तिमन्त्रं स्वतन्त्रं
        पठति मृदुलतालं तां सुषुप्तिं विनेतुम् ॥१४॥
सरसि सरसि हंसा वीचिसम्पर्कलोला
        विदधति नवकेलिं स्वप्रियाप्रेममुग्धाः ।
प्रभुजनविनिसृष्टं शब्दमाकर्ण्य तूर्णं
        तटमुपगतवन्तो यान्ति वासं स्मरन्तः ॥१५॥
दिवसमुचितभोगा भाग्ययोगात् प्रदोषे
        खलनियतिनियोगात् प्रेयसा विप्रयुक्ता ।
सरिदपरतटान्तं चक्रवाकी प्रपन्ना
        विधिकृतकृतिलीलां को विहन्तुं समर्थः ॥१६॥
सविनयकुलबाला दूरपल्लीवतंसाः
        सरिति सलिलहेतोः प्रस्थिताः कुम्भकक्षाः ।

पथिकनयनलीलाभारसम्भारनम्राः
पथि कथमपि चेरुः पान्थचित्तं वहन्त्यः ॥१७॥
निरुपमरुचिरागा द्रष्टुकामं किमेता
गगनमनघदीप्तिप्रौढनक्षत्रमालाम् ।
नयनमिव सलीलं लक्षसंख्यं वितेने
जगदसुलभशोभा कस्य कामं न सूते ॥१८॥
अघनसितपयोदाक्रान्तशुभ्रांशुबिम्ब-
द्युतिसितवसनांशच्छन्नमास्यं तदीयम् ।
कथमपि किल धृष्टो मारुतो द्रष्टुमारात्
प्रकटितबहुलीलं सारयामास वासः ॥१९॥
पथिकनयनभीतेः कापि पल्लीकुमारी
निजपरिजनसङ्गं सेवमाना सलज्जा ।
अलसनयनरश्मिं न्यस्य पादाग्रभागे
मृदुगतिरतिमुग्धा क्लिश्यमानञ्च रथ्याम् ॥२०॥
तरुणतरशरीरां वीक्ष्य तां दूरगन्त्रीं
कुसुमतरुनिषण्णाः कोकिलाः संह्वयन्तः ।
प्रतिपदमपि तस्या बोधवाधं विदन्तः
क्रमकृतबहुतारं पञ्चमं व्याकिरन्ति ॥२१॥
समयमनु समुद्यद्विभ्रमालीढकायाः
पथि किल कुलबाला वीक्ष्य रक्तः खरांशुः ।
सरसि मलिनकान्तिः पद्मिनी सूर्यकान्ता
मुकुलितनयनाऽभूत् किन्नु सापत्न्यरोषात् ॥२२॥
रसपरिकरसारा यद्धि पल्लीकुमार्यो
निजकुचकलसान्ते नीरसं कुम्भभारम् ।
निदधति न तदेतच्चित्ररूपं यदेताः
स्वयमिह रसधारां धारयिष्यन्ति शीघ्रम् ॥२३॥

समदगतिविलासाः प्रस्फुरत्कम्रहासाः
कुसुमरुचिरवेशा रक्तसिन्दूरभूषाः ।
सहमरणमिवाप्तुं सूरनाशान्नलिन्यः
सरिति कलसकक्षाः प्रस्थिताः पौरनार्यः ॥२४॥

अथ सरितमुपेताः स्त्रीजनास्तीरभागे
कलसमलसलीलं स्थापयित्वा क्षणेन ।
पयसि समवतीर्णाः सन्तरन्तः सहेलं
निजभुजलतिकाभिर्वीचिवृद्धिं प्रचक्रुः ॥२५॥

सरिदतिचलनीरा तद्भुजासङ्गलाभात्
प्रतिपलमभिनिन्ये स्वप्रमोदं तरङ्गैः ।
किमिव किल विचित्रं यद्रसं धारयन्त्या
भुजभजनसमुत्था विभ्रमस्यातिवृद्धिः ॥२६॥

कलसमुरसि कृत्वा काचिदेका प्रगल्भा
स्वगुरुजननिषिद्धाप्युत्सुका सन्तरन्ती ।
विगलिततनुवासा व्यक्तविस्रस्तकेशा
युवजननयनानां स्पन्दमाराज्जहार ॥२७॥

रसिकजनमनोजं काचिदुद्दीपयन्ती
कुचसलिलविनोदव्याजमासादयन्ती ।
निपुणमपि जनन्या लोचनं वञ्चयन्ती
मदनमदपताकां दिक्षु जग्राह मुग्धा ॥२८॥

रसभरपरिषेकात् पिच्छिले चित्तदेशे
गृहकृतिरबलाया न स्थितिं गाढमापत् ।
मदनकुसुमबाणस्पर्शिरेणुप्रतानात्
तदनु तमनुयातः कामजातो विकारः ॥२९॥

कथमपि भृतकुम्भा नायकस्पर्शिचित्ता
तरुणिममदमत्ता देहमात्रं दधाना ।

गृहमभि विहरन्ती निक्षिपन्ती कटाक्षान
अभिनवमुपचारं कामदेवस्य वत्रे ॥३०॥
नयनयुगममुष्या निम्नगायास्तटान्ते
युवजनसुषमाया वीक्षणाकाङ्क्षयेव ।
स्मितसितमुखमारात् सम्परावर्त्य तस्मिन्
गमनसमययोग्यं चारु पप्रच्छ भव्यम् ॥३१॥
पथि धृतमृदुपादा पादपश्रेणिकाभिः
क्रमपरिचितदूरा यावदापद् विलोपम् ।
तरुणरसिकराजस्तावदस्तप्रमोदः
श्वसितममितदीर्घं शून्यदर्शी ससर्ज ॥३२॥
सलिलममलधारं धीरचारी समीर-
स्तटतरुकुसुमानां सौरभं देवभोग्यम् ।
अपरतटतरूणां श्यामशोभा समाप्ता
किमपि न हृदि तस्यादत्त मोदं तदानीम् ॥३३॥
सविष-मलयशैलव्यालफूत्कारतुल्यो
मलयगिरिसमीरस्तावदस्याचकाशे ।
अभिलषितमलब्ध्वा कः सुखी भाति लोके
मदनदनुजदर्पः कार्पण्यं किं न धत्ते ॥३४॥
क्वचिदपि तरुमूले रागपीयूषवर्षी
सलिलमभि निषण्णः कोऽपि सङ्गीतमग्नः ।
पवनपथमुपेतस्तत्स्वरो दूरदूरं
श्रुतिसुखमनुसार्यं भाविकानाम्प्रचक्रे ॥३५॥
सुलयललितगीतं गायतस्तस्य वश्या-
स्तरुनिकरनिलीनाः कोकिला मुग्धरागाः ।
अनुकरणविधिज्ञाः पञ्चमं पञ्चयन्तो
विदधति शुभवीणासाहचर्योपकारम् ॥३६॥

दिवसविलयकाले शङ्खघण्टाघटायाः
समगत सुरवन्द्ये मन्दिरे प्रौढनादः ।
विषमकलिनियोगाद् यद्यपि क्षीणसत्त्वं
सुकृतमिह तथापि प्राप नैकान्तलोपम् ॥३७॥

सकुशलकुलनार्यः सायमाचारनिष्ठाः
करधृतशुभदीपा देवगेहाय जग्मुः ।
मलयजरसधारासेकतः पूतमेतद्
व्यदधत कुसुमाद्यैरप्यमन्दोपहारैः ॥३८॥

इह भवनगतानां दीपिकानां प्रभाभि-
स्तिमिरमगमदस्तं वस्तु लब्धप्रकाशम् ।
परिभवितरि दृप्ते जाग्रति प्राज्यवीर्ये
कथमपि लघुतेजाः सम्मुखे नैति वृत्तिम् ॥३९॥

शिशुकुलमनुरक्तं स्वीयपाठप्रबन्धे
परिहरदनुसन्ध्यं चापलं बालयोग्यम् ।
मुखरमकृत गेहं शान्ततन्द्रं विनीतं
क नु खलु समयानामप्रकाशः प्रभावः ॥४०॥

अधिदिवसमशेषाः कौशिका लुप्तदेहा
दिनमणिकरयोगान्नष्टनेत्रप्रकाशाः ।
इह तिमिरविहाराद्दृष्टिमासादयन्तः
प्रतिदिशमतिहर्षं भक्ष्यहेतोरयासुः ॥४१॥

गगनमतिविशालं दूरमाक्रान्तवन्तः
सुमधुरफलनम्रं वृक्षमन्वेषयन्तः ।
श्रमरहितममन्दं पक्षवातं सृजन्तो
गगनमरुणतप्तं वीजयन्ति स्म नूनम् ॥४२॥

क्वचन विटपिशीर्षे कूटजालावनद्धे
प्रभुजनकृतवीक्षे सत्फलोत्सिक्तशाखे ।

असितगिरिशरीरे किन्तु रत्नप्रकाशः
किमथ विटपिगात्रे दीपमाला प्रकीर्णा ?
प्रकृतिमधुरलीलां द्रष्टुकामाथ किं वा
घटयति वनदेवी नेत्रमित्याप तर्कः ॥५०॥

कुसुममतिविचित्रं भाति सान्ध्यप्रकाशं
स्फुटति रजनिगन्धा गन्धकृष्टालिवृन्दा ।
वितरति नवगन्धं मञ्जुशेफालिकेयम्
इति मधुपचयानां सोत्सवो विभ्रमोऽभूत् ॥५१॥

नवपरिमललोभात् पद्मिनीं त्यक्तवन्तः
कुसुममपरमाप्तुं भृङ्गसङ्घा विचेरुः ।
प्रणयमभिभजन्ते ये रसापेक्षयैव
प्रसरति चिरमेषां नैकतो रागयोगः ॥५२॥

तपनमुदितरागं तीर्णमुद्वीक्ष्य शून्यं
सरिति दिवसशेषे नाविकाः श्रान्तकायाः ।
लघु तटभुवि नावं स्वाममी प्रापयन्तः
श्रमलुलितशरीरा नाशकन्नूर्ध्वमस्मात् ॥५३॥

स्थितिसमुचितदेशे स्वां तरीं स्थापयित्वा
तिमिरनिकरबाधां बाधितुं दीपदीप्तिम् ।
व्यरचयत समाजो नाविकानां तरण्याम्
अकृत तिमिरभेदं मण्डलं तत्र तस्याः ॥५४॥

सलिलमुपगतासौ प्रोज्ज्वलालोकशोभा
चपलतरतरङ्गैः साधु लास्यं दधाना ।
ज्वलितमणिनिकायां कण्ठलग्नां तटिन्याः
स्रजमिव सहचर्याः साधयन्ती व्यभासीत् ॥५५॥

कतिचन तरिवाहास्तीरभूमिं प्रपन्ना
दिवसमखिलमेव क्षुद्विकारेण दूनाः ।

कथमपि निजभोज्यं तत्र निष्पादयन्तो
ज्वलितदहनचुल्लीपार्श्वमेवाश्रयन्त ॥५६॥
दिवसमुचितभूमौ गोगणाः सञ्चरन्तः
कवलितबहुशस्यास्तृप्तिमासाद्य सायम् ।
अलसगतिविलासाः सन्निवृत्ताः स्वयूथ्यै-
रभिलषितसमाप्तौ स्मर्य्यते स्वो निवासः ॥५७॥
दिनमखिलमदृष्ट्वा वत्सकानूर्ध्वपुच्छा-
स्तटभुवि किल गावः सत्वरं सञ्चरन्त्यः ।
पथि पथि चिरमूधःक्षीरधारां किरन्त्यो
व्यदधत रवमुच्चैः स्नेहसम्पर्कपूतम् ॥५८॥
भवनपथमुपेता गोपिका रज्जुहस्ता
स्ववहितनयनान्ता गोषु जातव्यपेक्षा ।
कथमपि किल वत्सं व्याकुलं मातृहेतो-
ररुणददयचित्ता दोग्धुकामा पुरस्तात् ॥५९॥
अथ भवनमुपेतं गोगणं सन्निरुध्य
प्रथममुचितदोहं गोपिकाः साधयित्वा ।
क्रमलघुतरशब्दं पूरयन्ति स्म पात्रीं
तदनु चपलवत्सानभ्यमुञ्चन् स्वकाले ॥६०॥
तृषितचपलवत्सा गोपिकाभिर्विमुक्ताः
प्रकटितपटुहर्षाः क्षीरमारात् पिबन्तः ।
किमपि सुखममायं मातुरन्तः प्रचक्रुः
प्रकृतिरतिविचित्रा प्राणिनां स्नेहगुर्वी ॥६१॥
निजतनुजनिहेतोः क्षीरसारं यमन्तः
प्रणयगतिविमुग्धाः पालयन्ति स्म गावः ।
तमिह समयलाभे पाययन्ति स्ववत्सान्
पशुरपि कृतिधारां बुद्धिपूर्वं प्रसूते ॥६२॥

कृषिधनजनवर्गः प्रातरारभ्य रागात्
तपनकिरणतप्तः शस्यहेतोः समन्तात् ।
विहितधरणिकर्षा गाः सुसंगृह्य सायं
भवनमभि जगाम क्षुत्पिपासाविदूनः ॥६३॥
सुकृतनिचितचित्ता भूसुराः पश्चिमान्ते
गिरिशिरसि शयानं वीक्ष्य भानुं प्रदोषे ।
सरिति सवनपूर्वं पश्चिमां पूतसन्ध्यां
श्रुतिसमुदितमन्त्रैरर्चयामासुरर्च्याः ॥६४॥
यदिह धरणिदेवा रक्तवस्तूपचारं
शिवदमददुरर्घ्यं भानवे भक्तिपूर्वम् ।
तदुपगतमभूत् किं तत्र मन्त्रप्रभावात्
सितखरकरधारी यत् क्षणेनैव शोणः ॥६५॥
सवनविधिनिरुक्तैः श्रौतमन्त्रैः पवित्रैः
सरिति नियमपूर्वं प्राप्तपूताभिषेकाः ।
व्यदधत यतिमुख्याः प्राणशुद्धिं शमस्था
जलगगनसमीराः पूततां प्रापुरद्धा ॥६६॥
तपनमभि निषण्णो ह्येकपादे क्रियावान्
व्यधित विहितसूरोपस्थितिं तत्र कश्चित् ।
अवसितनिजसन्ध्योपासनाकृत्यपूतो
वपुरिव समुपेतो वर्णधर्मः प्रतीये ॥६७॥
हवनविधिनिषक्ताः सायमग्न्याहिता ये
श्रुतिनियमितमन्त्रैराहुतीरादधुस्ते ।
हविरुपचितदेहादुत्थितो हव्यवाहाद्
व्यतत गगनमार्गं पुण्यदो हव्यगन्धः ॥६८॥
अलसहरिणमाला भुक्तशष्पा सुतृप्ता
सदयमुनिजनानामाश्रमान्ते शयाना ।

मुकुलितनयनान्ता बद्धरोमन्थकृत्या
चपलमुनिशिशूनां कौतुकं भूरि चक्रुः ॥६९॥
सकरुणमुनिबाला आलवालेषु सायं
स्वसदृशकलसेभ्यः स्रावयामासुरम्भः ।
तृषितहरिणकान्ता लाल्यमाना पपौ तत्
क नु खलु भयलेशः पालितानां पशूनाम् ॥७०॥
कुशसमिदुपचारान् संग्रहीतुं सुदूरे
विपिनभुवि गता ये भास्करे दीप्यमाने ।
त इह मिलितवन्तः संगृहीतोपचारा
दिनकृति दिशि याते पश्चिमायां दिनान्ते ॥७१॥
कलिरतिखलसत्त्वो यद्यपि ध्वान्तधर्मा
तदपि वहति तस्मिन्नेकपाद् धर्म एव ।
जगति सुकृतजाते सर्वथा लोपमाप्ते
कथमिव समवस्था संसृतेः सम्भवित्री ॥७२॥
कुमुदकुलमशेषं भाविनो बन्धुसङ्गात्
स्मितमुचितमचैषीद्दीर्घविच्छेददूनम् ।
विधुरपि परिलुप्तः पूर्वशैलान्तराले
रचयितुमुपभोग्यां स्वां रुचिं यत्नमागात् ॥७३॥
इत्थं सायन्तनपरिकरालङ्कृतायां क्षमायां
सत्यं स्मृत्वा धनिकभवनं किञ्चिदापत् स विप्रः ।
आशातीतं धनमपि ततः प्राप्य सत्यप्रसादाद्
गेहं गन्तुं पथि पदमदान्मोदपूर्णः सुशीघ्रम् ॥७४॥

इति श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये प्रदोषवर्णनं नाम
सप्तम-सर्गः

## अष्टम-सर्गः

स्थविरोऽपि स हृष्टात्मा प्रस्थितः सायमध्वनि ।
समुत्साहेन तरुणः पथिकैरन्वभाव्यत ॥१॥
वयोमात्रेण नो बाल्यं तारुण्यं वृद्धतापि वा ।
जायते भुवि जीवानां हेतुरन्यादृशस्ततः ॥२॥
अह्नस्तृतीययामेऽपि सूरः क्रामन्नभःक्रमम् ।
अनिरस्तसमुत्साहः सर्वथा तरुणायते ॥३॥
य एव दिवसे विप्रो नैराश्येन हतप्रभः ।
स सायं सहसा भावमन्यथैव समाश्रितः ॥४॥
स्मितं तस्यालसद्वक्त्रे क्षयं दुःखमशिश्रियत् ।
रसायनरसास्वादो नवशक्तिमजीजनत् ॥५॥
विधातृकरकल्पस्य धनिकस्य निकेतनात् ।
स्वं गेहं गच्छता तेन विपणिर्वीक्षिता पथि ॥६॥
ततः सपादं गोधूमचूर्णं सञ्चितवानसौ ।
मूल्येन कदलीं पक्कां शर्करामपि शोभनाम् ॥७॥
गोपगेहमथासाद्य योग्येनार्घेण स द्विजः ।
क्षीरमक्षीणमाधुर्यमाग्रही समुपार्जयत् ॥८॥
सुरम्याणि विचित्राणि पुष्पाण्यथ समीयिवान् ।
श्वेतवर्णप्रभूतानि तुलसीरपि सादरम् ॥९॥
एवं भक्तिसमायुक्तः सर्वं सञ्चित्य सत्वरम् ।
सत्यनारायणं देवं स्मरन् स्वागारमाप्तवान् ॥१०॥
वैकुण्ठे दवितोत्कण्ठे सत्यनारायणः स्थितः ।
वीक्ष्य विप्रस्य कृत्यानि परं सन्तोषमाश्रयत् ॥११॥
दीर्घं मार्गमतीत्याथ भवनद्वारमागतम् ।
स्थविरं तदपत्यानि पृच्छन्ति स्म कुतूहलात् ॥१२॥

तात यातं दिनं दीर्घं भिक्षार्थं भ्रमतस्तव ।
तथापि विक्लवो नासि नवीनमिदमीक्ष्यते ॥१३॥
आनन्दज्ज्योतिषा दीप्तं किन्नु ते मुखमण्डलम् ।
विस्मारयति नः सर्वान् पूर्वं दुःखविडम्बनम् ॥१४॥
अमृतेनेव तृप्ताः स्मः किमेतदिति कथ्यताम् ।
भाविभव्याशया चेतः सहर्षमिव नः स्थितम् ॥१५॥
दुर्गतिः किमु नः काले नियत्या विलयोन्मुखी ।
चक्रक्रमसमां लोकस्थितिं स्थापयितुं यथा ॥१६॥
अपि विप्राशिषो लब्धा वरं वा व्यतरन् सुराः ।
जन्मान्तरकृतं किञ्चित् सुकृतं वा फलोन्मुखम् ॥१७॥
दारिद्र्यदारिकरुणः शङ्करः किं शुभङ्करः ।
नारायणो वा जगतामयनं व्यतरत् कृपाम् ॥१८॥
एतावत्कालमार्तानां कृपणस्वरचातुरी ।
कालेन किमु देवानां श्रुतिमूलमुपास्पृशत् ॥१९॥
देयमस्मान् परं दुःखं नास्तीत्येव विचिन्त्य किम् ।
नाधुना दुःखदानाय देवतानां प्रवर्तनम् ॥२०॥
किं वा दुःखशताघातैः किणस्तावान् कृतोऽन्तरे ।
येन दुःखाभिघातानामनुभूतिर्लयं गता ॥२१॥
ततः किन्नु क्षुधाजन्यमन्यस्मिन्निव वासरे ।
दुःखं सायमपि क्षिप्रं नाद्य नो बाधनां व्यधात् ॥२२॥
तात ! किं करयोरेतत्तव पूजाविधिक्षमम् ।
सर्वं सविस्तरं ब्रूहि संशयो नः प्रशाम्यतु ॥२३॥
वाचमेवमपत्यानां श्रुत्वा वात्सल्यपूरितः ।
विप्रः सम्भ्रमशून्यात्मा निजगाद निजान् सुतान् ॥२४॥
आकर्णयत वत्सा मे दैवोपनतिमुत्तमाम् ।
अद्य मन्ये मया दृष्टः सत्यनारायणः स्वयम् ॥२५॥

स रूपान्तरमाश्रित्य समुपेत्य नटो यथा ।
वरिवस्यां समादिश्य सहसाऽन्तर्दधे हरिः ॥२६॥
तस्य पूजाप्रभावेण सर्वा दुर्गतयो हि नः ।
क्षयमेष्यन्ति सूरेण तमांसीव दिनोदये ॥२७॥
तदर्थं द्रव्यसम्भारं समाहृत्य प्रयत्नतः ।
भिक्षार्जितेन वित्तेन प्राप्तोऽस्मि निजमन्दिरम् ॥२८॥
भक्त्या भगवति क्षेमं वीक्ष्यते भुवि मानवैः ।
ततो भक्तिमुपाश्रित्य पूज्यतां कमलापतिः ॥२९॥
तदिच्छयैव जगतः सुखदुःखे लयोदयौ ।
तदिच्छाव्यतिरेकेण पुण्यापुण्ये फलाक्षमे ॥३०॥
ये तु स्वभावतो लोके सुखदुःखे वदन्त्यमी ।
ते मूढा मोघवर्त्मानो निरयं यान्ति शाश्वतम् ॥३१॥
अदृष्टं येऽनुमिन्वन्ति तेषां चेतन ईश्वरः ।
तस्मिन्नचेतनादृष्टे फलदाननियामकः ॥३२॥
यदेव जायते किञ्चित् सदृशस्तत्र सर्वतः ।
परमात्मा स्मृतः कर्ता स हि सर्वस्य सर्वदः ॥३३॥
सर्वेषामभिमानानां स एको विलयः सताम् ।
अभिमानभृतामेष न कदाचित् प्रकाशते ॥३४॥
तस्यैव ज्योतिरंशेन जगद् भासयते रविः ।
कलानिधिः कलादानादम्बरे तिमिरापहः ॥३५॥
तस्यैव वपुषो गन्धलवः पुष्पेषु सौरभम् ।
तदीयध्वनिमाधुर्य-कला कोकिलकाकली ॥३६॥
श्वासो यस्य महावायुः श्रवणं निष्कलं नभः ।
शरीरं भुवनाभोगः सूर्याचन्द्रमसौ दृशौ ॥३७॥
रसना सागराः सर्वे नद्यो रासननाडिकाः ।
लतागुल्मतरुस्तम्बा रोमाणि परिविग्रहम् ॥३८॥

सागराणां महाघोषो यस्य वीर्योर्जितं वचः ।
अशनेः पटुनिर्ह्रादो हुङ्कारः स्वान्तभीषणः ॥३९॥
विद्युतो यस्य यामिन्यां भीमायां मेघडम्बरैः ।
दीपिका इव सम्भ्रान्ताः पान्थोपकरणक्षमाः ॥४०॥
यो निदाघे खरोत्तापे नीरशीकरशीतलम् ।
समीरं प्रेषयन् भूमौ शान्तिं वितनुते नृणाम् ॥४१॥
कृपया यस्य देवस्य निदाघानन्तरं धरा ।
वर्षापयोदसम्पर्कात् परमां तृप्तिमृच्छति ॥४२॥
सर्वजीवोपयोगाय निरवग्रहशस्यता ।
यत्कृपावशतो लोके विभाति शरदुद्गमे ॥४३॥
शीतजाड्यविमोकाय वसन्तर्त्तुं प्रवर्तयन् ।
अपूर्वसुषमाभारैर्यः करोति नवां भुवम् ॥४४॥
सर्वेषामुपकाराणां सौन्दर्याणाञ्च मूर्च्छताम् ।
य एको बीजमव्याजं सर्वशक्तिधरो हरिः ॥४५॥
भक्त्या तस्य कृता पूजा सर्वसिद्धिं प्रदास्यति ।
तदेषा क्रियतामद्य कर्मान्तरमिहाफलम् ॥४६॥
हे पुत्रास्तदलं कृत्वा विलम्बं कुरुतोद्यमम् ।
सत्यनारायणार्च्चायां यदि स्वहितमिच्छथ ॥४७॥
पितुस्तद्वचनं श्रुत्वा हर्षनिर्भरमानसाः ।
सत्यदेवस्य पूजायामुद्यमं बालका दधुः ॥४८॥
कश्चित् कलसमादाय पूतां स्रोतस्विनीं गतः ।
कृतस्नानः पवित्रात्मा शुद्धं सलिलमाहरत् ॥४९॥
प्रसूनं तुलसीपत्रं प्रभूतं पूजनोचितम् ।
पञ्च-पल्लवकञ्चापि समगृह्णात् सुतोऽपरः ॥५०॥
प्रसन्नमानसा विप्रपत्नी यत्नेन भूयसा ।
गोमयाद्युपलेपेन पूजागृहमशोधयत् ॥५१॥

प्रतिवेशिजनाह्वानविधये तनुजोऽपरः ।
पितुर्निदेशाद् भवनाद् बहिः सत्वरमाव्रजत् ॥५२॥
स्वल्पेनैव च कालेन स्नानपूतो द्विजोत्तमः ।
वसानो निर्मलं वासः पूजावासमथाविशत् ॥५३॥
क्रमेण सर्ववस्तूनां संग्रहे समनुष्ठिते ।
पूजा प्रववृते तत्र सत्यदेवस्य नैष्ठिकी ॥५४॥
धूपधूमसमुद्घातैर्दीपिकालोकदीपितम् ।
अपि पूजागृहं तावदन्धकारमयं कृतम् ॥५५॥
प्रारम्भे देवपूजायाः सदम्भेव पवित्रता ।
सद्यं पूजागृहोपान्तपवनं समशिश्रियत् ॥५६॥
यथापद्धति स ध्यात्वावाह्य दीनार्चनोचितैः ।
उपचारैरतिश्रद्धं सत्यदेवमपूजयत् ॥५७॥
दत्त्वा श्रीसत्यदेवाय सगन्धकुसुमाञ्जलिम् ।
यथाविधि समर्च्यायाः समापनमथाकरोत् ॥५८॥
आहूताः स्वजनास्तेन भक्तिनिर्भरचेतसः ।
ततः सत्यस्य माहात्म्यं श्राविताः सूरिसम्मतम् ॥५९॥
ततः पुण्यमयाख्यानं महिमानं निशम्य ते ।
विदधुः श्रद्धया मुग्धाः सत्यस्य विजयध्वनिम् ॥६०॥
समाप्ते सत्यदेवस्य गुणश्रवणमङ्गले ।
भूयोऽपि गन्धपुष्पाद्यैः स सत्यं समपूजयत् ॥६१॥
ततो गोधूमचूर्णाद्यैर्नैवेद्यं परिकल्पितम् ।
निवेद्य सत्यदेवाय प्रसादं व्यतरन्मुदा ॥६२॥
आहूता भक्तिसम्भ्रान्तास्तमादौ शिरसा दधुः ।
सत्यनारायणं नत्वा तदास्वादमथो व्यधुः ॥६३॥
अथ विप्रः स्वपुत्रेभ्यः प्रसादं प्रददे मुदा ।
प्रसादलाभसम्प्रीताः स्वजनाः स्वगृहानगुः ॥६४॥

ततो निर्जनतामाप्ते सत्यपूजनमन्दिरे ।
दीनः सः विप्रो निर्माय भक्त्या सस्मार माधवम् ॥६५॥
देव विश्रम्भमालम्ब्य त्वद्वचस्यम्बुजेक्षण ।
पूजाक्षणो मया सायं यथान्यायमनुष्ठितः ॥६६॥
न कृतं वित्तकापट्यं न विकल्पो विधिक्रमे ।
नापचारः क्रियारम्भे शक्तिः सम्यक् प्रवर्तिता ॥६७॥
सर्वेषामन्तरं वेत्सि किं वा वाचा प्रयोजनम् ।
भक्तिस्त्वयि ममासीमा कामस्त्वच्चित्ततोषणम् ॥६८॥
पदे पदे पदाम्भोजं तव स्मरति मे मनः ।
त्वन्तु क्षणमपि क्षेमं मम स्मर्तुं किमक्षमः ॥६९॥
जराजीर्णोऽस्मि विप्रोऽस्मि त्वदेकपदसंश्रयः ।
तथापि मामुदासीनः कथं नो वीक्षसे विभो ॥७०॥
अद्य जन्मान्तरीणस्य सुकृतस्य प्रभावतः ।
सदयं करुणालेशः स किन्तु स्थिरतां श्रयेत् ॥७१॥
हरे हरसि भक्तानामनिशं दुर्दशाशतम् ।
तत् किं भक्तस्य मे द्रष्टां दुर्गतिं समुपेक्षसे ॥७२॥
जगत् पालयसि ध्वंसात् सात्त्विकैः स्वगुणैः प्रभो ।
किमहं जगतो बाह्यः सह्यते यद् विडम्बना ॥७३॥
चञ्चलेति समाख्याता लक्ष्मीस्ते सहचारिणी ।
किं तवादेशरक्षायामपि सा चञ्चलायते ॥७४॥
अथवा भारती देवी तत्सपत्नीति हेतुना ।
मयि तत्सेवनव्यग्रे विरक्ता सिन्धुसम्भवा ॥७५॥
मादृशामपि मुग्धानां दग्धानां पूर्वकिल्बिषैः ।
अर्दनेन भवान्नूनं लोके ख्यातो जनार्दनः ॥७६॥
इत्यारे दैन्यदैत्यस्य प्रभावो दुःषहो मया ।
आशु नाशय तं विष्णो शोकजिष्णुं कुरुष्व माम् ॥७७॥

त्वत्प्रसादलवं लब्ध्वा सुधातृप्तिमुपेयुषाम् ।
स्वजनानां सुषुप्तानां निशा व्यतितरिष्यति ॥७८॥
अथ प्रातः पुनस्तेषामाकुलानां क्षुधादिभिः ।
पश्यतो मलिनास्यानि का गतिः सम्भविष्यति ॥७९॥
एते मामेकमालम्ब्य प्राणानिच्छन्ति रक्षितुम् ।
ममाप्येको भवानेव गतिस्तत् क्रियतां दया ॥८०॥
भरणाय स्वबन्धूनामप्यकार्यशतं क्षमम् ।
तदप्यघभयादेव वैधहिंसेव हीयते ॥८१॥
क्षुधातृष्णापरिक्लान्तान् भूमौ दुःखेन लुण्ठतः ।
स्वजनानीक्षमाणस्य मम स्यात् कीदृगन्तरम् ॥८२॥
त्वां विना वद को देव तद् विज्ञातुं भवेत् क्षमः ।
शमयस्व प्रभो तस्माद् विदितं दुःखमात्मना ॥८३॥
जीर्णो देहः शिरः शुक्लं गतिरस्थिरतां गता ।
तथापि वरणीयं मे भिक्षार्थं नगराटनम् ॥८४॥
प्रभो नित्यं त्वया दुःखं वीक्ष्यते नगरे मम ।
नातः परं परं सोढुं शक्नोमि जरयातुरः ॥८५॥
दुःखलक्षसमुद्विग्नं जीवनं वा हर प्रभो ।
दारिद्र्यं वा स्वबन्धूनां दृप्तदुर्गतिकारणम् ॥८६॥
कुरुषे न द्वयोरेकमिच्छया यदि सत्वरम् ।
प्रथमोपस्थिते तर्हि वरिष्यामि स्वतन्त्रताम् ॥८७॥
आत्मनाशकृतं पापं तदा यत् सम्भविष्यति ।
तत्राहं नापराद्धः स्यां यतस्त्वं तत्र कारणम् ॥८८॥
भेदबुद्धिरविद्यायाः प्रभावादिति शासनम् ।
किमविद्याविनिर्मुक्ते त्वय्यास्ते सा चिरन्तनी ॥८९॥
धनिकेभ्यः सुखं दत्से दीनेभ्यो दुःखमीदृशम् ।
ईश्वरे त्वयि वैषम्यं नैर्घृण्यमपि निष्ठितम् ॥९०॥

जन्मान्तरीणदैवानां सामर्थ्यान्निरवग्रहात् ।
अथवात्र दरिद्राणां दुःखराशिः प्रकाशते ॥९१॥
यावदेव च दैवानां तेषां दुष्टफलस्पृशाम् ।
न क्षयो जायते भोगात्तावदेव तथा गतिः ॥९२॥
यदि त्वमात्मनो रूपं दर्शयेथा ममाक्षिणी ।
तदैव दुरदृष्टं मे विना भोगं विनङ्क्ष्यति ॥९३॥
उपायं नापरं वीक्षे शिक्षेयं शास्त्रदर्शिता ।
भोगेनापि विना कर्म क्षीयते विष्णुदर्शनात् ॥९४॥
अथवा दुःखसम्भिन्नं सुखमात्रमिति श्रुतिः ।
सुखहेतौ शुभादृष्टेऽप्यस्पृहां समुपादिशत् ॥९५॥
दुःखात्यन्तविनिर्मोक्षलक्षणं मोक्षमर्थये ।
अन्यथा दुःखभोगस्य परिहाणं न सम्भवि ॥९६॥
करुणां कुरु कारुण्यरत्नाकर तवञ्जसा ।
अन्यथा नामधेयस्य कलङ्कस्ते भविष्यति ॥९७॥
न मे मनोरथं यावत् साफल्यमुपनेष्यसि ।
न तावत् परिहास्यामि स्थलिमेतां दृढक्रमाम् ॥९८॥
इत्थं दुःखाश्रुभारेण विप्लुते स्थविरे द्विजे ।
उच्चचार नभोमार्गे वाणी काप्यशरीरिणी ॥९९॥
द्विज पूजय सत्यं मां द्विजोक्तं विधिमाश्रितः ।
येन ते सर्वदुःखानामवसानं भविष्यति ॥१००॥
विष्णोः सत्याभिधानस्य पूजां मे भुवि वर्तयन् ।
परार्थं स्वार्थवत् कामं निष्पादय शिवोत्तरम् ॥१०१॥
श्रुत्वाकाशभवां वाचं विप्रोऽसौ प्रीतमानसः ।
प्रणनाम हरिं भक्त्या कृतज्ञेनान्तरात्मना ॥१०२॥
प्रबुद्धायां विभावर्यामथ स्वजनसंवृतः ।
हृष्टो विप्रः स्मरन् विष्णुं सुप्तस्तत्रैव मन्दिरे ॥१०३॥

ललाटलम्बिनी निद्रा नयनं समुपास्पृशत् ।
अवशेन्द्रियकायोऽसौ स्वजनैः सुप्तिमाश्रयत् ॥१०४॥
अथास्य सुप्तस्य समर्चनागृहे श्रीसत्यदेवस्य कृपाप्रभावतः ।
दीनोचितं पर्णकुटीरमञ्जसा हिरण्मयं रत्नचितं व्यराजत ॥१०५॥

इति श्रीकालीपद-तर्काचार्य-कृते सत्यानुभावे महाकाव्ये
सत्यपूजोत्सवो नाम अष्टमः सर्गः ।

## नवमः सर्गः

अथोपयाता विलयं विभावरी द्विजस्य दुःखेन समं तमस्विनी ।
प्राचीमुखं कुङ्कुमरागरञ्जितं विधाय दृश्योऽजनि सूरसारथिः ॥१॥
मलीमसा कान्तवियोगवैशसात् सरोजिनी प्राणपतिं चिरात् परम् ।
मिलन्तमुद्वीक्ष्य विकस्वरानना प्रमोदगीतिं विदधेऽलिगुञ्जितैः ॥२॥
सुधाकरस्पर्शसुकोमलाबला कुमुद्वती तीक्ष्णकराद् भयं गता ।
त्वरावती संवृणुते स्म विग्रहं त्रपावतीवाधिगुणा वराङ्गणा ॥३॥
कुमुद्वतीगर्भशयो मधुव्रतः समेत्य कारागृहबन्धनं तदा ।
चकार तारं रुदितं शुचा चिरम् विमुक्तये व्यर्थमनर्थदुःखितः ॥४॥
पयःप्रदानेन चिराय तर्पणीं विभावरीं स्वामिव दिव्यमातरम् ।
समीक्ष्य कालेन विलीनविग्रहां तुषारवाष्पैर्व्यलपद् द्रुमावली ॥५॥
सुनीलशष्पेषु तुषारबिन्दवो विभान्ति वर्षोपलखण्डसम्मिताः ।
यथा महानीलशिलाधिरोपिता विकस्वरा दीव्यति हीरकावली ॥६॥
ये कौशिका नैशतमःसमागमात् पुरा प्रहृष्टा व्यचरन् समन्ततः ।
प्रभातमासाद्य त एव दैवतः समागता हन्त तमोमयान्धताम् ॥७॥
रथाङ्गसंज्ञः सकलां निशामसौ प्रियावियोगेन विदग्धमानसः ।
अवेक्ष्य रक्तामिव वासवीं दिशम् प्रियाप्तये पक्षपुटं व्यधूनयत् ॥८॥
कान्तामभि प्रस्थित एष बान्धवो व्रजंस्तदा मध्यपथे सुसङ्गताम् ।
विलोक्य तां नैशवियोगवेदनालयेन लोकोत्तरमोदमासदत् ॥९॥

द्रुमाः कियन्तः कुसुमैः सुगन्धिभिः कृतज्ञताप्रेरणयेव सत्वराः ।
वसुन्धरामात्मरसेन पोषिकामपूजयन्नम्रशिरोभिरानताः ॥१०॥
अग्न्याहिता येऽनुदिते दिवाधवे चरन्ति होमं विधिदिष्टमिष्टदम् ।
पूर्वेद्यु रासादितहोमसाधनास्त्वराजुषस्ते व्यदधुर्हुतिक्रियाम् ॥११॥
श्रितोदये भास्वति होमनिष्ठिकाम् वैकल्पिकीं येऽनुसरन्ति नैष्ठिकाः ।
ते प्रातरासादयितुं समित्कुशं दिशो व्रजन्ति स्म तदाऽविलम्बितम् ॥१२॥
विहृत्य हिंस्राः पशवः समग्रां निशां सुतृप्ताः पिशितैः पशूनाम् ।
आरण्यकुञ्जे निभृते प्रभाते सुप्तिं गताः श्रान्तिविनोदनार्थम् ॥१३॥
मृगादयो ये पशवः किलान्ये ते सुप्तिमासाद्य निशां प्रभाते ।
व्यपोहितुं सुप्तिकृताङ्गजाड्यं शरीरभंगं बहुधा प्रचक्रुः ॥१४॥
उदित्वरो मङ्गलमन्त्रशब्दः प्राभातिकः शुद्धपदस्वराढ्यः ।
शय्योत्थितानां परिहाय सुप्तिं नभो जनानां मुखरं वितेने ॥१५॥
पटुर्वटूनां श्रुतिमन्त्रपाठिनाम् उदात्तपूतस्वरशुद्धिशोभितः ।
विशेषभृद् वेदरवः समीरणं पवित्रतामेव निनाय सर्वतः ॥१६॥
केचित् सरिन्मार्गमगुः सहाग्रहाः सुत्याकृते धर्मविदो बिबुसमाः ।
स्नानोत्थिताः केचन वल्कलस्रुतैरपां पृषद्भिः सिषिचुः पथो रजः ॥१७॥
केचित् पितृभ्यः सलिलाञ्जलीन् ददुः प्रानर्चुरन्ये कुसुमादिभिः सुरान् ।
पुष्पाण्यनृत्यञ्जधिवीचि हर्षतो मत्वेव तेन स्वकजन्म सत्फलम् ॥१८॥
निवृत्तदोहाः प्रतिरुद्धवत्सकाः क्षेत्राय मुक्ताः क्षुधिता गवां गणाः ।
नदीप्रवाहेण समा समुत्सुकाः पथि व्रजन्ति स्म रुषा विचित्रया ॥१९॥
या पौरवीथी विजनाप मूकतां निशागमे रिक्ततया समेधिता ।
अनायता सात्र जनैः क्रमागतैर्बभूव रावैर्मुखरा नवोदया ॥२०॥
हृतप्रसूना कुसुमावचायिभिर्लता बभासे विधवेव कामिनी ।
दरिद्रनारीमिव तस्करा यथा विहाय जग्मुर्मधुपा विभूषणाम् ॥२१॥
निशामशेषामुपभुज्य सोत्सवं प्रियां विहाय प्रतियाति नायके ।
दिनं समग्रं विरहाधिभावना व्यमूमुहत्तां दयितां निशाक्षये ॥२२॥

गतेऽथ कान्ते विवशाधिकाधिना क्षणं तटस्था गगने कृतेक्षणा ।
क्षणाद् विमुक्ता विधये क्षणात् परं जगाम मन्दं गुरुभीतिकर्षिता ॥२३॥
प्रभातवातः प्रववौ समन्ततः कृतावगाहः शिशिरे सरोवरे ।
प्रसूनगन्धं प्रतिमन्दिरं वहन्ननन्यसामान्यवदान्यतां दधौ ॥२४॥
राजा द्विजानामुपगम्य वारुणीं पपात रक्तो यदसाम्प्रतं न तत् ।
पतिव्रताधर्मपराश्च तारकास्तमन्ववर्तन्त रुचा विवर्जिताः ॥२५॥
वणिग्जना दस्युभिया निशागमे निवर्त्य नावं क्वचिदाप्तविश्रमाः ।
प्रातः प्रकाशं प्रसमीक्ष्य नन्दिताः स्वमार्गमाश्रित्य पुनः प्रतस्थिरे ॥२६॥
निशाव्यपायेन विमुक्तसुप्तयः कलं विहङ्गा विरुवन्त उच्चकैः ।
निवेदयन्ति स्म दिनोदयश्रियं विधातुमाराद् भुवनं क्रियोन्मुखम् ॥२७॥
विहाय नीडं विहगाः समुत्सुकाः खाद्यानि चेतुं गगने कृतक्रमाः ।
मन्दैस्तथा शीघ्रतरैर्गतिक्रमैः स्थैर्यं गताः काम्यपदे व्यवस्थिताः ।२८॥
अर्घ्यं यदर्घ्याय ददुर्विवस्वते द्विजा अपाठ्य चितरक्तचन्दनम् ।
मन्त्रप्रभावात्तमुपागतं ध्रुवं तदेव तस्योपदिदेश रक्तताम् ॥२९॥
करैः सहस्रैस्तिमिराणि मार्जयन् सरोजराजिं स्वरुचा प्रसादयन् ।
कुमुद्वतीं शोककृशां विभावयन् नभोऽङ्गनं प्राप रविः शनैश्चरन् ॥३०॥
प्रभातवातेन तदा प्रसर्पता प्रसूनगन्धानुगशैत्यशालिनः ।
सुप्तिं श्रितस्य स्वजनैः समं पुरे द्विजस्य निद्रा वपुषो व्यपासरत् ॥३१॥
उन्मील्य नेत्रे जडतामुपेयुषी द्विजोऽथ सर्वं स्वपुरं तृणैः कृतम् ।
हिरण्मयं वीक्ष्य गतोऽतिविस्मयं विलोकितं स्वप्नमयं व्यचिन्तयत् ॥३२
ज्वलन्ति हेम्ना रचिता महागृहाः स्तम्भैर्महारत्नमयैः सुशोभिताः ।
समन्ततो हीरक-मौक्तिकावली चकास्ति पर्यस्ततमःसमागमा ॥३३॥
कुड्येषु नानाविधशिल्पचातुरी विचित्ररत्नैरुपकल्पिता स्थिता ।
अनल्पशिल्पा मणिशालभञ्जिका कपोतपालीषु लसन्ति सप्रभम् ॥३४॥
सुवर्णपर्यङ्कगतोऽस्मि बान्धवैः सुखं शयानः किमिदं महाद्भुतम् ।
अशेषदासैरुपचारतत्परैः परैः सपर्याविधिनास्मि सेवितः ॥३५॥

स्वप्नः कुतो मे स हि सुप्तिसम्भवः प्रबुद्ध एवास्मि विशेषचेतनः ।
न विभ्रमो वा स हि दोषजो ध्रुवम् न तादृशी दोषगतिश्च वीक्ष्यते ॥३६॥
तन्नूनमेतत् परमार्थदर्शनं निदानमस्याथ किमस्तु संस्तुतम् ।
ध्रुवं समर्चापरितोषितो हरिः कृपापरीतो मम सम्पदः पदम् ॥३७॥
विचिन्त्य चैवं सुखराशिविह्वलः प्राबोधयत् स्वां दयितां सुतांस्तथा ।
पदे पदे विष्णुपदं स्मरन्नसौ विशालचित्राम्बुधिमग्नतामगात् ॥३८॥
अथ क्षणेनैव जनाननक्रमाद् वचः प्रचारं समगात् पुरान्तरे ।
श्रीसत्यनारायणसेवनोद्भवा बभूव विप्रस्य विभूतिरित्यदः ॥३९॥
सुविस्मिताः काञ्चनपत्तनाश्रयास्तदीक्षितुं तत्र जनाः समागमन् ।
विभाव्य तद्दैवतमद्भुतोदयं नतिप्रकारैः समभावयन्निदम् ॥४०॥
अथो पुरे तत्र चिरात् कृतस्थितिर्वणिग्वरो लक्षपतिः समाख्यया ।
जनाननाद् वृत्तमिदं समित्वरं समेत्य लेभे त्वरया तमाश्रयम् ॥४१॥
तदद्भुतं वीक्ष्य पुरं हिरण्मयं विचित्ररूपं सुरमन्दिरोपमम् ।
विचिन्तयामास महेन्द्रसन्निभः सविस्मयो विस्मयतामुपाश्रितः ॥४२॥
पुरा द्विजागारमितस्तृणाचितं सुजीर्णमालक्षि दरिद्रतोचितम् ।
कथं तदेतद् गतयैकया निशा सुवर्णशिल्पारचितं विभाव्यते ॥४३॥
ज्वलन्ति दिव्या मणयः समन्ततः पुरं विभातीव गतं सुमेरुणा ।
किमित्यकस्मादिह देवताकृपा लसद्बला जातफला विलोक्यते ॥४४॥
चरन्ति भृत्या बहुकृत्यसङ्कुलाः पुरावरोधे परिचारिकाशतम् ।
दौवारिका द्वारमधिश्रयन्त्यमी लसन्ति वाहा बहवस्तरस्विनः ॥४५॥
महोन्नतं भाति विचित्रतोरणं प्रलम्बिमुक्ताफलमाल्यभूषितम् ।
तत्पार्श्वयो रत्नमयं हरिद्वयं ददाति चित्तेषु भयं प्रपश्यताम् ॥४६॥
सुरोपभोग्ये भवने व्यपेक्षितं यद् यद् वरं वस्तुकुलं निरङ्कुशम् ।
तत् सर्वमेवात्र विभाति भूतये जितः सुमेरुः पुरशोभयाऽनया ॥४७॥
धनैरमानैर्मम गर्वमीयुषः प्रपश्यतो भूसुरभूरिसम्पदः ।
कुतस्तरां सोऽयमवाप क्षुब्धतां विकारमाकारयति स्म लाघवम् ॥४८॥

गतप्रदोषान् पुरतोऽपि यो द्विजो गृहे गृहे दृष्टचरो वनीयकः ।
निशां स एकां समतीत्य केवलामशेषकोटीश्वरतामुपागमत् ॥४९॥
देवस्य यस्याद्भुतशक्तिशालिनो जनोत्तरोऽयं महिमानुवर्तते ।
स भक्तिपूर्वं सुसमर्चितो नृणाम् अलं मनोवाञ्छितवस्तुसिद्धये ॥५०॥
तदस्य देवस्य समर्चनाक्रमं पृष्ट्वा द्विजं सैव करिष्यते मया ।
अपत्यहीनस्य ममातिशोचतो ध्रुवं वरापत्यमसौ विधास्यति ॥५१॥
इदं विचार्य द्विजमादरादसौ प्रणम्य तत्पादपयोरुहद्वयीम् ।
अपृच्छदच्छं मनसा प्रशोचता मनोरथप्राप्तिमुदा स्मिताननम् ॥५२॥
नमोऽस्तु ते विप्र सुराहितोन्नते ! कृपापरा दृष्टिरितो विसृज्यताम् ।
भवानसामान्यगुणो गुणप्रियः किमन्यथा श्रीपतिरेति तुष्टताम् ॥५३॥
नारायणे सिद्धिरभून्महत्तमा तवाद्य यन्माद्यति चञ्चला त्वयि ।
ममास्ति सम्पत्तिरनुत्तमा परं दहत्यसौ मां विषमानपत्यता ॥५४॥
कियन्ति वित्तानि लसन्ति मे गृहे सुदुष्करा तत् परिमाणकल्पना ।
सुपुण्यलभ्यात्मजसङ्गमादृते फलं न तेषामणुमात्रमीक्ष्यते ॥५५॥
प्रतिक्षणं भूरिवसूनि भाग्यतो मिलन्ति वाणिज्यकृतानि मे पुरः ।
निरामयः कृत्यशतेषु चातुरीं वहाम्यहं काम्यफलोपसंहिताम् ॥५६॥
भार्या प्रिया मे बहुभाग्यशालिनी गृहे स्थिता मूर्त्तिमतीव कल्पना ।
यदीयसौभाग्यगुणैककर्षणाच्चलापि लक्ष्मीरचलेव लक्ष्यते ॥५७॥
शीलेन तस्याः स्वजना ममान्वहं प्रीतिं परामान्तरिकीं प्रवृण्वते ।
प्राणैः पणैस्ते कृतवेदिनस्ततो मदीयकृत्येषु वहन्ति ममताम् ॥५८॥
दीना जना ये विहरन्ति पत्तने ते मत्प्रियायाः करुणाभिरादृताः ।
प्रमुक्तकण्ठं यशसां विघोषणे व्यापारयन्ति प्रचितं परिश्रमम् ॥५९॥
मया यदा यत् परिभोक्तुमिष्यते तदाभिलाषेण समं तदाप्यते ।
न कामनाव्याहतिरस्ति मे क्वचित् स्वतन्त्रता सर्वत एव दीप्यते ॥६०॥
निदाघमध्याह्नदिवाकरद्युतौ समेधितायां क्षितिगर्भकेतने ।
समस्तभोगोचितवस्तुसम्भृते न तापलेशोऽपि मयानुभूयते ॥६१॥

वसन्तपुष्पाभरणैरलङ्कृते लताचिते पुष्पवने शुचिस्मिते ।
मृदुब्रजन्मालयमारुताञ्चिते प्रशस्तशुक्लोपलपीठसम्भृते ॥६२॥
मरालमालाकुलवापिकायुते सरोजसौगन्ध्यचलन्मधुव्रते ।
पिकावलीकोमलकाकलीहृते कियद्विलासं रचयामि संस्कृते ॥६३॥
प्रसूनवल्लीमयकुञ्जकेतने वापीतटे मन्दसमीरसेविते ।
प्रशस्तपीठे नवरत्नमञ्जुले प्रियामुपादाय कियद् विधीयते ॥६४॥
सरोवरे रत्नजलावतारिकाशताकुले केलिकलामुपाश्रितः ।
प्रभूतलीलाप्लवनानि साधयन् अहो महामोदविधौ कृतश्रमः ॥६५॥
सुरत्नसिंहासनमाश्रितो रहः सुसेवितोऽहं परिचारिकाशतैः ।
सुशीतसच्चामरवालवीजितः सुराधिनाथेन समो विभावितः ॥६६॥
विदेशयात्रा बहुचित्रसाधना मया कृता नैकश एव यत्नतः ।
कति प्रदेशा विविधा विलोकिता गुणप्रियाणां हृदयप्रतोषणाः ॥६७॥
कदापि काम्बोजतुरङ्गवाहनः कदापि दिव्यां तरणीमुपाश्रितः ।
कदापि नागेन्द्रगतः सुखाप्तये पथि प्रचारं रचयामि भाववित् ॥६८॥
सौधं समारुह्य च सप्तभूमिकं सुमेरुशैलेन समं समुच्छ्रितम् ।
विलोकये पञ्चदशीनिशाकरं सुनिर्मलाकाशतले विकस्वरम् ॥६९॥
समीरचञ्चत्तरशालिमञ्जरीतनुश्रिया कोमधुरां वसुन्धरां ।
सचेतसामन्तरतर्पणोचितां शरत्प्रसन्नाम्बुसितां विलोकये ॥७०॥
वर्षागमे कन्नकदम्बशोभिता नवीनजीमूतभूताम्बरद्युतिः ।
सुशीतलस्पर्शसमीरसेविता विलोकिता च प्रकृतिर्मनोहरा ॥७१॥
दूर्वादले श्यामलतासमाकुले प्रातस्तरां सूरकरैः समुज्ज्वलाः ।
विलोकिताः श्वेततुषारबिन्दवः सुरोचिषो मौक्तिकमालिका यथा ॥७२॥
नदीं पयोधेरभिसारतत्परां तरङ्गितां चारुगतिं सुनिर्मलाम् ।
प्रदोषदोषाकरचन्दनाङ्कितां विचित्रनक्षत्रविभूषणाञ्चिताम् ॥७३॥
सायं सुदूरागतशङ्खदुन्दुभि-ध्वनिप्रसादेन विशेषनादिताम् ।
तरीप्रदीपप्रतिबिम्बवाहिनीं व्यलोकयं तीरतले कृतस्थितिः ॥७४॥

न शान्तिरन्तःकरणे कदापि मे समस्तमेवात्तसुखं विभाव्यते ।
अपत्यशून्यस्य ममानुवासरं जगत् समग्रं प्रतिभात्यभास्वरम् ॥७५॥
गृहेषु पत्नी मलिनानना चिरं सुताननादर्शनदुःखविक्षता ।
प्रतिक्षणं मे हृदयस्य वेदनां तनोति सौभाग्यशतेऽपि सुस्थिते ॥७६॥
न सा यथाकालमुपैति भोजनं न वा विधत्ते वपुषः प्रसाधनम् ।
महोत्सवं हा विजहाति दूरतस्ततो जगत्सर्वमभूद्विडम्बनम् ॥७७॥
यदा प्रिया मे प्रतिवेशिनीगणं सुतावलीलालनमोदविह्वलम् ।
समीक्षते लुप्तनिमेषचक्षुषा तदा मनो याति ममातिकश्मलम् ॥७८॥
यदस्ति यत्रातिविनोदसाधनं तदेव दृष्टं कृतमादरेण वा ।
परं न केनापि सुखं समुद्गतम् चिराय कष्टा विषमानपत्यता ॥७९॥
स्मृत्वा स्मितं कल्पनया सुतस्य मे मन्ये तृणं पञ्चदशीनिशाकरम् ।
अर्द्धोच्चरद्वाक्यपदानुचिन्तया पिकस्य वाणी मधुरा मुधायते ॥८०॥
गृहे विराजन्ति जनाः परःशता बाला युवानः स्थविराश्च शाश्वतम् ।
तथापि शून्यं भवनं समीक्ष्यते विना वतापत्यसमागमं परम् ॥८१॥
कियन्ति तीर्थानि पुरा किलाश्रमं सुराः कियन्तो मयका प्रयाचिताः ।
कियत्सु वा देवगृहेषु यापिता निशास्तनूजाननदर्शनाशया ॥८२॥
आराधिता मन्त्रपदैश्च देवता यथाविधानं विविधैरुपायनैः ।
दौर्भाग्यतो मे निखिलं निरन्वयम् हेतुः फले निष्प्रतिबन्ध एधते ॥८३॥
किमीदृशं मे नहि वेद्मि दुष्कृतं न तावता कृत्यशतेन यत्क्षयः ।
न कर्म भोगेन विना निवर्त्तते श्रुतं किलेदं व्यभिचारवर्जितम् ॥८४॥
अचेतनादृष्टनियामकश्चिरं परेश्वरः शास्त्रनयैः प्रसाधितः ।
कृतस्य मे पुण्यगणस्य तत्कथं नियामको नैष विशेषतः स्तुतः ॥८५॥
दुःखं फलं दुष्कृतसम्भवं भवे मया चिरादेव हि भुक्तमुल्वणम् ।
ततोऽपि किं दुष्कृतसंक्षयो न मे यतो न सिद्धा सुतसम्पदेषणा ॥८६॥
यथा तथा वास्तु तव प्रपश्यतो निशीकया यस्य समर्च्चनावशात् ।
हिरण्मयं तावदिदं पुरोत्तमं समुद्गतं तस्य कृपा व्यपेक्ष्यते ॥८७॥

स दैवतानामपि दैवतं परं भूतो महिम्ना जनतातिवर्त्तिना ।
ततस्तदाराधनमेव मे वरं निवर्त्तकं विघ्नगणस्य सम्भवेत् ॥८८॥
प्रशाधि मां शिष्यतयार्थिनं विभो, विभोः समर्चाविधिमस्य निष्ठितम् ।
यथाविधानेन विधाय तं विधिं मनोरथं साधयितुं यथा क्षमे ॥८९॥
शुचाचितं तस्य वचो वणिक्पतेरभिख्यया लक्ष्यपतेः स शुश्रुवान् ।
द्विजो विदूनेन हृदाकिरद्गिरः ससान्त्वमाशीर्वचनं प्रवर्त्तयन् ॥९०॥
स्वस्त्यस्तु ते लक्ष्यपते विशेषतस्त्वदीयवृत्तं विदितं ह्यशेषतः ।
जहीहि शोकं त्वयि देवताकृपा विना विलम्बं भवितेति मन्यते ॥९१॥
यस्यार्चया मे समपादि वैभवम् निशैकयालौकिकशक्तिशालिनः ।
स सत्यदेवो भवतापि पूजितः प्रदास्यते मानसवासनाफलम् ॥९२॥
स्वबित्तशाठ्यं परिहायपूजने कृतप्रयत्नस्य हितं निरङ्कुशम् ।
ततो भवानस्य विभोः प्रपूजने स्ववित्तशाठ्ये निदधातु नो पदम् ॥९३॥
शृणु प्रबन्धं विहितं तदर्चने यमाश्रितानां भविता शुभं परम् ।
नियन्त्रितां पद्धतिमेव संश्रितो विना प्रयासं पदमेति वाञ्छितम् ॥९४॥
यथैव देवान्तरपूजने स्मृतस्तथैव सामान्यविधिस्तदर्चने ।
विशेषमत्रानुवदामि ते परं समाश्रवस्व प्रयतः शुभोत्तरम् ॥९५॥
कृतोपवासेन दिनात्यये हरिः समर्चनीयः कुसुमाद्युपायनैः ।
सपादगोधूमकचूर्णशर्करारम्भादिनैवेद्यमयेन वस्तुना ॥९६॥
पूजोपहारैरनुरूपवर्त्तितैः प्रणामपुष्पाञ्जलिभिः समापिते ।
श्रीसत्यनारायणपूजनक्रमे कथामथो स्कन्धपुराणतः पठेत् ॥९७॥
गोधूमचूर्णं कदलीफलन्तथा कर्पूरकं क्षीरमयं घृतं सिता ।
यदेव देवाय निवेदितं पुरा तन्मिश्रयेत् पूतविधानयोगतः ॥९८॥
अथ प्रसादग्रहणाय ये पुरा निमन्त्रिता आप्तजनाः समागताः ।
तेभ्यः प्रसादं प्रविभाज्य भक्तितः स्वयन्ततस्तद्ग्रहणं विधीयताम् ॥९९॥
शिरस्तदं प्रागुपनीय सादरं कृतार्थयेथा रसनामतः परम् ।
तथा प्रसादं प्रविभाजयेत्तथा यथा न तिष्ठेत् कणिका दिनान्तरे ॥९९॥

एवं विधानैः प्रतिपूर्णिमातिथि शुक्रे शनौ वा प्रतिमासमेकशः ।
श्रीसत्यनारायणदेवपूजनं सुसाधितं साधयिता मनोरथम् ॥१०१॥
सत्यप्रभावस्य फलं विकस्वरं महेन्द्रलोकाधिपतित्वमुत्तमम् ।
कृपां विना तस्य न कस्यचिद् भवे मनोरथानां भवति प्रपूरणम् ॥१०२॥
त्वमद्य कोटीशतकाधिपोऽसि यत् तत् सत्यदेवस्य महत् कृपाबलम् ।
नूनं त्वया पूर्वशरीरवर्तिना स सत्यदेवः परितोषितः परम् ॥१०३॥
तथापि यत्ते दुरितं पुराकृतं तनूजलाभप्रतिरोधि जायते ।
तदत्र देहे तव सत्यपूजया प्रणाशमायास्यति नात्र संशयः ॥१०४॥
चान्द्रायणाद्यैरिव दुष्कृतक्षय ईशानुकम्पाभिरपि प्रवर्तते ।
न कर्म भोगेन विना प्रणश्यतीत्ययं प्रवादो न हि कर्ममात्रगः ॥१०५॥
इतः परस्मिन् रविजस्य वासरे पूर्णप्रबन्धेन चितैरुपायनैः ।
श्रीसत्यनारायणमर्चयादरात् स ते हितं सर्वविधं विधास्यति ॥१०६॥
विधाय वाचं विरते द्विजोत्तमे वणिक्पतिर्लक्षपतिर्मुदान्वितः ।
मनोरथं लब्धमिवोपचिन्तयन् जगाद तस्मिन् विनयाहिताञ्जलिः ॥१०७॥
प्रभो कृतार्थोऽस्मि भवत्पदत्विषा यदुज्ज्वलीकर्तुमलं शिरोऽस्मि मे ।
प्रसादतस्ते ननु सत्यपूजन-क्रमो मयाऽवेदि यतो भवेद्धितम् ॥१०८॥
त्वदाज्ञया चारुकृतप्रबन्धया शनौ परस्मिन्निह सत्यपूजया ।
लघूकरिष्ये दुरदृष्टमात्मनो दत्त्वाशिषं पूरय मे मनोरथम् ॥१०९॥
न वित्तकापट्यमिहाश्रयिष्यते करिष्यते शक्त्यनुरूप उत्सवः ।
समग्रकृत्येषु ममेदमुत्तमं भविष्यति प्राणपणं विधानकम् ॥११०॥

अथ मुखजनिमुख्यो वैश्यवर्याय तस्मै
प्रणयरुचिरचेता आशिषं वाचयित्वा ।
स सपदि विससर्ज क्षीणचित्तव्यलीकं
तमभिनिजनिकेतं भाविसौभाग्यहेतोः ॥१११॥
वैश्यो जगाम निजमन्दिरमात्तमोदः
सञ्चिन्तयन्नमितभाग्यगतिं स्वकीयाम् ।

विप्रोऽपि सत्यचरणे प्रणिपत्य भक्त्या
कर्त्तुं दिनादिविहितं सरितं प्रतस्थे ॥११२॥

इति श्रीकालीपदतर्काचार्यकृते श्रीसत्यनारायणीये महाकाव्ये ब्राह्मण-वणिक्-संवादो नाम नवमः सर्गः

## दशम-सर्गः

अथ व्यतीतेषु दिनेषु वैश्यः श्रीसत्यदेवस्य समर्चनार्थम् ।
प्रबन्धमानन्दभृतान्तरात्मा चकार भानोस्तनुजस्य वारे ॥१॥
हिरण्मयी मूर्तिरकारि विष्णोरनल्पमाना कमलायुतस्य ।
हेम्ना कृतानां तुलसीदलानाम् अष्टोत्तरञ्चापि शतं व्यधायि ॥२॥
सहस्रमष्टोत्तरमम्बुजानां श्वेतत्विषां सौरभसारभाजाम् ।
समाहृतानां सितकान्तिधारा पूजागृहं तस्य सितं प्रचक्रे ॥३॥
सुवर्णरौप्यादिमयानि तस्मिन् सर्वाणि पात्राणि समुज्ज्वलानि ।
पूजागृहे रत्नगणोपनद्धे लोकोत्तरा दीप्तिरभूत् प्रकीर्णा ॥४॥
प्रत्येकमुद्दीप्तशतप्रदीपाः प्रदीपवृक्षा रजतप्रसूताः ।
तन्मन्दिरं श्वेतशिलानिबद्धं सुधांशुलोकप्रतिमं प्रचक्रुः ॥५॥
ज्योतिर्मये जाग्रति सत्यदेवे तमो न योग्यस्थिति लेशतोऽपि ।
इत्येव दीपास्तिमिरं तदन्तर्विनाशयन्तः प्रतिपादयन्ति ॥६॥
सव्येऽपसव्ये पुरतश्च पृष्ठे वहिस्तथोर्ध्वे ज्वलिताः प्रदीपाः ।
सुवर्णरौप्यद्युतिदिग्धदेहाः प्रपश्यतां नेत्ररुजं सृजन्ति ॥७॥
ससौरभोद्वर्तितधूपधूमैः समन्ततो भान्ति पवित्रभावाः ।
शोभा चतुःषष्ट्युपचारकाणां प्रकर्षभाजामभवद्गरिष्ठा ॥८॥
स्तम्भेषु नद्धं बहुवर्णचित्रं चीनांशुकं चारुचरत्पताकम् ।
ऊर्ध्वे च माल्यं विविधप्रसूनं तदन्तरञ्चाणि च लम्बितानि ॥९॥
स्मितप्रसूनेऽक्षतविल्वपत्रे गन्धादिजुष्टे तुलसीदलाढ्ये ।
हरीतकी-कृष्णतिलानुषक्ते दूर्वाचिते श्रीरिह पुष्पपात्रे ॥१०॥

पूजागृहद्वारि सनीरकुम्भौ सिन्दूरचित्रौ नवपल्लवाढ्यौ ।
रम्भातरुस्तम्भयुगेन युक्तौ सनारिकेलावुभयोर्विभाताम् ॥११॥
विचित्रकौशेयवितानमूर्ध्वं प्रान्तोल्लसन्मौक्तिकचारुमालम् ।
अधो विचित्रोज्ज्वलरत्नवेदी तस्यां सुवर्णप्रतिमा हि विष्णोः ॥१२॥
शङ्खं गदां चक्रमथो सरोजं भुजेषु बिभ्राणमशेषकान्तम् ।
वामे रमाढ्यं गरुडासनस्थं दिव्याम्बरं माल्यधरं ज्वलन्तम् ॥१३॥
भक्तार्थदं निर्जितकल्पवृक्षं लोकातिगं शक्तिमतां वरिष्ठम् ।
श्रीसत्यदेवं स वणिक्प्रधानः प्रचक्रमे पूजयितुं यतात्मा ॥१४॥
वीणा मृदङ्गा मुरजाश्च कांस्याः शङ्खाः सघण्टाः पटहाः सतूर्याः ।
नानाविधध्वानमयाः समन्तात् समं नभः शब्दमयं प्रचक्रुः ॥१५॥
जयध्वनिः सद्मनि सङ्गतानां तस्मिन्नु जनानां मुदितान्तराणाम् ।
समुच्चरन् दूरतरान्तरिक्षं शब्दान्तरश्रीरहितं चकार ॥१६॥
गोधूमचूर्णै रचितौ महीध्रौ सिताभिरारादुपपर्वतौ च ।
प्रत्यन्तशैलौ कदलीफलैश्च फलान्तरैरन्तरिता च भूमिः ॥१७॥
हैमासनाद्यैरुपचारकल्पैर्नानाविधैः पूततमैर्विचित्रैः ।
पूजा प्रवृत्ताऽङ्गसमर्चनाभिः स्वलङ्कृता श्रीसहितस्य विष्णोः ॥१८॥
धूपोत्थधूमैः कृतमन्धकारं यावद् गृहाभ्यन्तरमन्तराले ।
तावत् प्रदीप्ता अपि भूरिदीपा विलोचनागोचरतां हि वव्रुः ॥१९॥
एकैकशः श्वेतसरोरुहाणि सहस्रसंख्यानि निवेदितानि ।
शतञ्च हेम्नस्तुलसीदलानां परात्मने श्रीपतये वितीर्णम् ॥२०॥
ससौरभैः पुष्पित-पुष्पगुच्छैरच्छैः प्रणीताञ्जलिना तदानीम् ।
ध्यानेन सत्यं हृदि वेशयित्वा सम्पूजयामास स वैश्यवर्यः ॥२१॥
क्षणे क्षणे सत्यजयानुवादे प्रवर्तमाने जनताभिवादे ।
तन्मन्दिरे धूमकृतान्धकारे पुष्पादिभिः सञ्चितगन्धसारे ॥२२॥
धूपान्धकारं परिभिद्य दीपेष्वथान्तराले परिदीपितेषु ।
प्रणाममन्त्रेष्वनुवाचितेषु प्राप्ता समाप्तिं प्रकृता समर्चा ॥२३॥

वणिक् ततो मानसमात्मनीनं निवेदयामास सहैव पत्न्या ।
दयस्व हे देव कुरुष्व सिद्धिं मनोरथानां चिरसञ्चितानाम् ॥२४॥
श्रीसत्यदेवस्य महामहिम्नः कथामथासौ स सभक्तिचेताः ।
विशुद्धभाषाद्रविणां मनोज्ञां विघोषयामास तदा सभायाम् ॥२५॥
पुनस्ततः पूजनमस्य कृत्वा श्रीसत्यदेवस्य हितैकहेतोः ।
साङ्गं कृतं दक्षिणया सुवर्णैः समागतेभ्यश्च ददे प्रसादः ॥२५॥
ततः समग्रे प्रतिवेशिवर्गे जयं समुद्घोष्य गृहं प्रयाते ।
पत्न्या समं स स्वजनैश्च सार्धं प्रसादमादाय मुदं प्रपेदे ॥२७॥
तस्मिन्नथो देवगृहे समग्रां रात्रिं स वैश्यो यमिनां वरिष्ठः
श्रीसत्यदेवस्य यशःप्रवादैरयापयत् स्वीयजनैः प्रसन्नः ॥२८॥
पक्षे हि शुक्ले प्रतिमासमेवं दिनेशपुत्रस्य दिने प्रदोषे ।
स्ववित्त-कापट्यमसूचयित्वा श्रीसत्यदेवार्चनमाचचार ॥२९॥
अथास्य काले कियति व्यतीते गर्भं दधे वैश्यवरस्य पत्नी ।
श्रीसत्यदेवस्य यशःप्रकर्षः समन्ततस्तावदभूत् प्रकीर्णः ॥३०॥
शास्त्रैः समादिष्टमवेक्ष्य सम्यग् गर्भस्य संस्कारकृते व्यतानीत् ।
संस्कारकृत्यानि महोत्सवेन श्रीसत्यदेवस्य पदं प्रणम्रः ॥३१॥
यदा यदा दोहदकामना या तदा तदा सा परिपूरिताऽभूत् ।
न गर्भसन्धारणजन्यमस्याः कष्टं लवेनापि समुद्बभूव ॥३२॥
सा शृण्वती धर्मकथां शमस्था चित्तप्रसादं सुचिरं चिकाय ।
धात्रीजनानामुपदेशवश्या न स्वल्पमप्युच्चलति स्म भव्यात् ॥३३॥
निःशेषमेवं नियमं चरन्ती मासे प्रपूर्णे दशमे कदाचित् ।
लग्ने शुभे वैश्यवरस्य पत्नी सरोजशोभां सुषुवे तनूजाम् ॥३४॥
सरोजपत्रायतलोचनायास्तस्या असामान्यवपुःप्रभाभिः ।
तत् सूतिकागारमभूत् सशोभं गौरीरुचा शैलपतेर्गृहेव ॥३५॥
न सा प्रसूतिः प्रसवोत्थपीडां विवेद देवस्य कृपाविशेषात् ।
बालापि गर्भात् क्षितिपीठमाप्ता स्वच्छन्दतः खेलनमाततान ॥३६॥

मुखश्रिया शुभ्रकरः परास्तः, पद्मं जले मग्नमभूत् सलज्जम् ।
भुजाप्रकर्षं परिहस्य वल्ली वनं गताऽश्रूणि विमुञ्चतीव ॥३७॥
सा जातमात्रैव वणिग्वरस्य मनोविषादं लघयाञ्चकार ।
समुद्गते शारदपूर्णचन्द्रे विध्वंसते जागतमन्धकारम् ॥३८॥
प्रफुल्लपङ्केरुहकोमलश्रीः पुत्राधिका सा तनुजापि मेने ।
अलौकिकी सत्यकृपेव मूर्ता लोकातिगं मोदमसौ वितेने ॥३९॥
जन्मोत्सवे दीव्यति तत्र तस्याः सम्भाविता दीनजना धनाद्यैः ।
सदक्रियन्त प्रियसूचका ये नानाविधैरेव गुरूपहारैः ॥४०॥
स सूतिकाभिग्रहनिग्रहार्थं सुताशरीरे कवचादि दत्त्वा ।
निरङ्कुशं मङ्गलमादधानः प्राचीनमाचारमुपाचचार ॥४१॥
सम्भाविता विप्रगणाः समेता आशीर्वचोऽस्याः प्रददुः प्रसन्नाः ।
परःसहस्रा मुदिता दरिद्राः सुमङ्गलं सत्यजयं शशंसुः ॥४२॥
तस्मिन् दिने वैश्यपुरे जनानामभ्यागतानां परिमर्दभाजाम् ।
कल्याणकोलाहलसङ्कथाभिस्तत्पत्तनं मोदमयं प्रतीये ॥४३॥
मृदङ्गवीणामुरजादिवाद्यैः सङ्गीतकोलाहलचारुनृत्यैः ।
हासोपहासैरुपजातहर्षैः सोच्छ्वासमारान्नगरं तदासीत् ॥४४॥
श्रीसत्यदेवस्य विभोर्महिम्ना सर्वं सुसाध्यं यदसाध्यरूपम् ।
वन्ध्याऽप्यसौ तेन हि वैश्यपत्नी लेभे सुतामित्यवदन् नगर्याः ॥४५॥
रोगी रुजो मुक्तिमवाप्तुकामो दीनो धनं वैश्यजनाश्च लाभम् ।
निःसन्ततिः प्राप्तुमथाप्यपत्यं व्यधुः प्रतिज्ञामभि सत्यपूजाम् ॥४६॥
अन्धेन लब्धोज्ज्वलदृष्टिशक्तिः सत्यस्य पूजां प्रविधाय तस्मिन् ।
खञ्जेन मञ्जुर्गतिशक्तिराप्ता श्रुतिश्च तद्वद् बधिरेण रम्या ॥४७॥
यद् यस्य काम्यं तदकालहीनं सत्यार्चया तेन तदेव लब्धम् ।
ततः क्रमेणास्य महामहिम्नः सत्यस्य सर्वत्र गुणाः प्रकीर्णाः ॥४८॥
सुधाकरस्येव रुचिर्मनोज्ञा क्रमेण तस्या वणिजः सुतायाः ।
कलेवरे लब्धपदा भवन्ती लोकोत्तरां प्रीतिमयच्छदन्तः ॥४९॥

सुशोभनाऽसौ गमिताङ्कमङ्कं समादरेण स्वजनैः सदैव ।
पृथ्वीतलस्पर्शनजं कलङ्कं कलेवरे नोपजगाम बाला ॥५०॥
समुज्ज्वलै रत्नमयैर्विचित्रैर्विभूषणैः सौम्यशरीरमस्याः ।
विभूषितं मानसतस्कराणां तेषामसीमां श्रियमाततान ॥५१॥
शीर्षे किरीटं गजमौक्तिकानां श्रुतौ लसल्लोहितरत्नशोभा ।
कण्ठे च मुक्तावलिरुल्वणश्रीर्मध्यस्थलप्रोतशुभेन्द्रनीला ॥५२॥
भुजद्वये हीरकशृङ्खलाभ्यां नद्धौ समिद्धाविह पद्मरागौ ।
वैदूर्यरत्नप्रभवः प्रभावान् कफोणिबन्धे वलयो बभासे ॥५३॥
अनुत्तमं हीरकखण्डदीप्तं करप्रकोष्ठे कटकं महार्घम् ।
ताम्रारुणा चन्द्रनिभा नखश्रीः शुभ्रार्चिषा चित्रतमा बभूव ॥५४॥
कटीतटे किङ्किणिका विचित्रा सौवर्णसूत्रग्रथिता सुरत्ना ।
प्रकुर्वता क्षीणकटिप्रमाणं धात्रेव सूत्रं निहितं तदङ्गे ॥५५॥
तत्रैव तत् किङ्किणिकानिबद्धं विचित्रकौशेयमयं सुदीप्रम् ।
स्त्री-जातियोग्यं पटकञ्चुकञ्च शिशोः शरीरे सुषमां व्यधत्ताम् ॥५६॥
पादाग्रयोर्नूपुरहीरकश्रीः पादाङ्गुलीलोहितरत्नभासा ।
सम्मिश्रितानेकमणिप्रदीप्ता देवेन्द्रचापप्रतिमां दधार ॥५७॥
कनीनिका हास्यमयी प्रशस्या सरोजपत्रायतनेत्रलीना ।
मुग्धेव चञ्चद्द्युतिरञ्जनाभा रसैकवश्या भ्रमरीव रेजे ॥५८॥
नासां समुत्क्षां तिलपुष्परम्यां सम्प्रेक्ष्य लज्जावनतः खगेशः ।
कपोलयुग्मेन सुनिर्मलेन पराजिता काञ्चनदर्पणश्रीः ॥५९॥
द्रष्टुः सहास्येन विलोचनेन तन्नेत्रयोगे सति नन्दितायाः ।
सुपक्वबिम्बप्रतिमाधरोष्ठे स्मितं प्रदीपे विधुवत्प्रकाशे ॥६०॥
वीणास्वने जाग्रति कोकिले वा रम्यस्वरं गायति चूतकुञ्जे ।
कदाचिदेव क्षुधया रुदत्याः सुदुर्लभोऽभूत् स्वरसंविभागः ॥६१॥
कन्यामनन्यप्रतिमां वहन्ती स्वाङ्के मुदा वैश्यवरस्य पत्नी ।
स्मितं तदास्ये प्रविलोकयन्ती सर्वं विसस्मार जगत् क्षणेन ॥६२॥

यदृच्छया यस्य किलाङ्कभागं सा शोभयामास गुणैरुदीर्णा ।
स पूर्वपुण्यप्रचयं स्वकीयं कालेन दीव्यत्फलमेव मेने ॥६३॥
आदीयमाना परमादरेण यस्याङ्कतः सर्पति साऽन्यमङ्कम् ।
स मन्युमालिन्यमुपेत्य चित्ते स्वं भाग्यमस्तं गतमेव जज्ञे ॥६४॥
यदुन्मुखी सा स गतः प्रसादं मालिन्यमन्यत्र पदं वृणीते ।
अस्ताचलं शुभ्रकरे प्रपन्ने तत्र प्रकाशस्तिमिरञ्च भूमौ ॥६५॥
तस्मिंस्तदा वैश्यपुरे विशाले नानाकृतिव्याप्तृतलोकमाले ।
सा वैश्यकन्याऽखिललक्ष्यभूता दिने दिने चन्द्रकलेव पुष्टा ॥६६॥
यावत् सुता सा मधुराक्षराणामुच्चारणं कर्तुमलं बभूव ।
तावत् स वैश्याधिपतिर्विशेषात् तदक्षरेष्वेव रतिं दधार ॥६७॥
अधीश्वरस्तातपदा यदेयं तातं द्रुतं धावति नर्तकीव ।
तावत् सुधाम्भोनिधिमाधिबाधाविधायकं वेत्ति कराम्बुजस्थम् ॥६८॥
नृत्यत्पदा कुञ्चितकुन्तलान्ता मुखेन कृष्णालकमञ्जुलेन ।
कलङ्कलेखामधुरं सुधांशुं सौभाग्यभोग्या नियतं विजिग्ये ॥६९॥
सा वैश्यकन्या गुरुभिर्विनीता स्वाध्यायदीप्रप्रतिभाविशेषा ।
चित्तान्धकारेण समं सुमध्या तत्याज सीमां खलु शैशवस्य ॥७०॥
दाक्षिण्यमक्ष्णोरगमत् प्रवासं तत्रातिथित्वं समगात् कटाक्षः ।
देहश्च पूर्णायतनो बभूव लावण्यलीला व्यलुठत्तदङ्गे ॥७१॥
ज्योतिर्यथा चान्द्रमसं समन्तान्मूर्त्तिं सुधांशोर्ज्ज्वलदावृणोति ।
तथैव तारुण्यभवा नवीना लावण्यधाराऽवृणुताङ्गमस्याः ॥७२॥
तदा पदं प्राप तदीयचित्ते कन्दर्पदर्पः क्रमशो विलासैः ।
स्त्रीपुंविभेदाद् व्यवहारभेदस्ततः प्रभृत्येव बभूव तस्याः ॥७३॥
चाञ्चल्यमत्युल्वणमाप लोपं स्थैर्यं पदे तस्य पदञ्चकार ।
विहाय सा शैशवशोभिलीलां शिल्पेष्वनल्पेषु दधार रागम् ॥७४॥
ग्रथ्नाति मालां बकुलप्रसूनैः सूचीमुखैः सीव्यति दिव्यवस्त्रम् ।
अनेकरागाञ्चितपट्टसूत्रैश्चित्रैस्तथा रञ्जयति स्म भित्तीः ॥७५॥

पितुः समीपेऽपि यदा सलज्जा प्रोद्भिन्नतारुण्यगुणा बभासे ।
तदा वरं योग्यतरं विचेतुं तस्याः कृते प्रेषयदाप्तबन्धून् ॥७६॥
नैकप्रदेशानथ ते भ्रमन्तः प्रापुः पुरं काञ्चननाम रम्यम् ।
समृद्धया पत्तनशोभयाढ्यं रथ्याचरन्मानवदुष्प्रवेशम् ॥७७॥
ते पण्यवीथीषु परिभ्रमन्तो रथ्यासु पार्श्वद्वयवर्तिनीषु ।
समृद्धिमिद्धामनुवीक्ष्य तस्मिन् न सस्मरुः कङ्कणमंशतोऽपि ॥७८॥
सुविश्रुतं शङ्खपतिं ततस्ते श्रुत्वा वणिक्पुत्रमहीनगोत्रम् ।
समुल्लसद्यौवनविभ्रमस्थं निरूपयामासुरमी वरं तम् ॥७९॥
ते रत्नदत्तं धनिकप्रवीणं तातं ततः शङ्खपतेः समेत्य ।
समादरेण प्रणिपत्य मूर्ध्ना सर्वं मतं लक्षपतेरवोचन् ॥८०॥
वैश्योऽप्यसौ लक्षपतेर्महत्त्वात्तदात्मजायाः स्वसुतानुबन्धम् ।
विभाव्य भव्योत्तरमुत्तरेण प्रस्तावमेतं मुदितोऽनुमेने ॥८१॥
आप्तास्ततो लक्षपतेः स्वपक्ष्याः स्वदेशमासेदुरनन्यलक्ष्याः ।
तेभ्यः सुविज्ञाय विशेषवृत्तं सुताप्रदानाय स चेष्टितोऽभूत् ॥८२॥
प्रवीणसांवत्सरिकैः प्रदिष्टे लग्ने शुभे सुद्रगुरुप्रभानौ ।
कलावती नाम वणिक्सुता सा कृता शुभा शङ्खपतेः करस्था ॥८३॥
गुणेन रूपेण च तुल्यरूपा कलावती शङ्खपतिं प्रपन्ना ।
गौरीव शम्भुं कमलेव विष्णुं शचीव देवेन्द्रमभूत् प्रशस्ता ॥८४॥
कलावती पुण्यविवाहभूषाप्रसाधिता सन्ततसंस्तुतापि ।
पितुर्गृहे तातजनैस्तदानीं नवीनरूपेव परा प्रतीये ॥८५॥
कन्दर्पदर्पक्षतिदक्षरूपे कलावती वैश्यकुलप्रदीपे ।
लग्ना सती शङ्खपतौ प्रतीये चन्द्राश्रिता पञ्चदशी कलेव ॥८६॥
आनन्दपीयूषरसार्द्रचित्ते वणिक्पुरे तत्र जने समस्ते ।
स्वरास्पदं पुण्यकृतां धरायां दुःखानुषङ्गेण विनाविरासीत् ॥८७॥
सङ्गीतकं केचन वाद्यभाण्डैः श्रोतृप्रियं मूर्छनया प्रचक्रुः ।
सामाजिकप्रस्तुतसाधुवादस्तालावसाने गगनं व्यतानीत् ॥८८॥

अकारि नृत्यं कृतिभिश्च कैश्चिन्मृदङ्गवेणुस्वनितानुसारम् ।
नानाविधाकारविहारहारि प्रचक्रमे मण्डलमण्डितं तत् ॥८९॥
आमोदवृत्ते महति प्रवृत्ते नैवाऽऽस्त सम्बन्धविशेषचिन्ता ।
लघुर्गुरुर्वा सममेव तस्मिन्नानन्दपीयूषभरे न्यमज्जत् ॥९०॥
आलोकमाला बहुवर्णचित्रा तमःप्रणाशं व्यदधान्निशायाम् ।
वृक्षान्तरे सञ्चितदीपकश्रीः खद्योतमालेव तदाविरासीत् ॥९१॥
नानाविधव्यञ्जनसूपपिष्टैः सुस्वादुपीयूषरसोपमानैः ।
अम्लैः सुमिष्टैः कटुभिश्च भक्ष्यैस्तृप्तिं गतास्तत्र परःपरार्द्धाः ॥९२॥
भक्ष्येषु पेयेषु तथोत्सवेषु यस्याभवद् यत्र रतिः प्रकृष्टा ।
तेनोपचारेण सहैव तस्य सम्भावना प्रीतिशतं व्यतानीत् ॥९३॥
सम्भावना यस्य यथोपयुक्ता तथैव तस्यार्थपतिः प्रचक्रे ।
श्रीसत्यदेवं महतोत्सवेन स व्यस्मरत् केवलमत्र दैवात् ॥९४॥
श्रीसत्यदेवः किल सर्वदर्शी महोत्सवं पश्यति यावदेव ।
स्वविस्मृतिस्तावदमुष्य दृष्टिं नैवातिचक्राम तदाप मन्युम् ॥९५॥
सुदीर्घकालेन समाप्तिमाप्ते तस्मिन् महे लक्षपतिः स्ववृद्ध्यै ।
अकुण्ठमेव क्षपितार्थराशिर्वाणिज्यहेतोरपुषन्मुमेच्छाम् ॥९६॥

आहूय बन्धुनिवहानथ वेदयित्वा
जामातरं सह च शङ्खपतिं गृहीत्वा ।
कान्तां सुताञ्च लपितैर्मृदु लालयित्वा
प्रास्थानिकं विधिमधान्मधुरे मुहूर्त्ते ॥९७॥

द्वारे सनीरफलपल्लवपूर्णकुम्भो
धेनुश्च वत्ससहिता पुरतश्चकाशे ।
प्रास्थानिकं सपदि मङ्गलमङ्गनाभिः
व्यज्ञापयत् प्रकृतमूर्ध्वमितो हि भव्यम् ॥९८॥

प्रस्थानकालोचितकृत्यसञ्चयैः स्वबन्धुसम्भाषणपुण्यवाङ्मयैः ।
अतीत्य भव्यं समयं वणिक्पतिः प्रतस्थिवानन्न इवास्थिरान्तरम् ॥९९॥

इह शुभमशुभं वा यद् भवेद् भाविकाले
शकुनमपि पुरस्तात् प्रस्थितानां तथैति ।
नियतिवशगतायां संसृतौ वैधलीला
कथमपि न निरुद्धाऽसीमचेष्टासमृद्ध्या ॥१००॥

इति श्रीकालीपदतर्काचार्यकृते श्रीसत्यानुभावे महाकाव्ये वैश्यकृत-
सत्यपूजामहोत्सवो नाम दशमः सर्गः ।

---

## एकादश-सर्गः

सजामातृके वैश्यवर्येऽथ गेहाद् विधेरिच्छया लग्नकाले व्यतीते ।
पुरः प्रस्थिते तत्सुता चारुनेत्रा रहो लोचनाश्रु व्यमुञ्चद् विषण्णा ॥१॥
शुभा प्रौढभावा तदा वैश्यपत्नी सजामातृकं कान्तमुन्वीक्षमाणा ।
शुभच्छेद-शङ्कां हृदन्तर्वहन्ती निरुद्धाश्रुधारा कथञ्चिद्वकाशे ॥२॥
द्विजैर्वाचिताशीस्तदा सन्निधिस्थैः कृतं कामिनीभिः प्रियं क्षेमगीतम् ।
सहैव स्वपक्षाः प्रभूताः प्रयाता जयं घोषयन्तः शुभं सूचयन्तः ॥३॥
ययौ शूर्पमुद्गृह्य वैश्यस्य पत्नी सदीपं बहुक्षेमवस्तूपचारम् ।
सचूतप्रवालं ससिन्दूरलेखं घटं धारयन्त्या समं स्वीयपुत्र्या ॥४॥
तरी सज्जिताऽभूदरित्रादियुक्ता पताकासहस्रैः स्रजां सन्निवेशैः ।
विचित्रैरनल्पैः सुखैस्तूलतल्पैर्विभिन्नप्रकारैर्गृहस्थोपचारैः ॥५॥
प्रधाना तरी वैश्यनेत्रा गृहीता द्वितीया समानैव पत्या सुतायाः ।
तृतीया च वाणिज्यवस्तुव्यपेक्षा चतुर्थी च तीराद्वियानोपयुक्ता ॥६॥
द्वयं दिष्टमादौ विचित्रस्वरूपं कवाटैर्गवाक्षादिभिः सुप्रणीतम् ।
प्रदीव्यन्ति यावन्ति वस्तूनि गेहे न नो सन्त्यशेषाणि तावन्ति तस्मिन्॥७॥
कृता दारुभिश्चारुगेहप्रकारा विभिन्ना विशेषक्रियासाधनार्थाः ।
समे कुट्टिमे चिक्कणा दारवश्रीः शुभादर्शशोभां जयत्येव हेम्नः ॥८॥
समन्तान्निषक्ताऽमले दारुकुड्ये प्रियादर्शमाला सुरत्नप्रसूना ।
प्रतिच्छायया यत्र यानस्थितानां जनानां विशेषाधिकाऽमानि संख्या ॥९॥

पुरःपादपीठा चतुष्पादनद्धा पदे शीर्षभागे तथा सोपधाना ।
मृदुप्रच्छदा चारुनीशारसारा श्रिता चामरग्राहियुग्मेन नित्यम् ॥१०॥
स्थिता मुक्तवातायने दारुगेहे प्रवातप्रभूता भृता पुष्पगुच्छैः ।
समीपे लसत्काष्ठपीठोपचारा समासादि खट्वा विचित्रोपहारा ॥११॥
अदूरे च तस्या गवाक्षोपकण्ठे विलासानुकूलप्रियद्रव्यभव्या ।
बृहद्दर्पणाढ्या समं पेटिकाभ्यां विकर्षानुकर्षप्रकारोचिताभ्याम् ॥१२॥
सुपीतेन पट्टांशुकेन प्रवीता चतुष्पादसन्धारिता प्रान्तकान्ता ।
बृहत्पुष्पगुच्छद्वयी रम्यरूपा पुरो वेत्रचित्रासना खट्विकैका ॥१३॥
स्थिता गन्धतैलान्विता काचपात्री तथा क्षौरकर्मोचितद्रव्यजातम् ।
इतः पार्श्वकुड्यं श्रिता नागदन्ता दुकूलादिकं धारयन्तो व्यभासुः ॥१४॥
स्थिताप्यन्यपार्श्वेऽपरा खट्विकैका मसीलेखनीपञ्चषग्रन्थयुक्ता ।
उपान्ते लसत्पुस्तकाधाररम्या चिता पत्रिका साधनैर्मुद्रिकाद्यैः ॥१५॥
समन्तादनेके विचित्रप्रदीपा ज्वलन्तस्तमोराशिविध्वंसदक्षाः ।
तरीसङ्कुलानां कृतिव्यापृतानां निशायां दिनभ्रान्तिमुत्पादयन्ते ॥१६॥
मुखाधो निविष्टश्च काचोपगूढस्तरण्यास्तथा पार्श्वयोः कोटरान्तः ।
निशायां तमःप्रावृतायां प्रदीपो मुखे पार्श्वयोश्चापि मार्गेक्षणार्थम् ॥१७॥
बहिः काष्ठसोपानमालानुलग्ना तदूर्ध्वच्छदारोहणायानुकूला ।
प्रमाद्द्वतीनां प्रपातं निरोद्धुम् स्थितौ पार्श्वयोर्दारुहस्तावलम्बौ ॥१८॥
तदूर्ध्वच्छदे रैत्यजालावृतान्ते परीणाहभाजि प्रकामाभिरामे ।
विचित्राणि वेत्रासनान्याश्रयन्तो दिनान्ते रमन्ते जनाः शान्तिहेतोः॥१९॥
प्रदोषे प्रवातेन पूते मनोज्ञे सुधाधारकीर्णांशुभिः शुभ्रकाये ।
तदूर्ध्वच्छदस्था विलासोपयुक्तां विभूतिं श्रयन्तः सुखं धारयन्ते ॥२०॥
मयूराकृतिः सा तरी चित्रवर्णा मुखे नेत्रदेशे प्रदीपद्वयाढ्या ।
सुविस्तीर्णपिच्छायताऽलक्ष्मि पश्चादरित्रैश्चलद्भिर्गता पादशोभाम् ॥२१॥
पुरा नाविकैराश्रिता सज्जरूपैः समग्रोपचारैः स्वकृत्ये सुदक्षैः ।
शुभं ध्यायता वैश्रवर्येण रम्या समासादि पोतायमाना तरी सा ॥२२॥

नदीतीरभागे तरीं रोढुकामो दुहित्रा तथा भार्यया वाच्यमानम् ।
शुभाशीर्विशेषं स पाथेयकल्पं सजामातृको वैश्यवर्यः प्रपेदे ॥२३॥
पुरस्ताद् पुरस्त्रीभिरानन्दिताभिः सलास्यं जगे गीतकं मङ्गलाढ्यम् ।
तथा वैश्यपत्नी दुहित्रा समेता प्रदीपादिभिस्तां तरीमभ्यनन्दत् ॥२४॥
तरण्या मुखे प्रस्तुता गाङ्गपूजा ससिन्दूरचित्रे श्रयत्पुष्पमाल्ये ।
जयध्वानसंघुष्टदूरान्तरिक्षं ततो वैश्यराजस्तरीमभ्यरोहत् ॥२५॥
अथो वैश्यकन्यापतिः सोपचाराम् अहीनां गुणैः प्रेमविक्षिप्तचित्तः ।
स्थितां चक्रवाकीमिवादूरतीरे प्रियां स्वां प्रपश्यन् स्वनौकामविन्दत् ॥२६॥
अथान्येषु यात्रासहायेषु तस्मिन् प्रपन्नेषु काले तृतीयाञ्च नौकाम् ।
चतुर्थीञ्च कृत्वा तृतीयानुवृत्तां तरीबन्धनं चिच्छिदुः कर्णधाराः ॥२७॥
तदा देवनामप्रचारेण नद्यास्तटी दूरदेशात् समश्रावि पुण्या ।
परं सत्यदेवस्य नामापि तस्मिन् न कस्यापि चित्ते जजागार बाढम् ॥२८॥
तदा चिन्तयामास सत्यः समन्युः स्वमानावमानं वणिक्सप्रणीतम् ।
अहो मत्कृपाभिः प्रपद्यापि पुत्रीमिदानीं मुदा नैव जानात्यसौ माम् ॥२९॥
समासाद्य विद्यां गुरुं द्वेष्टि शिष्यः फलाहत्विजं याजनान्ते गृहस्थः ।
फलं यावदास्ते निमित्तव्यपेक्षा ततः प्राप्तकामः स्मरत्यद्य नो माम् ॥३०॥
कृपाकोमलं मां विदन्नेष मूढः पुरा मानसान्मे स्मृतिं सारयित्वा ।
भविष्यत्समृद्धेः कृते हृष्टचेताः समारुह्य यानं चलत्यद्य दूरे ॥३१॥
परां प्रीतिमाधाय गोपालबालेष्वहं गोकुले कोमलत्वं यथाप्तः ।
तथा साधुविद्वेषिणं दुष्टकंसं पतिं माथुराणां कठोरोऽस्मि हत्वा ॥३२॥
तदस्यापि वैश्यस्य दण्डं विधास्ये यथा नापरो मेऽवहेलां विदध्यात् ।
ज्वलन्तं हुताशं न धत्ते विवेकी पदा मर्दयत्युज्झितं भस्मराशिम् ॥३३॥
इति स्वान्तवृत्तिं श्रिते सत्यदेवे जगच्छिक्षणार्थं क्रुधेव प्रदीप्ते ।
वणिग्भृत्यवर्गा विनेत्रानुशिष्टा उदस्थापयन्नौपटं वातमार्गे ॥३४॥
जयं घोषयित्वा पयोदेवतायास्तथा जह्नुपुत्र्याः कलिन्दात्मजायाः ।
परासां नदीनां नदानाञ्च नाम्ना तरी प्रेरिता तैरगाधिष्टमार्गम् ॥३५॥

अबाधं विमानं यथा याति शून्ये यथा वा पतत्री गरुद्युग्मयोगात् ।
तथा भिन्दती नीरधारां तरी सा पटीवातसञ्चालिता शीघ्रमागात् ॥३६॥
मरुन् पृष्ठदेशाद् ववौ तीव्रवेगादरित्राणि पार्श्वे समुत्तोलितानि ।
महाकर्णधारस्त्वरित्रप्रधानं समाकृष्य पश्चाद् दृढं व्यापृतोऽभूत् ॥३७॥
अधावीत् पुरो वैश्यनाथस्य नौका ततस्तत्सुतास्वामिनः कान्तरूपा ।
अथो भाण्डगर्भा समाना समेषां विभोग्यानुलग्ना यतः क्षुद्रकाया ॥३८॥
तटे वैश्यपत्नी सुताप्यास्त तस्या द्वयोरेव दृष्टिस्तरीमात्रनिष्ठा ।
न यावत्तरीणां स्वरूपाणि नेत्राद् बहिःस्थान्यभूवन्नमू तत्र तावत् ॥३९॥
ततो दृष्टिवाह्ये तरीणां समूहे कथञ्चिन्निरुद्धाश्रुनीराः समग्राः
सुदीर्घं श्वसन्तो हृदा शून्यशून्याः स्वगेहेषु गन्तुं मनः सम्प्रचक्रुः ॥४०॥
कलावत्यथो गेहमाप्ता स्वमात्रा पदं निर्जनं संश्रयन्ती विषण्णा ।
विकीर्णाश्रुधारा धरां प्लावयन्ती नवोना मनोजं समर्था न सोढुम् ॥४१॥
दृढप्रौढभावा विवेकोपचीर्णा वियोगव्यथामन्तरे सम्भवन्तीम् ।
विवेकेन रुद्ध्वा निजे नित्यकृत्ये मनःसन्निवेशं दधे धैर्यधार्यम् ॥४२॥
व्यतीते च काले जनन्याऽनुशिष्टा व्यथामन्तरस्थां लघूकृत्य तन्वी ।
कलावत्यनल्पेषु शिल्पेषु रागं दधाना गुणानामकार्षीत् प्रकाशम् ॥४३॥
वियोगोचिताकल्पमाकल्पयन्त्यौ महे वैमुखं कर्मणा धारयन्त्यौ ।
सुवस्त्रं सुगन्धं मुदञ्च त्यजन्त्यौ सतीधर्ममेते प्रकाशं व्यधाताम् ॥४४॥
स वैश्यो व्यतिक्रम्य नानाप्रदेशान् अनेका नदीर्वीचिमालासमृद्धाः ।
बहुग्रामकान्तारशैलानपूर्वान् अबध्नात् प्रदोषे तरीं क्वापि पुर्याम् ॥४५॥
ततस्तत्र पुर्यां वतीर्य प्रसन्ना जनाः पश्चिमां सम्यगाराध्य सन्ध्याम् ।
समाप्याशनं सिद्धवस्तूपचारं निशां तामनैषुः क्षयं नावि सुप्ताः ॥४६॥
तरीदीप्तदीपश्रिया नेत्रयुक्ता नदी निर्निमेषेव रात्रिं समग्राम् ।
तटाबद्धनौकाविभूतिं ससौधां प्रियामादरात् सापणामन्वपश्यत् ॥४७॥
प्रभाते सजामातृको वैश्यराजः क्षपान्तोपयुक्तं विधिं साधयित्वा ।
जनैरापणं सम्प्रविष्टः प्रहृष्टः परिक्रीय भाण्डान्यसंख्यान्यचैषीत् ॥४८॥

न यावत् प्रपूर्णा तरी भाण्डधात्री न तावत् क्रयाद् वैश्यनाथो निवृत्तः ।
ततः पूरयित्वा जनैस्तामशेषं पुरीं तामसुञ्चन्नदीवर्त्मनाऽसौ ॥४९॥
मरुन्नानुकूलो ववौ तत्प्रभाते सरङ्गैस्तरङ्गैः सरिन्मत्तरूपा ।
ततो रज्जुमाकृष्य दण्डावलम्बां जनैः सा तरी प्रेरिता स्वीयमार्गे ॥५०॥
अरित्रैः पतद्भिः सहायैर्बभूवे तथा कर्णधारेण दिष्टं समत्वम् ।
यथा रज्जुकृष्ट्या तटे लग्नकाया तरी भङ्गमाप्ता विपत्तिं न कुर्यात् ॥५१॥
क्रमेणैवमासाद्य वेगं महान्तं विरामं यथाकालमाप्ता त्रिसन्ध्यम् ।
तरी वासरैः पञ्चभिश्चन्द्रकेतोर्महीपस्य पुर्यास्तटान्तं प्रपेदे ॥५२॥
पुरे यत्र सीमासमा शुभ्रनीरा वणिग्वृत्तिनौकाशतैः पूर्णकाया ।
ससोपानतीरान्तरस्यान्तराले नदी पादसम्मार्जनं संविधत्ते ॥५३॥
तरीभ्यस्तटान्ते स्थिताभ्यस्तटिन्याः कियत्पण्यभारा विपण्यां गृहीताः ।
क्वचित्तीरदेशाद् बहु द्रव्यजातं तरण्यां समुत्थाप्यते वृद्धिहेतोः ॥५४॥
कियन्तो जना द्रव्यभारं वहन्तः कियन्तश्च वस्तुक्रयं साधयन्तः ।
कियन्तश्च मार्गे द्रुतं सञ्चरन्तः पुरं दुष्प्रवेशं व्यधुस्तत् सदैव ॥५५॥
तटे यावदायाति दृष्टिर्जनानां पुरे तत्र सौधानि दृष्टानि तावत् ।
बहून्येव वाणिज्यनिष्पादकानि दिनं व्याप्य सर्वं चलद्यन्त्रकाणि ॥५६॥
क्वचित्तण्डुलानां क्वचित् सूत्रकाणां क्वचित् पट्टकानां तथा वस्त्रकाणाम् ।
प्रधानानि बाष्पस्फुरद्यन्त्रराजिं गृहाण्यासते श्रेणिशो यत्र तीरे ॥५७॥
पथः पार्श्वयोर्यत्र तुल्याग्रभागाः समानान्तराला घनश्यामपर्णाः ।
महीध्रा निरोधेन भानोः कराणां जनानां प्रचारे सुखं साधयन्ति ॥५८॥
प्रदोषादुपारभ्य यावत् प्रभातं पथः पार्श्वयोरुन्नता दीप्तदीपाः ।
पथिस्थं तमो नाशयन्तो जनानां विपत्पातसम्भावनां वारयन्ति ॥५९॥
विकीर्णाम्बुनिर्धूतधूलिप्रतानेे सदा सञ्चरद्यानचक्रेऽपि मार्गे ।
न संबाधते धूलिदोषः प्रसर्पन् न पङ्कोऽपि पान्थं पथि प्राप्तचारम् ॥६०॥
द्वयोः पार्श्वयोरेव मार्गस्य यस्मिन् विशालानि हर्म्याणि रम्याण्यभूवन् ।
प्रवृत्ते महे राजमार्गे पुरस्त्रीमुखाब्जैः सचन्द्राणि वातायनान्तः ॥६१॥

निषण्णा क्वचिद् वस्त्रशोभानवद्या क्वचित् कञ्चुकैरञ्चिता चित्ररूपैः ।
क्वचिच्चित्रकौशेयवेशोज्ज्वलश्रीः क्वचित्तैजसद्रव्यभारप्रभूता ॥६२॥
क्वचित् क्रय्यचित्रप्रतानाभिरामा समुच्छ्वासयुक्तैरिव प्राप्तधामा ।
क्वचिद्वा विलासोपचारैकसारा मुहुर्दुष्प्रवेशा जनानां समाजैः ॥६३॥
लसत्पुष्पगुच्छा प्रदीपाञ्चितापि द्विरेफान्धकारा प्रियामोदमुग्धा ।
प्रफुल्लप्रसूनस्रजा कोमलश्रीः क्वचित् पण्यवीथी विधत्ते विनोदम् ॥६४॥
क्वचिद् वाद्यभाण्डश्रिया मण्डिताङ्गी चलच्चारुतन्त्रीस्वनाकृष्टकर्णा ।
स्फुरद्वेणुनादैः समाहूतपान्था मृदङ्गादिभिर्मेघनादं दधाना ॥६५॥
सुसङ्गीतदक्षैः पिकद्वेषिकण्ठैर्विलासिप्रकाण्डैः सदैवानुवृत्ता ।
निषण्णाऽनवद्या समृद्धा समृद्ध्या क्रये मूल्यनिर्द्धारणव्यापृतास्या ॥६६॥
क्वचिद् दाडिमानां विदेशागतानां तथा दैशिकानां रुचा दारितानाम् ।
विपाकं श्रितानां चिता चूतकानां बहूनां परेषां फलानां निषद्या ॥६७॥
सिता शर्करा नारिकेलादिमिश्रा बभौ मोदकत्वं दधाना सुमिष्टा ।
अनेकप्रकारै रसालैश्च पिष्टैः क्वचिद्वा विपण्यां परा श्रीर्विरेजे ॥६८॥
यतः सन्ति शिक्षागृहा भूरिसंख्याः स्फुरद्बुद्धिविद्यार्थिभिः सुप्रकीर्णाः ।
अनेकप्रकारासु विद्यासु दक्षैः सदाऽधिष्ठिताः शिक्षकैः साधुशीलैः ॥६९॥
क्वचिद् वैद्यविद्या भिषग्भिः प्रदिष्टा पृथग् भेषजानां विधानोपदेशैः ।
मुहुः सुश्रुतादिप्रदत्तोपचारैर्यथावीजमुक्तागदानां विचारैः ॥७०॥
अनेका अलङ्कारनिर्माणशाला मणिस्वर्णकारैः सदोपात्तकृत्याः ।
विचित्रोज्ज्वलाभैरलङ्कारजालैः किरन्त्यः समन्तान्मयूखानुदग्रान् ॥७१॥
पयःपानपात्राणि रौप्योद्भवानि तथा हेमजातानि नानाविधानि ।
ज्वलन्त्यन्नपात्राणि देवासनानि प्रदीपाश्च ताम्बूलवीटीकरङ्काः ॥७२॥
नवा दारुमय्यः कृताः सूत्रधारैर्यतो राजखट्वा लसच्चारुशिल्पाः ।
कवाटोपनद्धा गृहाः पुस्तकानां तथा दारुखण्डैः प्रणीतप्रकोष्ठाः ॥७३॥
विचित्रोच्चचूडान्विता देवपीठाः ससोपानशोभाः शुभस्तम्भरम्याः ।
समन्ताद् वृताः क्षुद्रसंस्थानदण्डैः समुद्वर्त्तिताः पीतपीतप्रलेपैः ॥७४॥

सितप्रस्तरोत्कीर्णमूर्तिप्रताने शिलापट्टलवैः सनाथे विपण्याम् ।
गृहे प्राज्यभास्कर्यविद्याप्रमाणे स्वयं यत्र मूर्तेव लक्ष्मीर्निषण्णा ॥७५॥
बृहत्काचसम्भूतसद्दर्पणश्रीः प्रदीपप्रदानोचितैः काचपात्रैः ।
समन्तादुपोद्वृत्तया काचरज्ज्वा सुवद्धैर्निषण्णा चिता यत्र चित्रैः ॥७६॥
स वैश्यः प्रविश्यालयं चन्द्रकेतोर्लसद्भूरिशालं शिरोभिर्विशालम् ।
गुरुस्तम्भशोभासनाथं सुरम्यम् पताकादुकूलानिलैः सेव्यमानम् ॥७७॥
प्रसूनान्वितोद्यानविद्योतिताङ्गं स्फुटत्पद्मगन्धैर्दिवा वासिताशम् ।
सरोनीरचञ्चन्मरालैः सलीलं सदूर्वातृणैरङ्कनैः सङ्कुलान्तम् ॥७८॥
बहिस्तोरणाद् यामिकैः शस्त्रहस्तैः कृतान्तोपमानैः सदा रक्ष्यमाणम् ।
यदूर्ध्वं महासिंहमूर्तीः शिलायाः समालोक्य पान्थाः सुदूराद् द्रवन्ति ॥७९॥
सभायां शतैर्यामिकैः पालितायां महामात्यवर्गैः समाराधितायाम् ।
प्रतीहारदत्तानुमत्या नरेशं प्रणम्य स्ववाणिज्यसिद्धिं ययाचे ॥८०॥
ततो नामगोत्रे तदीये विदित्वा यथारीति शुल्कव्यवस्थाञ्च कृत्वा ।
स वाणिज्यमस्यानुमेने महीन्द्रः स्वपुर्यामवार्यं मुदा चन्द्रकेतुः ॥८१॥
तस्मिन् पुरे रत्नगणोपनद्धसुवर्णभूषामधिकृत्य वैश्यः ।
नृपेण तेनानुमतः सहर्षं वाणिज्यकृत्येषु मनः प्रपेदे ॥८२॥

अथ स विपणिमध्ये स्वीयवाणिज्ययोग्यं
गृहमनुगुणशुल्कं सोपचारं गृहीत्वा ।
विविधमणिगणाढ्यां साधु विक्रीय भूषां
प्रचुरविभवयुक्तः सम्बभूवाविलम्बम् ॥८३॥

चिरं स दैवादथ तेन विस्मृतः श्रीसत्यदेवः कुपितोऽभवद्भृशम् ।
पुराऽङ्कुरः कोपमहीरुहस्य यः स कालतः पल्लवितो व्यवर्धत ॥८४॥

इति श्रीकालीपदतर्काचार्यकृते श्रीसत्यानुभावे महाकाव्ये लक्षपति-
वाणिज्यव्यवसायो नाम एकादशः सर्गः ॥११॥

---

## द्वादश-सर्गः

अत्रान्तरे कङ्कणपत्तनाश्रया लीलावती लक्ष्मपतेः प्रिया सती ।
सुता च सा चारुरुचिः कलावती वियोगदुःखेन कृशत्वमाश्रिते ॥१॥
विना शशाङ्कं मलिना कुमुद्वती तथा निशा गाढतमःसमावृता ।
विना दिनेशं नलिनी निमीलिता विना पतिं हृष्यति का पतिव्रता ॥२॥
कलावती शङ्खपतिं प्रियं पतिं विचिन्तयन्ती प्रतिवासरं शुभा ।
समागमाशामवलम्ब्य मानसे कथञ्चिदेवोपदधार जीवनम् ॥३॥
यदा यदा शिल्पकलानुशीलने मनो दधे सा निपुणा मनस्विनी ।
तदा तदैवात्मपतिप्रचिन्तनं मनो विचिक्षेप जलार्द्रचक्षुषः ॥४॥
वस्ते न सा चित्रदुकूलवाससी न भूषणं भूरि बिभर्ति भास्वरम् ।
दधाति लोहं सधवाजनोचितं सशङ्ककं सा व्रतशालिनी सती ॥५॥
न कङ्कतेनाऽऽतनुते प्रसाधनं स्वकुन्तलानां न च गन्धतैलकैः ।
न रञ्जकैः रञ्जयति स्वमाननं करौ पदे वा चितविभ्रमक्षयात् ॥६॥
जनप्रिया सा न जनागमे तदा रतिं दधे निर्जनदेशमीयुषी ।
एकं विना शङ्खपतिं पतिं सती न कुत्रचित् प्रीतिमगच्छदुत्तमाम् ॥७॥
समं प्रियेणैव गतं मुखस्मितं विलासिता दूरमितावमानिता ।
हृदन्तरे शङ्खपतिं निषेवितुं विवेश तस्याः प्रियनेत्रविभ्रमः ॥८॥
निशा व्यतिक्रामति दुःखजागरैर्दिनं प्रियस्मारकवस्तुवीक्षणैः ।
सुखं न तस्या हृदये शुचाकुले पदं कदाचित् क्षणमप्युपागमत् ॥९॥
न सा स्वयं पुष्पचयं ससौरभं कलेवरं शोभयितुं दधे सती ।
प्रतिप्रभातं पतिसङ्गमाशया प्रसूनमाल्यं कुरुते वियोगिनी ॥१०॥
दिनं समग्रं प्रतिपाल्य यत्नतस्तदागमाशामपहाय दुःखिता ।
करे धृतं तत् स्मरजातसम्भ्रमा नयत्यनल्पश्वसितेन शुष्कताम् ॥११॥
सखीजनानामुपदेशभाषितं वृथैव तस्या मनसः स्थितावभूत् ।
अगादुपाख्यानकथानुशीलनं फलं न किञ्चित् स्मरलुप्तचेतसः ॥१२॥

स्तम्भा महान्तः किल पञ्चषाः स्थिताः समुन्नताग्राः स्फुटिताङ्गवर्णकाः ।
त एव हा तत्र महागृहस्थितिं व्यजिज्ञपन् पान्थकुलं सुविस्मितम् ॥२६॥
न तोरणं नापि विशालचत्वरं न नृत्यशाला न च देवमन्दिरम् ।
न मार्गरेखापि पुरा व्यवस्थिता व्यलोकि लोकैः समतासमुद्गमात् ॥२७॥
समत्सराणामचरत् स्मितं मुखे कृपावतां शोकज-गाढकालिमा ।
पूर्वे मुखेनैव निवेद्य वेदनां प्रतस्थिरे सान्त्वनमादिशन् परे ॥२८॥
कलावती लक्ष्मपतेः सुता सती समातृका तातपती स्मरन्त्यसौ ।
अजस्रमश्रूणि विसृज्य विक्लवा विलापवाचा नगरं व्यलापयत् ॥२९॥
धरणौ परिलुठ्य निर्भरं रजसा धूसरितात्मकुन्तला ।
इति सा वचनं व्यसर्जयज्जननीकोमलहस्तलालिता ॥३०॥
अयि तात कुतोऽसि दूरतः परिहाय स्वजनान् निराश्रयान् ।
इह दुर्गतदैवदेशनान्न विजानासि सुदुर्गतानिमान् ॥३१॥
नियतं भवता प्रपोषिताः सुदृढं प्रत्ययिता जनाः पुरा ।
विनिहत्य कृतज्ञताक्रमं धनमादाय गता निरन्वयम् ॥३२॥
अथ दस्युभिरेत्य दुर्बलानवशिष्टान् परिभूय तावकान् ।
बत वैभवशेषमाददे सह भस्मीकरणेन सद्मनः ॥३३॥
कियतो दिवसाननारतं तव चिन्ताभिरतीत्य दुःखिता ।
अनवाप्तभवत्पदाम्बुजा बत तादृग्विपदोऽभवं पदम् ॥३४॥
क्व नु यामि समातृका सती निखिलं शून्यमिवोपलक्षये ।
भविता क इहावलम्बनं मम मातुश्च दशाविपर्यये ॥३५॥
निवसन्ति कुलायमाश्रिता विहगा वैभवलेशवर्जिताः ।
स्वकुलैः सहिताः सुखान्विता भुवि वर्षातपताडनं विना ॥३६॥
वयमद्य निवासवर्जिता विधिना कोपवता विडम्बिताः ।
विहगैरपि हा तृणीकृताः क्व नु वासेन वहाम निर्वृतिम् ॥३७॥
अभिवाति पुरेव मारुतः कुसुमं सौरभमाकिरत्यपि ।
गगने च विभाति चन्द्रमा विकलं सर्वमिदन्तु लोक्यते ॥३८॥

कति ते कृपया रुजा कृशाः समभूवन्नभितो निरामयाः ।
कति दीनतमा धनागमात् परिवारप्रतिपालनक्षमाः ॥३९॥
कति वा तनया इवात्मनो बहुयत्नेन पुरा प्रपालिताः ।
कति वाऽध्ययनानुकूलतां तव लब्ध्वा बहुविज्ञतां गताः ॥४०॥
कियतामपि दीनदेहिनामृणनिर्यातनया स्वसम्पदा ।
श्रितवानुपकारचातुरीं त्वमसौ कङ्कणपत्तने पुरा ॥४१॥
सरसीः सरसा महत्तमा ननु निर्वर्त्य पुरेऽत्र कङ्कणे ।
कियतामपि कष्टमुत्कटं सलिलाभावभवं निवारितम् ॥४२॥
विहिता बहुभेषजालया बुधवैद्यैः समधिष्ठितास्त्वया ।
नितरामुपकुर्वते पुरं बत सर्वं तदिदं निरर्थकम् ॥४३॥
तनया वनिता च तस्य ते भवनेनाद्य दृढं वियोजिते ।
न हि कस्यचिदक्षिपात्रतां वहतो दैववशात् सुदुर्गते ॥४४॥
सुहृदो वृणते परःशताः सति सौभाग्यसमागमे चिरम् ।
विपदि प्रतियान्ति दूरतो धिगहो स्वार्थविचारनीचताम् ॥४५॥
दिवसे कमले विकस्वरे भ्रमरो भ्राम्यति तन्मधुप्रियः ।
निशि तत्र निमीलनं गते स खलो गच्छति दूरतस्ततः ॥४६॥
वसनं परिधानकं विना भुवि नावद्य न किञ्च सम्बलम् ।
कथमेव विधीयतां पुरा मम मातुश्च शरीरपालनम् ॥४७॥
जननी मम भाग्यसम्पदा महिषीव प्रबभूव वैभवे ।
कथमेव गृहे गृहेऽद्य सा विचरन्ती धिगसून् निषेवताम् ॥४८॥
प्रगृहाण यथेप्सितं धनं जननी या चिरमेवमादिशत् ।
कथमद्य तया स्ववृत्तये बत देहीति सुदीनमुच्यताम् ॥४९॥
कलिरद्य परं समृद्धिमान् सुकृतं नश्यति विश्वतो यतः ।
न जनाः कृतवेदिताभृतो द्विजदेवार्चनमाहितं वृथा ॥५०॥
अयि तात बिभेमि दूरतस्तव कच्चित् कुशलं क्रियावतः ।
अपि शङ्करपतिर्ममासवः कुशली विन्दति ते सहायताम् ॥५१॥

बहवो दिवसाः क्षयं गताः कति वा दीर्घनिशाः प्रयापिताः ।
भवतोः क्वचन प्रवासिनोः प्रियवार्ता विदिता न कापि नौ ॥५२॥
यदि नासि पितः प्रियेण मे कुशली भाग्यविपर्ययेण नः ।
इति वाचमुदीर्य सोत्तरां सहसा मोहमुपारुरोह सा ॥५३॥
अथ लक्षपतेर्मनस्विनी वनिता धैर्यविशेषशालिनी ।
तनयां प्रसमीक्ष्य तादृशीम् अवशा शोककथामुदाहरत् ॥५४॥
हृदयेश कुतो विराजसे परिपश्योपगतो निजात्मजाम् ।
इयमद्य विपत्तिविह्वला परिमूढाश्रयतेऽन्तिमां दशाम् ॥५५॥
तनया परिपेलवा भृशं भवतः स्नेहसुधासमेधिता ।
कुसुमे शयितापि सक्लमा कठिने भूमितले विचेष्टते ॥५६॥
कतिपुण्यफलं कलावती ललिता देवसुतेव भूगता ।
नियतेरसहिष्णुतावशाद् बत सा मुञ्चति मां सुदुर्गताम् ॥५७॥
सकला विपदः समुत्थिताः समुपेक्षे स्थिरमानसा सती ।
परमत्र कलावतीं सुतां विवशां नैव सहे शुचावशा ॥५८॥
भवनं दहनेन दह्यतां ह्रियतां रत्नकुलञ्च तस्करैः ।
स्वजनैः परितोऽपि गम्यतां न ततो दुःखलवोऽपि मामकः ॥५९॥
विपुलद्रविणानि पूर्वतो यदभावेन निरर्थकानि नः ।
निखिलं जगदेव निष्फलं बत तस्या निकृतिं कथं सहे ॥६०॥
सचिवेषु निवेश्य सम्पदं मयि च न्यस्य कलावतीमिमाम् ।
धनवृद्धिमभीप्सुना त्वया भवनाद् दूरपदं समाश्रितम् ॥६१॥
तव भाग्यविपर्ययोदयादुभयोरेव गतिः सुदुर्लभा ।
प्रथमा सचिवैर्विलोपिता लभते च स्मरणीयतां परा ॥६२॥
अनुकङ्कणमेत्य च त्वया तनुजायाः कुशले बुभुत्सिते ।
किमहं वदितास्मि ते पुरो नियतिव्याहतसर्ववैभवा ॥६३॥
धनराशिविनाशदूषणं समये यास्यति वैश्यकर्मणा ।
परमेष सुतालयोदयोऽपचयो नैव कदाप्यपैष्यति ॥६४॥

अशने शयने प्रसाधने भवने चोपवनेऽवगाहने ।
सुचिरं सहचारिणीमिमां परिमुच्यानितरां कथं भवेः ॥६५॥
चपला चपला कलावती तव कण्ठस्वरमेत्य दूरतः ।
परिहाय परःशतान् प्रियान् विषयानन्तिकमासदत् पुरा ॥६६॥
शयितापि सुषुप्तिमाश्रिता विनिवृत्ताखिलबोधविभ्रमा ।
सति ते चरणध्वनौ गृहे सहसा जागरिता समुत्थिता ॥६७॥
अयि नाथ समेहि सत्वरं तदुपामन्त्रय तां कलावतीम् ।
त्वदुपागमसम्भ्रमागमाद् ध्रुवमुत्थास्यति सा नवोत्सवा ॥६८॥
इति लक्षपतिं निजं पतिं समुपामन्त्र्य फलेन वञ्चिता ।
अभि शङ्खपतिं सुतापतिं लपितुं शोकवचः प्रचक्रमे ॥६९॥
अयि वत्स तवात्र नो क्षमं दयितायाः समुपेक्षणं क्षणम् ।
पतिरेव सतीसमाश्रयः परिपायात् परितः स तां सदा ॥७०॥
नियतं तव यस्य चिन्तया कृशदेहा भृशमद्य मूर्छिता ।
स भवान् समुपेक्ष्य तामिमां किमु शान्तिं लभते त्विदूरतः ॥७१॥
त्वमसौ सकलप्रियाधिकस्तनुजाया मम जीवनौषधिः ।
त्वयि सन्निधिमागते न सा भविता स्थातुमलं भुवस्तले ॥७२॥
अयि कोमलचित्त सत्वरं समुपायाहि निजप्रियाकृते ।
रजनीमलिना सरोजिनी स्मयते भानुकरोपलालिता ॥७३॥
श्वशुरेण समं समन्ततो वसुलक्षाणि विधित्सुना त्वया ।
वितथं कतिभिः परिश्रमैरतिदूरे दिवसो नु नीयते ॥७४॥
इयतः समयान् कलावती गणयन्ती दिवसानयापयत् ।
भवतापि तथैव हा वृथा दिनसंख्या क्रियते मिथोगतेः ॥७५॥
यदि ते नितरामियं प्रिया समया सत्वरमेहि वत्स ताम् ।
ललना नवयौवना पतिं निखिलेभ्यो बहुमन्यते सदा ॥७६॥
समयालकगुच्छमाकुलं वदनं मार्जय बाष्पविप्लुतम् ।
धरणीशयने विमूर्च्छितां स्वयमुत्थापय सान्त्ववाङ्मयैः ॥७७॥

स्वकरेण करे कलावतीं परिगृह्योपवने व्रजाधुना ।
समुपैति सुगन्धमारुतः कृतलीलाप्लवनः सरोवने ॥७८॥
गगनाङ्गनदीपको विधुः सुधया हासयति क्षितेस्तलम् ।
मधुरस्वरहंसमालिका सरसि क्रीडति वीचिचञ्चला ॥७९॥
अचलाः कुसुमैः सुशोभिताः पिकरावैः क्रमशो विवर्धितैः ।
कुसुमाहृतये प्रियात्मजो भवदाह्वानममी प्रकुर्वते ॥८०॥
निखिलं समुपेक्ष्य वत्स ते नहि दूरे समवस्थितिः क्षमा ।
श्वशुरेण समेहि सत्वरं दिश नः सान्त्वनवाङ्मयामृतम् ॥८१॥
इति वीतफलं विलप्य सा मरुतं शोकमयं विवृण्वती ।
तनयां परिरभ्य निर्भरं मुहुरामन्त्रयदुच्छ्रितस्वरा ॥८२॥
अयि पुत्रि विमुञ्च भूतलं प्रतिवाचं वितर त्वरावती ।
स्वजनेन रहो विनाकृतां परिहाय क्व नु यासि निर्दया ॥८३॥
विधिना विभवा विनाशिताः स्वजना दूरपदं समाश्रिताः ।
त्वमपि प्रगता विमुच्य मां वद किं सम्बलमस्ति मे पुरः ॥८४॥
विफलं मम देवतार्चनं द्विजपूजाऽपि न मे फलप्रसूः ।
अतिथिप्रियसत्क्रिया कृता पुरतः प्राप लयं निरन्वयम् ॥८५॥
परिहाय पुरो धरातलं यदि न त्वं प्रतिवाचमुत्सृजेः ।
तदहं गरलादिसाहसादबला प्राणपशून् विघातये ॥८६॥
अपरं न ममाद्य सान्त्वनं स्वत एवाऽऽसुविनाशनं विना ।
तनयापरिहीणजीवनं मरणादभ्यधिकप्रतापनम् ॥८७॥
इति सा परितः सुनिश्चया मरणोपायचयं विचिन्वती ।
पदवीस्थमपादि पादपं समनह्यद्वसनञ्च साहसात् ॥८८॥
नवपल्लवहस्तचालनैः प्रतिषेधं विदधे महीधरः ।
सितगुः करसङ्गताम्बरो विकटं हासमसौ व्यसर्जयत् ॥८९॥
पवनः प्रववौ समन्ततस्तदिदं वक्तुमिवावनीभुवः ।
दुरितस्य निवर्तने स्पृहा वितता चेतनवर्जितेष्वपि ॥९०॥

एवं स्थिते सपदि कश्चन विप्रमुख्यः
प्राप्तस्तदैव सविधं वणिजः प्रियायाः ।
यस्योपदेशवशतो दुहिता पुरास्या
लीलावती तमनुवीक्ष्य जगाम शान्तिम् ॥९१॥

अथ बहुपरिचर्यालब्धसंज्ञां तनूजां
कथमपि परिपाल्यां मन्यमाना मुहुः सा ।
द्विजवचनविनीता प्रस्थिता तेन साकं
भवनमतनुभोग्यं प्राप्य दीनं न्यसीदत् ॥९२॥

इति श्रीकालीपद-तर्काचार्य-कृते श्रीसत्यानुभावे महाकाव्ये
वणिग्भवनदाहो नाम
द्वादशः सर्गः ॥

———